| अध्यायाः । | विषयाः । |
|---|---|
| १११ | प्रयागमाहात्म्यम् । |
| ११२ | काशीमाहात्म्यम् । |
| ११३ | नर्मदामाहात्म्यम् । |
| ११४ | गयामाहात्म्यम् धर्मव्रतायाः देवमयशिलात्वे हेतुः गदासुरास्थिनिर्मितगदायुधधरो गदाधर इत्यस्य वर्णनं गयाब्राह्मणानां शापः । |
| ११५ | गयायात्राकर्मविध्यादिकम् । |
| ११६ | ,, ,, |
| ११७ | गयादौ श्राद्धपद्धतिः । |
| ११८ | भारतवर्षस्थद्वीपनद्यादिवर्णनम् । |
| ११९ | जम्बुद्वीपादिमहाद्वीपवर्णनं भुवनकोशवर्णनम् । |
| १२० | पृथ्वीविस्तारोच्छ्रायादिमानं खगोलवर्णनं नवग्रहाणां रथाश्वादिसंरूपादिकम् । |
| १२१ | ज्योतिश्शास्त्रम् । |
| १२२ | कालगणनम् । |
| १२३ | युद्धजयार्णवीयनानायोगाभिधानम् । स्वरोदयशनिकूर्मराहुचक्रव्यूहप्रशंसा । विजयप्रदौषधीनां धारणं । वश्यकृदौषधीस्नानतिलकादिकम् । |
| १२४ | युद्धजयार्णवीयज्योतिःशास्त्रसारः । चराचरज्ञानवर्णनम् । ओंकारनिर्देशः । |
| १२५ | युद्धजयार्णवीयनानाचक्राणि । मारणमोहनपातनोच्चाटनमन्त्राः करालीरेवतीभीषणीप्राणहरादीनां यजनचक्राणि । तिथियोगाः शत्रुस्तम्भनमन्त्रः शस्त्रस्तंभनमारणप्रयोगः । |
| १२६ | नक्षत्रनिर्णयः विद्याराज्याभिषेकादिकर्मसु समुचितनक्षत्रविवेचनम् । |
| १२७ | नानाबलानि । उच्चाधःस्थानस्थग्रहादीनां फलं राशीनां चराचरतया शुभाशुभफलनिदर्शनम् । |
| १२८ | कोटचक्रं । तच्चक्रस्थराशिनक्षत्रग्रहाणां सदसत्फलप्रशंसा । |
| १२९ | अर्घकाण्डम् । |
| १३० | मण्डलादिकथनं । वायव्यादिमण्डलप्रभावतः पृथक्पृथग्देशानां सुखासुखकथनम् । |
| १३१ | घातचक्रादिजयचक्रादिवर्णनम् । |
| १३२ | सेवाचक्रं ताराचक्रादि । |
| १३३ | नानाबलानि सूर्यादिमहदशासमुत्पन्नानां सदसद्गुणः फलं च शत्रुपलायनकृद्भैरवमन्त्रः परसैन्यभङ्गप्रयोगः तार्क्ष्यचक्रं शत्रुकृद्द्वितीयभैरवमन्त्रः भङ्गविद्या सर्वकामार्थसाधनीविद्या मृत्युञ्जयकथनम् । |
| १३४ | त्रैलोक्यविजयविद्या होमादिविधानम् । |
| १३५ | संग्रामविजयविद्या । सर्वकामसाधिका रणजयदायिनी जयाख्याविद्या नक्षत्रचक्रम् । |
| १३६ | यात्रादौ शुभफलप्रदत्रिनाडीचक्रं महामारीविद्या । |
| १३७ | विपक्षपक्षक्षपणाय शवपटे देवतास्वरूपोल्लेखप्रकारः अजासृक्संयुक्तनिम्बसमिद्धोमान्मारणं शत्रूणां शत्रूच्चाटनञ्च षट्कर्माणि । |
| १३८ | उच्चाटनकृत्पल्लवः । योगरोधकसंपुटविदर्भादिसंप्रदायाः कुलोत्सादनस्तम्भनवश्याकर्षणाद्यभीष्टकरः परस्यात्मनश्च वार्ताज्ञानकरः यमयजनसहितो होमः दुर्गायजनं । |



॥ ५ ॥

| अध्यायाः । | विषयाः । |
|---|---|
| १३९ | षष्टिः संवत्सराः प्रभवविभवशुक्लादिसंवत्सराणां शुभाशुभफलम् । |
| १४० | वश्यादियोगाः । भृंगराजाद्यौषधीनां तिलकाञ्जनधूपादिभिर्जगन्मोहनस्त्रीवश्यप्रकारः स्त्रीवशंकरीशस्त्रादिस्तम्भनकारिणी गुटिका । |
| १४१ | षट्त्रिंशत्पदकज्ञानम् । ब्रह्मरुद्रादिसेवितामरीकरणौषधीनां वर्णनं नानारोगहरौषधयः मृतसञ्जीवनीयोगः । |
| १४२ | मन्त्रौषधादि गर्भगतजन्तोः पृथक्प्रश्ने अश्वलक्षणादिकथनं ग्रहज्वरभूतादिनिवारकवज्रशृङ्खलामहामन्त्रकथनम् । |
| १४३ | कुब्जिकापूजाविधिः ब्रह्माण्यादिदेवीनामावाहनपुरःसरं कुब्जिकापूजाविधानम् । |
| १४४ | कुब्जिकपूजा सर्वकार्यसिद्धिदाः नानाविधाः कुब्जिकामन्त्रा मालिनीमन्त्राः। |
| १४५ | शैवशाक्तादीनां पृथक्पृथङ्न्यासवर्णनम् आद्याष्टकदेव्यः । |
| १४६ | त्रिखण्डयादिदेवतानां नानामन्त्राः । |
| १४७ | त्वरितापूजादिसर्वोपद्रवादिहरगुह्यकुब्जिकादिदेवतापूजा । |
| १४८ | संग्रामविजयपूजा–दीप्तामोघाविद्युतादिदेवतापूजनम् । |
| १४९ | लक्षकोटिहोमः–होमाद्राज्यप्राप्त्यादिफलं सकलशत्र्वादिप्रणाशनलक्षकोट्यादिहोमफलम् । होमप्रशस्तौषधयः । |
| १५० | मन्वन्तराणि–स्वायंभुवमनोश्चाग्नीध्रादिपुत्राणामुत्पत्तिः तत्र तत्र सप्तर्ष्यादिदेवानामुत्पत्तिवर्णनम् । |
| १५१ | वर्णेतरधर्माः ब्राह्मणादिवर्णानामाचाराः चण्डालादीनामुत्पत्तिः तेषां जीविकावर्णनम् । |



| अध्यायाः । | विषयाः । |
|---|---|
| १५२ | गृहस्थवृत्तिः गृहस्थानां धर्माः । |
| १५३ | ब्रह्मचर्याद्याश्रमधर्माः गर्भाधानादिकालः सीमन्तोन्नयनसमयः जातकर्मादिकथनम् ब्राह्मणादीनामुपनयनम् ब्रह्मचारिधर्माः । |
| १५४ | विवाहः–द्विजस्य ब्राह्मण्यादिचतुर्वर्णभार्याग्रहणेधिकारः क्षत्रियस्य क्षत्रियाद्यास्तिस्रो भार्याः वैश्यस्य द्वे शूद्रस्य तज्जातीया एका भार्येति विवाहभेदः शचीपूजोद्वाहे विवाहे निषिद्धः कालः । शुभकालश्च विवाहे ग्रहानुकूल्यम् । |
| १५५ | आचारः नित्यनैमित्तिकः षोढा स्नानविधानं मन्त्रस्नानम् । पुरुषसामान्यधर्माः । |
| १५६ | द्रव्यशुद्धिः मृण्मयादीनां शुद्धिः । यज्ञभाजनानां परिमार्जनाच्छुद्धिः । गृहादीनां शुद्धिश्च । |
| १५७ | शावाशौचादि–जननमरणे सपिण्डानां दशाहाच्छुद्धिः । क्षत्रियवैश्यशूद्राणां क्रमाच्छुद्धयादि । प्रेतमुद्दिश्य श्राद्धादिकं शूद्रस्यामन्त्रकर्मकथनं नानाशस्त्रैरात्मघातिनां पतितानां वा मरणे सपिण्डेष्वाशौचाभावनिरूपणं ब्राह्मणशूद्रयो रन्योन्यं शवनिर्हरणे दोषाः अनाथद्विजशवनिर्हरणात्स्वर्गलोकप्राप्तिः शवनिर्हरणविधिः अजातदन्तादीनामनग्निसंस्कारः । |
| १५८ | शावाद्यशौचं ब्राह्मणादिनामस्थिचयनादिकालः सपिण्डादीनां मृताशौचम् आत्मघातिनामन्धतमःप्राप्तिः मृतस्य दशाहकर्म मृते पितरि पुत्रादीनां धर्माः पुत्रजन्मदिने कर्तव्यश्राद्धकथनम् आशौचसंपातनिर्णयः । |
| १५९ | गङ्गायामस्थिप्रक्षेपणान्मृतस्य मुक्तिः आत्मघातिनां पतितानामुदकक्रियानिषेधः । एतस्मान्नारायणबलिप्रतिपादनम् । |

| अध्यायाः । | विषयाः । |
|---|---|
| १६० | वानप्रस्थाश्रमवनवासिनां धर्माः । |
| १६१ | प्राजापत्येष्ट्यात्मन्यग्निमारोप्य निलयान्निर्गच्छेदित्यादि । यतिभिक्षापात्राणां निरूपणं पञ्चप्रकाराभिक्षुकवृत्तिवर्णनमहिंसाजनकदोषनिवृत्त्यर्थं प्राणायामादिकथनम् । कुटीचकादिभिन्नत्वेन भिक्षुवृत्तिश्चतुर्विधेतिवर्णनं प्रसंगाद्यमनियमवर्णनं सगर्भागर्भभिन्नत्वेन प्राणायामस्य प्रकारद्वयकथनं पूरककुम्भकरेचकेतिभेदेन भूयस्तयोस्त्रिविधिनिरूपणं यतिविधेयध्यानादीनां कथनम् । |
| १६२ | धर्मशास्त्रनिरूपणम् । प्रवृत्तनिवृत्तभिन्नत्वेन कर्मणः प्रकारद्वयकथनं श्रावण्यां स्वाध्यायानामुपाकर्मविधिवर्णनं सप्तत्रिंशदनध्यायानां निरूपणम् । |
| १६३ | श्राद्धकल्पवर्णनम् । ब्राह्मणभोजनादिनिरूपणम् । दैवपित्र्ययोः क्रमाद्युग्मायुग्मसंख्याकविप्राणामुपवेशनादिनिरूपणं विश्वेदेवास इत्यादिमन्त्रैर्विप्रार्चनविधिकथनम् । पिण्डदानक्रियाकथनम् । वृद्धिश्राद्धनिरूपणम् । एकोद्दिष्टश्राद्धविधिकथनम् । सपिण्डीकरणविधिः संवत्सर सोदककुम्भदानादेः निरूपणं मासिकादिश्राद्धानां विधेयत्वेन कथनम् । श्राद्धदस्य स्वर्गाद्याप्तिफलस्य कथनम् । |
| १६४ | नवग्रहहोमः ताम्रकप्रभृतिधातुभिः ग्रहमूर्तीनां कर्तव्यत्वेन कथनम् ॥ आकृष्णेनत्यादिभिर्मन्त्रैरर्कादिसमिद्भिर्होमविधिकथनम् ॥ धेन्वादीनां दक्षिणासहितदानादिनिरूपणम् । |
| १६५ | नानाधर्माः ॥ ध्यायिने श्राद्धादिकं देयमितिनिरूपणम् । गजच्छायायां श्राद्धादिदाने पितॄणामक्षयातुष्टिरितिकथनम् ॥ योगविधिकथनम् ॥ असवर्णासगर्भिण्याः स्त्रिया दोषत्वनिरूपणम् ॥ गर्भनिर्गमनाद्रजसा नार्याः शुचित्वेन कथनम् ॥ ध्यानेन पापकर्तॄणां शुद्धिः ॥ नैष्ठिकधर्मतत्परस्य व्रतात्प्रच्यवने प्रायश्चित्तहानेर्निरूपणम् ॥ ये भार्यायाः प्रथमं प्रव्रजितास्तद्बीजसन्ततेः विदुरनाम अन्त्यजसंज्ञावर्णनम् ॥ योगस्य महत्त्वेन कथनम् ॥ |
| १६६ | वर्णधर्मादिनिरूपणम् ॥ अष्टचत्वारिंशद्भिः संस्कारैः युक्तस्य ब्रह्मवर्चसप्राप्तिकथनम् गर्भाधानादिसंस्कारवर्णनम् ॥ दयादिगुणाष्टकवर्णनम् । प्रचारादौ मौनविधिकथनम् ॥ उदकादिभिः पंक्तिदोषाभावादिनिरूपणम् ॥ अयुतलक्षकोटिहोमवर्णनम् ॥ ग्रहप्रतिष्ठापनादिरीतिकथनम् । अभिषेकमन्त्रनिरूपणम् ॥ उपयमनोत्सवयज्ञादिषु ग्रहयज्ञस्यावश्यकतानिरूपणम् ॥ कुण्डप्रमाणविधिः ॥ अभिचारकर्मसु त्रिकोणकुण्डस्य विधिः अभिचारकर्मवर्णनम् ॥ पिष्टरूपस्य शत्रोः क्षुरेण च्छेदनादिविधिः ॥ |
| १६७ | महापातकादिकथनम् । मत्तकुपिताद्यन्नादननिषेधः ॥ पण्यकृतान्नस्यादनं निषेधः ॥ अभिशस्ताद्यन्ननिषेधवर्णनं ॥ वृषलनिमन्त्रितविप्रान्नं न भोज्यमिति निरूपणम् ॥ एषामन्नाशने प्रायश्चित्तवर्णनम् ॥ अन्त्यजश्वपचान्नाशने चान्द्रायणप्रभृतिवर्णनम् । मृतपञ्चनखकूपोदकपानोल्लंघनवर्णनम् ॥ शूकररासभोष्ट्रादीनां मूत्रशकृदशने चान्द्रायणनिरूपणं गोमनुष्यकुक्कुरादीनां पलाशनं तप्तकृच्छ्रादिप्रायश्चित्तवर्णनम् । ब्रह्महिंसादिमहादोषवर्णनम् ॥ ब्रह्महिंसासमानदोषकथनम् ॥ उपपातकवर्णनम् ज्ञात्युत्पातकरादिनिरूपणम् ॥ |
| १६८ | प्रायश्चित्तानि ॥ ब्रह्महिंसाप्रायश्चित्तवर्णनं ॥ गोहिंसादिप्रायश्चित्तवर्णनम् ॥ अवकीर्णिनश्चान्द्रायणादिविधिः ॥ मद्यपानप्रायश्चित्तवर्णनं ॥ कनकस्तस्करप्रायश्चित्तं ॥ गुरुशय्याशयने प्रायश्चित्तं ज्ञातिपातितानां प्रायश्चित्तानि ॥ |

| अध्यायाः । | विषयाः । |
| --- | --- |
| | मार्जारादिहत्यायां प्रायश्चित्तं स्वल्पसारद्रव्याहरणे प्रायश्चित्तम् ॥ भक्ष्यभोज्यादिस्तेये प्रायश्चित्तम् अभोग्यस्त्रीभोगे प्रायश्चित्तम् ॥ |
| १६९ | प्रायश्चित्तानि ॥ पातकिसंसर्गे प्रायश्चित्तवर्णनम् ॥ पतितस्य जलदानादिनिरूपणम् ॥ अग्राह्यप्रतिग्रहप्रायश्चित्तम् श्वशृगालादिदंशने प्रायश्चित्तम् ॥ अविज्ञात-अन्त्यजादिसदने स्थितेस्तु सम्यज्ज्ञातान्त्यजादिकस्य प्रायश्चित्तवर्णनम् । म्लेच्छैः प्रसानां प्रायश्चित्तवर्णनम् ॥ अन्त्योदक्यया स्पृष्टाया उदक्यायाः प्रायश्चित्तवर्णनम् ॥ पदत्राणस्पृष्टश्वादीनां प्रायश्चित्तादिवर्णनम् ॥ |
| १७० | प्रायश्चित्तानि ॥ रहस्यादिप्रायश्चित्तवर्णनम् । सकलकृच्छ्रेषु मुण्डनादिप्रकारः ॥ वीरासनलक्षणकथनम् । यतिचान्द्रायणलक्षणकथनम् । बालकचान्द्रायणदेवचान्द्रायणलक्षणकथनम् । तप्तकृच्छ्रलक्षणकथनम् ॥ कृच्छ्रातिकृच्छ्रलक्षणकथनम् । कृच्छ्रसांतपनलक्षणम् ॥ महासान्तपनलक्षणम् ॥ अतिसान्तपनलक्षणम् ॥ तप्तकृच्छ्रादिवर्णनम् ॥ ब्रह्मकूर्चलक्षणम् ॥ |
| १७१ | सर्वपापप्रायश्चित्तानि ॥ हरेः पापप्रणाशनस्तोत्रवर्णनम् । |
| १७२ | प्रतिपाद्यविषयाः ॥ प्रायश्चित्तम् ॥ ब्रह्मघातस्वरूपवर्णनम् ॥ ब्रह्महत्यादीनां प्रायश्चित्तानि ॥ यष्टिकादिभिर्गोताडने सान्तपनादिवर्णनम् ॥ रेतोविण्मूत्राशनस्य प्रायश्चित्तम् ॥ नरहरणादिदोषाणां प्रायश्चित्तानि । |
| १७३ | प्रायश्चित्तानि ॥ सुराश्रमार्चनादीनां नष्टे प्रायश्चित्तानि ॥ अघनाशनायान्नदानादिकथनम् ॥ गङ्गादीनां पापप्रणाशकत्वेन वर्णनम् ॥ अघापनोदकानां वाराणस्यादिक्षेत्राणां वर्णनम् ॥ |
| १७४ | व्रतपरिभाषा ॥ व्रतनिषेधद्रव्यवर्णनम् । असकृदुदकपानादिभिर्व्रतभङ्गः ॥ सर्वव्रतसाधारणधर्मकथनम् ॥ व्रतग्राह्यपदार्थकथनम् ॥ व्रते कूष्माण्डादीनां निषेधकत्वेन वर्णनम् ॥ प्रसङ्गात्प्राजापत्यातिकृच्छ्रसांतपनमहासान्तपनपराकचान्द्रायणानां लक्षणम् ॥ ब्रह्मकूर्चलक्षणवर्णनम् ॥ अधिमासेऽग्न्याधेयादीनां निषेधकत्वेन निरूपणम् ॥ चान्द्रमासादीनां कथनम् ॥ अपरपाक्षिकश्राद्धस्य विधेयत्वेन वर्णनम् ॥ गर्भिणीसूतिकारजस्वलादीनां यद्यशुद्धिस्तदा व्रतादीन्यन्येन कुर्यादितिवर्णनम् ॥ कुपितादिना व्रते नष्टे प्रायश्चित्तम् । व्रतसंसिद्धये विष्णोः स्तुत्यादिकथनम् ॥ केशवार्चनं पुनः ॥ व्रताङ्गविप्रभोजनादिकथनम् ॥ |
| १७५ | प्रतिपद्व्रतानि ॥ पञ्चदश्यामुपवासपूर्वकं प्रतिपदि ब्रह्मपूजनविधिः ॥ सलक्षणहैमब्रह्मार्चनम् ॥ शक्त्या ब्रह्मणे पयःप्रदानवर्णनम् । व्रतजनकफलवर्णनम् ॥ मार्गशीर्षप्रतिपदि शिखिव्रतम् ॥ |
| १७६ | द्वितीयाव्रतानि ॥ द्वितीयायामश्विनीकुमारार्चनम् ॥ ऊर्जशुक्लपक्षे द्वितीयायां यमपूजनम् ॥ नभसि कृष्णपक्षे द्वितीयायाम् अशून्यशयनव्रतस्य विधेयत्वेन वर्णनम् ॥ अशून्यशयनव्रतप्रकारकथनम् ॥ ऊर्जशुक्लपक्षे कान्तिव्रतम् ॥ तद्व्रतविधानं च । पौषशुक्लद्वितीयायां विष्णुव्रतम् ॥ तद्व्रतविधानकथनं च ॥ |
| १७७ | तृतीयाव्रतानि ॥ चैत्रशुक्लतृतीयायां मूलगौरीव्रतम् ॥ तद्व्रतविधिकथनञ्च ॥ शुक्लपक्षे नभस्यवैशाखमार्गशीर्षेष्वप्येतद्व्रतविधिः ॥ फाल्गुनादितृतीयायां सौभाग्यव्रतादिनिरूपणम् ॥ |
| १७८ | चतुर्थीव्रतानि ॥ माघशुक्लचतुर्थ्यां विनायकव्रतम् ॥ तन्मन्त्रवर्णनम् ॥ विनायकार्चनविधिश्च । |

| अध्यायाः । | विषयाः । |
|---|---|
| | भाद्रपदे चतुर्थीव्रतम् ॥ अङ्गारकचतुर्थीव्रतवर्णनञ्च ॥ |
| १७९ | पञ्चमीव्रतानि ॥ श्रावणादिमासे सिते पक्षे पञ्चम्यां वासुक्यादीनामर्चनम् । । |
| १८० | षष्ठीव्रतानि ॥ कार्तिकादौ षष्ठीव्रतविधिः ॥ भाद्रपदे स्कन्दषष्ठीव्रतम्- ॥ मार्गशीर्षे कृष्णषष्ठीव्रतञ्च ॥ |
| १८१ | षष्ठीव्रतानि ॥ ऊर्जप्रभृतौ षष्ठीव्रतविधिः ॥ भाद्रपदे स्कन्दषष्ठीव्रतम् मार्गशीर्षे कृष्णषष्ठीव्रतम् । |
| १८२ | सप्तमीव्रतानि ॥ माघादौ सिते रव्यर्चनम् । |
| १८३ | अष्टमीव्रतानि ॥ कृष्णाष्टमीव्रतम् ॥ रोहिणीयुक्ताय चन्द्रमसेऽर्घ्यदानकथनम् । व्रतपूजानिरूपणम् व्रतमाहिमकथनम् ॥ |
| १८४ | अष्टमीव्रतानि ॥ चैत्रकृष्णाष्टम्यां कृष्णाष्टमीव्रतम् मार्गशीर्षकृष्णाष्टम्यां त्रिव्रतम्॥ पौषमासादौ शम्भुव्रतम् तद्विधिश्च । बुधाष्टमीव्रतम् । बुधाष्टमीकथा । पुनर्वसावशोकरसपानविधिश्च । |
| १८५ | नवमीव्रतानि ॥ आश्विनसिते पक्षे नवमीव्रतम् ॥ रुद्रचण्डादिदेवानामर्चनम् ॥ आयुधार्चनम् ॥ पशुवधविधिः ॥तच्छोणितेन पूतनादिदेवतानां संतर्पणम् ॥ तत्पुरतः पिष्टमयारिपोर्हननम् । तद्वचनकथनम् ॥ जयन्त्यादीनुद्दिश्य बलिदानम् ॥ |
| १८६ | दशमीव्रतम् ॥ |
| १८७ | एकादशीव्रतम् ॥ एकादश्यां विष्णुपूजादिकथनम् ॥ |
| १८८ | द्वादशीव्रतानि ॥ चैत्रशुक्लद्वादश्यां मन्मथद्वादशीव्रतम् ॥ माघशुक्लद्वादश्यां वृकोदरद्वादशीव्रतम् ॥ फाल्गुनशुक्लद्वादश्यां गोविंदद्वादशीव्रतम् । आश्विनशुक्लद्वादश्यां विशोकद्वादशीव्रतम् मार्गशीर्षद्वादश्यां मधुसूदनं संपूज्य लवणदानम् । प्रोष्ठपदे गोवत्सद्वादशीव्रतम् । श्रवणयुक्तद्वादश्यां तिलद्वादशीव्रतम् । फाल्गुने सिते पक्षे मनोरथद्वादशीव्रतम् केशवादिनामभिर्नामद्वादशीव्रतम् । भाद्रपदे शुक्ले अनन्तद्वादशीव्रतम् । पौषशुक्लद्वादश्यां संप्राप्तिद्वादशीव्रतम् । |
| १८९ | श्रावणद्वादशीव्रतं । भाद्रपदशुक्लद्वादश्यां श्रवणद्वादशीव्रतम् । वामनद्वादशीव्रतम् । तत्पूजाविधिः । |
| १९० | अखण्डद्वादशीव्रतं मार्गशीर्षशुक्लद्वादश्यामखण्डद्वादशीव्रतं द्वादश्यां नानाधान्ययुतपात्रदानम् । मध्वादिमासेष्वपि सक्तुपात्रादिदानम् ॥ |
| १९१ | त्रयोदशीव्रतानि । मार्गशीर्षशुक्लत्रयोदश्यामनङ्गत्रयोदशीव्रतं पौषादिमासेषु योगेश्वरादिपूजनम् । आश्विनेऽमराधीशपूजनम् । कार्तिके विश्वेश्वरपूजनम् । वर्षान्ते शिवस्य हिरण्मयप्रतिमादानम् । |
| १९२ | चतुर्दशीव्रतानि कार्तिके शुक्लचतुर्दश्यां महेश्वरपूजा शुक्लासितपक्षयोश्चतुर्दश्यष्टम्योः शिवपूजाविधिः । अनन्तचतुर्दशीव्रतं । शालिप्रस्थपिष्टस्यापूपनिर्माणादिकम् । |
| १९३ | शिवरात्रिव्रतम् । माघकृष्णचतुर्दश्यां शिवरात्रिव्रतम् । |
| १९४ | अशोकपूर्णिमादिव्रतं फाल्गुन्यामशोकपूर्णिमाव्रतं कार्तिक्यां वृषोत्सर्गादिवृषव्रतं माघपूर्णिमायां पद्मजार्चनं । ज्येष्ठपञ्चदश्यां सावित्रीपूजनम् । तद्व्रतविधिः । |

यायाः । विषयाः ।


१९५ वारव्रतानि हस्तर्क्षे सूर्यवारव्रतम् । नक्ते नान्दिव्रतं चित्रभे सोमवारव्रतं । स्वात्यां भौमव्रतं । विशाखायां बुधव्रतम् । अनुराधायां गुरुवारव्रतं ज्येष्ठायां शुक्रवारव्रतं मूले शनैश्चरव्रतम् ।

१९६ नाक्षत्रव्रतादि । मूलादौ विष्णुपादादिपूजनं । कार्त्तिके कृत्तिकायां केशवायाद्वाभिः पद्मनाभपूजनं । कार्तिकादिमासचतुष्टयेन्नदानकर्तव्यता । फाल्गुनादिमासचतुष्टये कृशरदानम् । आषाढादौ पायसदानं । नक्षत्रव्रतस्य अनंतव्रतकथनं । मासचतुष्टयपर्यंतमनन्तनिमित्तं होमविधिराज्येन चैत्रादौ शालिना होमादेः कर्तव्यता ।

१९७ दिवसव्रतानि । धेनुपयःकल्पवृक्षव्रतम् । त्रिरात्रव्रतमहिमा कार्तिकशुक्लदशम्यां शिखिवाहनव्रतं । चैत्रे त्रिरात्रादिव्रतम् ।

१९८ मासव्रतानि आषाढादिमासचतुष्टयव्रतं वैशाखव्रतम् । माघे चैत्रे च गुडधेनुदानम् । मार्गशीर्षादिमासेषु नक्तव्रतम् । मासादित्यागाद्व्रिमत्वादिमाप्तिः आश्विने कौमुदव्रतं कौमुदव्रतफलम् ।

१९९ वर्षाकालइन्धनादिव्रतं सन्ध्यायां मौनव्रतम् । तिलघण्टावस्त्रदानादिव्रतानि संक्रांतिव्रतम् उमाव्रतादिकम् ।

२०० दीपदानव्रतं दीपदानमाहात्म्यम् । दीपदानेन विदर्भराजदुहितुर्ललितायाराजपत्नीत्वप्राप्तिः ।

२०१ नवव्यूहार्चनं । वासुदेवादिबीजानां पृथग्दिक्ष्वावाहनं । तेषामर्चनम् ।

२०२ पुष्पाध्यायकथनम् । नानाविधविष्णुपूजनम् । देवयोग्यान्ययोग्यानि वा पृथक्कुसुमानि । तेन सदसल्लोकप्राप्तिः । पुष्पप्रशंसा ।

अध्यायाः । विषयाः ।

२०३ अथ नरकस्वरूपम् । गोघात्यादिदुष्टजन्तूनां महावीचितामकुम्भादिनरकेषु क्षेपणं । महापापिनां नानाविधप्रहरणैर्हननम् ।

२०४ मासोपवासव्रतम् । तत्र मृषालापादिदूरीकरणम् । द्विजपूजनम् । तेभ्यो दानानि ।

२०५ भीष्मपञ्चकव्रतम् । तत्रदेवपितृतर्पणम् ।

२०६ अगस्त्यार्घ्यदानकथनम् । साघ्यागस्त्यस्तवनम् ।

२०७ अथकौमुदव्रतम् ।

२०८ व्रतदानादिसमुच्चयः । ग्रहणादौ व्रतफलम् ।

२०९ दानपरिभाषाकथनम् । वापीकूपादिनिर्माणतः मोक्षप्राप्तिवर्णनम् । अग्निहोत्रवेदादिपरिपालनान्मुक्तिकथनम् । गंगादितीर्थेषु दानप्रकारः । पृथग्वर्णाचार्यब्राह्मणेभ्यो दत्तदानफलं । नानाविधेषु द्रव्येषु विष्ण्वादिदेवस्वरूपनिरूपणं । कृतादियुगेषु दानविधानम्

२१० महादानानि तुलापुरुषादिषोडशदानानि गुडघृतादीनि तनानाविधानि दानानि । तद्विधिः । तत्फलम् ।

२११ नानादानानि–गोसहस्रदानतः सौवर्णप्रासादादिस्थगन्धर्वैः स्तूयमानत्वकथनम् ॥ गृहमठसभादीनां नानाविधानि दानानि तत्फलञ्च । गजाश्वादिदानम् अन्नदानमहिमा ।

२१२ मेरुदानानि नानाविधान्नदानानि भिन्नभिन्नधातुविहितमेरुदानं रत्नमेरुदानं च ।

२१३ पृथिवीदानादि पृथिव्याः पृथग्दानादि ।

२१४ मन्त्रमाहात्म्यकथनं दशनाडीवर्णनं तत्स्थानानि प्राणानां निरूपणम् तत्कार्य

| अध्यायाः । | विषयाः । |
|---|---|
| | पृथगवयवेषु ब्रह्मादिदेवानां स्थापनं ह्रस्वदीर्घादिमासादधारणफलम् । |
| २१५ | सन्ध्याविधिः आकारमाहिमावर्णनं गायत्रीप्रशंसा तस्या अयुतलक्षादिजपात्सिद्धिकथनम् । |
| २१६ | गायत्रीनिर्वाणं संध्याते गायत्रीजपः भूरादिव्याहृतिवर्णनम् । |
| २१७ | पुनः गायत्रीनिर्वाणं कनकादिलिङ्गरूपिमहादेवस्य स्तुतिः । वसिष्ठवरप्रदानम् । |
| २१८ | राजाभिषेकवर्णनं क्षत्रियादीनां रूप्यादिकुंभाभिषेचनम् । |
| २१९ | अभिषेकमन्त्राः ब्रह्माद्यभिषेकमंत्राः आदित्याद्यभिषेकमंत्राः स्वायंभुवादिमनूनामभिषेकमंत्राः । |
| २२० | सहायसम्पत्तिः राज्ञा करणीयसेनापतिसजातिलक्षणं सभासदलक्षणं धर्मसंग्रामादिकार्येषु नियोज्याः पुरुषाः दुष्टादुष्टाश्रयणं भृत्यानां परीक्षा शुभाशुभज्ञानम् । |
| २२१ | अनुजीविवृत्तं भृत्यकृत्यम् । |
| २२२ | दुर्गसम्पत्तिः नृपकृत्यं धनुरादिदुर्गनिर्माणं पुररचना राजरक्षा गोब्राह्मणप्रतिपालनादीनि राजकृत्यानि । |
| २२३ | राजधर्माः ग्रामाधिपतिकृत्यं प्रजारक्षणप्रकारः दण्ड्यादण्ड्यत्वादिराजकृत्यानि । |
| २२४ | राजधर्माः । अत्यन्तासक्तित्वेन स्त्रीसेवाशरीरारोग्यकराणि कार्याणि सेव्यासेव्यस्त्रीलक्षणकथनं कपित्थादिकर्माष्टकम् अनंगवर्द्धनो धूपः स्नानद्रव्यकथनं कन्दर्पवर्द्धनस्नानं नानाविधौषधीवर्णनम् । |



| अध्यायाः | विषयाः । |
|---|---|
| २२५ | राजधर्माः । सर्वाधिकारेषु योजनीयपुरुषः नृपेण त्याज्यानि कर्माणि । मित्रलक्षणं। सप्ताङ्गं राज्यं नानाविधान्यन्यानि राजकृत्यानि। |
| २२६ | सामाद्युपायकथनं। सामवर्णनं दानफलं राज्ञो दंड्यादण्ड्ययोरविचारित्वेन दोषप्राप्तिः । |
| २२७ | दण्डप्रणयनम् । मापकर्षादीनां मानं सुवर्णादीनां स्तैन्ये पृथग्विधो दण्डः । ब्राह्मणक्षत्रियादीनां पृथग्दण्डः गोगजाश्वघातिनां दण्डश्चान्यदण्ड्यदण्डाः । |
| २२८ | युद्धयात्रा यात्रायै गम्यागम्यदिशः शरीरस्फुरणादीनि शकुनानि । |
| २२९ | स्वप्नः शुभाशुभः । दुःस्वप्नहरणकथनम् अथान्यस्वप्नवर्णनं तच्छान्तिः शोभनानि स्वप्नानि । |
| २३० | शकुनानि । प्रयाणकाले शुभाशुभशकुनानि विष्णुपूजयाऽमङ्गलनाशः श्वेतादिपुष्पाणां शुभत्वम् । |
| २३१ | शकुनानि । शकुनषट्प्रकाराः सदसत्फलप्रदानि शकुनानि गवोष्ट्रादीनां ग्रामवासित्वं भारद्वाजसारङ्गादीनां दिवाचरत्वम् उलूकशरभादीनां रात्रिचरत्वम् मृगमार्जारवृकादीनां शुभप्रचारित्वं तेषां पुरतः पृष्ठतः पार्श्वतो वा विनिर्गमेन शुभाशुभफलम् |
| २३२ | शकुनानि । युद्धप्रयाणे पुरतः शुभाशुभफलपिशुनशकुनानि । |
| २३३ | यात्रामण्डलचिन्तादियात्रायां निषिद्धः कालः शोभनदिवसाः छायामानम् राज्यसप्ताङ्गमण्डलरचनावर्णनम् । |
| २३४ | षाड्गुण्यं दण्डद्वैविध्यं शत्रोरुद्वेजनम् इन्द्रजालकथनम् । |

अध्यायाः । विषयाः ।


२३५ राज्ञोदिनचर्या । अजस्रकर्मकथनं स्नानसन्ध्यादिपित्रर्चनादीनि प्रत्यहं करणीयानि कार्याणि राज्ञाम् ।

२३६ अनेकविषयाः राज्ञो यात्राः प्राक्सप्ताहपर्यन्तं पृथग्देवतानां पूजनं मोदकादिभिर्गणेशादिदेवपूजनम् राज्ञो विजयस्नानं । सप्तमेह्नि त्रिविक्रमपूजनं संग्रामगमनविधिः दशव्यूहप्रतिपादनं चमूनिवेशनादियुद्धधर्मः विजयप्राप्तौ गोदेवद्विजानां पूजनं रणान्मुक्तशत्रोः पुत्रवत्पालनम् ।

२३७ श्रीस्तोत्रम् इन्द्रकृतेन्दिरास्तुतिवर्णनं वरप्राप्तिः पाठकर्तृफलप्रशंसा ।

२३८ न्यायार्जनादिवृत्तचतुष्टयम् । विनयप्रशंसा सम्पत्तिहेतवः गुणाः कामक्रोधादिवर्जनम् आन्वीक्षिक्यादिनार्थविज्ञानप्रकारः वर्णिनां सामान्यो धर्मः राज्ञः कृत्यम् ।

२३९ पुनाराजधर्माः । राज्यसप्ताङ्गसाधुभूपगुणाः आत्मसंपद्गुणाः मित्रसंग्रहः भृत्यवृत्तं वर्गाष्टकपरिपालनादिकथनम् ।

२४० पुनः षाड्गुण्यम् । द्वादशराजकमण्डलनिर्माणं संधिविग्रहादिवर्णनं बालवृद्धादिषु संध्यभावः सापत्न्यादिभेदेन वैरपञ्चवैध्यं । विग्रहावसरः यानस्य पञ्चविधत्वम् ।

२४१ सामादिपञ्चांगमन्त्रः कर्मसिद्धिलक्षणं त्रिविधो दूतः पञ्चविधं दैवम् अमात्यकर्मव्यसननिगर्हणं सचिवव्यसनकथनं दुर्गव्यसनं कोशव्यसनं बालव्यसनं पञ्चविधदानविधिः शत्रूणां भयायेन्द्रजालादिनिर्माणकथनम् ।

२४२ राजनीतिसेनारचनादियुद्धधर्मः । सैन्यविभागेन व्यूहादिरचना । गोमूत्रिकादिव्यूहवर्णनं गोमूत्रिकादिव्यूहलक्षणम् ।

२४३ पुरुषलक्षणं सुलक्षण्यः पुरुषः त्रिविनतः पुरुषः ।

२४४ स्त्रीलक्षणं सुलक्षण्या स्त्री ।

२४५ भद्रासनलक्षणं चामरछत्रादिलक्षणम् । त्रैलोक्यमोहनमन्त्रैर्धनुःखड्गपूजनविधानं खड्गधनुर्लक्षणं खड्गास्यं नालोकयेदित्यादिधर्माः ।

२४६ रत्नपरीक्षा नृपधार्यरत्नानां निरूपणं वज्रधारणं वज्रलक्षणं मौक्तिकादिपरीक्षणम् इन्द्रनीलादिमणयः ।

२४७ वास्तुलक्षणम् । वास्तुकर्मणि समुचिता पृथिवी स्नातस्य परितो महेन्द्रादिदेवतावाहनम् ।

२४८ पुष्पादिपूजाफलम् ।

२४९ धनुर्वेदः । धनुर्वेदपञ्चविधत्वं मन्त्रमुक्तलक्षणं समपदस्थादीनां लक्षणानि बाणधारणप्रकारः ।

२५० धनुर्वेदकथनम् । धनुर्विद्याभ्यासः । वेधप्रवर्तनविधानम् ।

२५१ धनुर्वेदकथनम् । धनुर्विद्यामाश्रित्य वाहनारोहणादिविधानम् ।

२५२ धनुर्वेदकथनम् । खड्गचर्मादिशस्त्रधारणम् भ्रान्तोद्भ्रान्तादिभेदेन नानाजातीयप्रकारवर्णनम् ।

२५३ नयानयादिविचारः । निक्षेपादिलक्षणं मूल्येन पण्यं विक्रीय यत्र केनेण दीयते इत्यादिविवादपदवर्णनम् ।

२५४ व्यवहारकथनमृणप्रत्यर्पणादिविषयः ।

२५५ दिव्यप्रमाणकथनं साक्षिलक्षणादि कूटसाक्षिणः पातकादिकम् तरण्डप्रणयन-

| अध्यायाः । | विषयाः । |
|---|---|
| | प्रकारः लेख्यकृतऋणदेयत्वम् सत्यपरीक्षणार्थं सप्तस्वश्वत्थपत्रेषु सूत्रैर्लोहमग्निमयः पिण्डधारणादिकथनम् । |
| २५६ | दायविभागकथनं पित्रोरूर्ध्वमृक्थमृणं पुत्राः समं विभजेयुरित्यादि । विद्यप्राप्तद्रविणविभागःऔरसादिपुत्रभेदः धनाधिकारिणः स्त्रीधनादिकम् स्त्रीधनाधिकारिणश्च दौर्बल्यादिदशायां भर्त्रा गृहीतस्त्रीधनं तस्यै पुनर्दातुं नार्हतीतिकथनम् । |
| २५७ | सीमाविवादादिनिर्णयःमृषासीमाविवादे दण्डप्रणयनादिकं सस्यघातकारिणां महिष्यादीनां दण्डनीयत्वं किङ्कराणां वेतनादिकम् । |
| २५८ | वाक्पारुष्यादिप्रकरणं मिथ्यापशब्दवाचिनां नानाविधदण्डप्रणयनादिकम् । |
| २५९ | ऋग्विधानम् गायत्रीजपादिविधिः अग्निमीळे पुरोहितमितिजपन्सकलाभीष्टकामानाप्नोतीत्यादिकम् । |
| २६० | यजुर्विधानं होमाद्यनेकविधानुष्ठानविधानं तदनुष्ठानफलम् । |
| २६१ | सामविधानं व्रत इन्द्रभयामह इत्यादि जपाद्धिंसादोषनिवारणफलकथनं सर्पसामप्रयुञ्जानस्य सर्पभयाभावबोधः पृथग्विधानुष्ठानविधिः तत्फलं च । |
| २६२ | अथ विधानं होमादिविधिः । |
| २६३ | उत्पातशान्तिः श्रीसूक्तजपेन श्रियाः प्राप्तिः अमृताभयादिशान्तीनां सर्वोत्पातनाशनत्वम् । उल्कापातादिशान्तिः अकालविकृतप्रसवादीनां शान्तिः आकाशतुमुलनादादीनां शान्तिकथनम् । |
| २६४ | देवपूजा वैश्वदेवबलिविष्णुपूजनं होमनिरूपणं देवताभ्यः बलिदानादिकथनं पिण्डनिर्वपणविधानादि । |
| २६५ | दिक्पालादिस्नानं देवतालयादिषु स्नानात्पृथक्फलप्राप्तिवर्णनम् । पुनर्नवादिभिरुद्वर्तनपूर्वकस्नानाचरणं मण्डले विष्ण्वादिदेवतापूजनपूर्वकहोमविधिः कुम्भे औषधीनिःक्षेपणादिविधिकथनम् । |
| २६६ | विनायकस्नानं दुःस्वप्नदर्शनदोषादिनाशनाय स्नानविधिकथनं स्त्रीणामनपत्यादिदोषनाशकस्नानम् । होमादिविधिः । |
| २६७ | माहेश्वरस्नानलक्षकोटिहोमादयः नृपाणां विजयप्रदमाहेश्वरस्नानम् । मन्त्रपूर्वकहोमविधिः शूलपाणिपूजनम् । घृतादिस्नानैरायुर्वृद्धिः । विष्णुपादोदकस्नानमहिमा । अवक्रन्दतिसूक्तेन करे मणिबन्धादिप्रकारः । घृतादिभिर्विष्णोः स्नानम् । धूपादिभिस्तत्पूजनं लक्षकोटिहोमप्रतिपादनम् । |
| २६८ | नीराजनविधिः जन्मनक्षत्रे राजपूजनम अगस्त्योदयेऽगस्त्यपूजनं चातुर्मास्ये विष्णुपूजनम् शयनोत्थापने पञ्चदिनोत्सवादिकरणीयत्वं नभस्ये सितपक्षे शक्रध्वजस्थापनपूर्वकं शचीपूजनं पद्मजादिस्तुतिः । भद्रकालीपूजनं नीराजनादिविधिः । |
| २६९ | छत्रादिप्रार्थनामन्त्राः । |
| २७० | विष्णुपंजरं विष्णोश्चक्रगदाद्यायुधवर्णनं यक्षयातुधानादिनाशनविष्णुस्तुतिः । |
| २७१ | वेदशाखादिकथनम् ऋग्वेदादिमन्त्रप्रमाणं तच्छाखाभेदः समग्रपुराणेष्वाग्नेयश्रैष्ठ्यम् । |
| २७२ | पुराणदानादिमाहात्म्यं ब्राह्मादिपुराणश्लोकसंख्योक्त्या दानप्रक्रमः । |
| २७३ | सूर्यवंशकीर्तनं ब्रह्मपुत्रमरीचेः कश्यपोत्पत्तिस्तत्पुत्रो विवस्वांस्ततः सूर्यवंशीयाः नृपाः । |
| २७४ | सोमवंशवर्णनम् । विष्णुनाभिपद्माद्ब्रह्मोत्पत्तिस्तत्पुत्रोऽत्रिस्तदात्मजसोमकृ- |

| अध्यायाः । | विषयाः । |
|---|---|
| | तराजसूयावभृथे सोमरूपदर्शनेन लक्ष्म्यादिनवदेवीनां मोहनत्वम् । गुरोर्बृहस्पतेर्भार्याहरणं सोमाङ्गिरःसुतयोर्युद्धं बृहस्पतेः पत्न्याः सोमपुत्रबुधोत्पत्तिः ततस्तद्वंशीयनृपवर्णनम् । |
| २७५ | यदुवंशवर्णनं यदोः सहस्रजिदादीनामुत्पत्तिः स्यमन्तकोपाख्यानं पांडवानामुत्पत्तिः । |
| २७६ | द्वादशसंग्रामाः देवक्यां वासुदेवोत्पत्तिः समासतः कृष्णचरितवर्णनं नारसिंहादीनां द्वादशसंग्रामवर्णनम् । |
| २७७ | राजवंशवर्णनं तुर्वसोर्वर्गादीनामुत्पत्तिः । |
| २७८ | पुरुवंशवर्णनम् पूरोर्जनमेजयादीनामुत्पत्तिः शंतनोर्गङ्गायां भीष्मोत्पत्तिः । |
| २७९ | सिद्धौषधानि अधस्ताद्गते ज्वरे वमनमूर्ध्वंगते विरेचनमिति ज्वरादिरोगनिवृत्तौ सिद्धौषधयः । वातव्याध्यादिग्रस्तानां तक्रारिष्टादेर्हितत्वम् । |
| २८० | सर्वरोगहराण्यौषधानि शरीरमानसागन्तुकादिरोगाणां वर्णनं तेषां परिहरणाय सूर्यवारादौ घृतगुडादिदानानि शिशिरादिऋतूनां धर्माः । रोगसमुद्भवनिदानं वातादिप्रकृतीनां लक्षणम् । |
| २८१ | रसादिलक्षणम् । कषायकल्पनादिकम् । कषाये द्रव्यपरिमाणम् । लेह्यचूर्णगुणाः । निदाघादावंगमर्दनादिविधानम् । अजीर्णे श्रमनिषिद्धत्वं व्यायामादितः कफनाशनादिगुणोत्पत्तिः । |
| २८२ | वृक्षायुर्वेदः । उत्तरादिदिक्षु प्लक्षादिवृक्षाणां शुभत्वं ब्राह्मणचन्द्रपूजनपूर्वकं वृक्षरोपणविधिः द्रुमरोपणे शस्तनक्षत्राणि अशोकादिवृक्षाणां घर्मान्ते सायमुष्णसेचनं शीतकाले सूर्योदयानन्तरमित्यादिवृक्षाणां फलपुष्पादिसमृद्धये विडंगघृतादिद्रव्यैः सेचनादिविधानम् । |
| २८३ | नानारोगहराण्यौषधानि सर्वेष्वतिसारेषु सिंहीसटीत्यादिभिर्निर्मितकषायसत्रादिकम् बालरोगहराण्यौषधानि । गुदाङ्कुरे तक्रादिपेयत्वकथनम् मूत्रकृच्छ्रादिनाशककाथादिनिरूपणम् । |
| २८४ | मन्त्ररूपौषधकथनम् ओंकारादिमन्त्रैरायुरारोग्यवर्द्धनादिवर्णनम् । |
| २८५ | मृतसञ्जीवनकरसिद्धयोगः मरुज्ज्वरादौ बिल्वादिपञ्चमूलस्य क्वाथादिकम् । गण्डमालादितैलादिवर्णनम् । स्त्रीणां प्रदरादिनाशकौषधानि दिनरात्र्यन्धयोर्हितकरगुटिकाञ्जनादिकथनम् । |
| २८६ | मृत्युञ्जयकल्पाः सकलव्याधिनाशनत्रिकट्वादिचूर्णकथनम् कुष्ठनाशनकाथा अमिताक्षरकराणि तैलानि । |
| २८७ | गजचिकित्सा । गजलक्षणानि गजरोगहराण्यौषधानि । मदहीनमातङ्गस्य पयःपानादिविधानम् गजनेत्रयोश्चक्रादिपूरीषालनम् । |
| २८८ | अश्ववाहनसारः । हयारोहणेऽश्विन्यादिनक्षत्राणां प्राशस्त्यम् । अश्ववदनताडननिषेधः अश्ववपुषि ब्रह्मादिदेवतायोजनप्रकारः अश्वप्रार्थना अश्वारोहदिशावर्णनम् मक्षिकादिदंशनिवारणाय वालेपप्रकारः गुणविशेषदर्शनेनाश्वपुष्टिनातित्वकथनम् । |
| २८९ | अश्वचिकित्सा । अश्वलक्षाणि अश्वातिसारादिनाशकक्वाथादिकम् । दाडिमत्रिफलादिभिरश्वपोषकत्वम् अश्वशोथादिनाशकावलेपाः । |
| २९० | अश्वशान्तिः । वाजिव्याधिविनाशनशान्तिप्रयोगः । |
| २९१ | गजशान्तिः । मातङ्गव्याधिविनाशनशान्तिप्रयोगः । |

| अध्यायाः । | विषयाः । |
|---|---|
| २९२ | गवायुर्वेदः । गोशकृदादिमाहात्म्यम् गोग्रासफलम् महासान्तपनतप्तकृच्छ्रादिव्रतवर्णनम् गोषु देवादिस्वरूपकथनम् धेनुरोगनाशनौषधयः । |
| २९३ | मन्त्रपरिभाषा । मन्त्रभेदाः स्त्रीपुंनपुंसकत्वेन मन्त्रत्रैविध्यम् । रूपादिमन्त्रलक्षणादिकं गुरुलक्षणम् । शिष्यलक्षणम् । कपटेन गृहीतमन्त्रवैयर्थ्यम् । मन्त्रजपविधानादिकथनम् सांगमन्त्राणां साफल्यम् । |
| २९४ | नागलक्षणानि । शेषवासुकितक्षकादीनां प्राधान्यम् नानाविधसर्पजातयः प्रयाणे शुभशकुनादिवर्णनम् । |
| २९५ | दष्टचिकित्सा विषद्वैविध्यम् । विषविनाशकतार्क्ष्यादिमन्त्राः । |
| २९६ | पञ्चांगरुद्रविधानं विषव्याधिनाशकपञ्चांगमन्त्रकथनम् । विषविनाशनकुब्जिकादिदेवतानां कथनम् । |
| २९७ | विषहृन्मन्त्रौषधम् विषनाशनौषधकथनम् । |
| २९८ | गोनासादिचिकित्सा सर्पादिविषघातकौषधानि मन्त्रपूर्वकौषधीसेवनम् । |
| २९९ | बालादिग्रहहरबालतन्त्रम् बालपीडानिवर्तकधूपादिविधिः देवतामुद्दिश्य बलिदानादिविधानम् । बालग्रहहरमन्त्राः । |
| ३०० | ग्रहहृन्मन्त्रादिकथनं गुरुदेवादिकोपात्पंचोन्मादोत्पत्तिः। शून्यगृहादौ ग्रहाणां स्थितिरित्यादिकं ग्रहेभ्यो गर्भिण्यादीनां पीडासंप्राप्तिः । सूर्यादिग्रहपूजनविधिः । ग्रहापहाञ्जनादिकथनम् । |
| ३०१ | सूर्यार्चनम् । गणपतेर्मन्त्राः चतुर्थ्यन्तपूजनादिकं सूर्यादिग्रहाणां पूजनम् । सूर्यायार्घ्यदानं सूर्यादिपूजनात्संगरे जयप्राप्तिः । |
| ३०२ | नानामन्त्रौषधकथनं मन्त्रानुष्ठानाद्भ्रष्टराज्यस्य पुनाराज्यप्राप्तिः । वशीकरणमन्त्राः वशीकरौषधयः सुखप्रसवलेपाः गोरक्षणमन्त्रकथनम् । |
| ३०३ | अंगाक्षरार्चनं वासुदेवादिपूजाविधिः । |
| ३०४ | पंचाक्षरादिपूजामन्त्राः शिष्यदीक्षाविधिः अनन्तयोगपीठे तत्पुरुषादिमूर्तीनां स्थापनं पूजनं च । दीक्षायां शिष्यनामकरणादिकम् । |
| ३०५ | पंचपंचाशद्विष्णुनामानि । |
| ३०६ | नारसिंहादिमन्त्राः मन्त्रजपात्क्षुद्रग्रहमारीविषामयानां विनाशः । |
| ३०७ | त्रैलोक्यमोहनमन्त्रः विष्णुपूजाजपहोमादिविधानम् । |
| ३०८ | त्रैलोक्यमोहिनीलक्ष्म्यादिपूजा तस्या एव मन्त्राः । |
| ३०९ | त्वरितापूजा त्वरिताध्यानादिकम् । |
| ३१० | त्वरितामन्त्रादि प्रणीतादिमुद्रालक्षणम् । |
| ३११ | त्वरितामूलमन्त्रादि पूजाजपहोमादिकम् । |
| ३१२ | त्वरिताविद्या विद्याप्रस्तावः मुखस्तम्भादिप्रयोगाः त्वरिताविद्याप्रशंसा । |
| ३१३ | नानामन्त्राः विनायकार्चनादिप्रयोगः शत्रूच्चाटनविधिः गौरीमन्त्रानुष्ठानादिकम् । |
| ३१४ | त्वरिताज्ञानम् त्वरितापूजनविधिः |
| ३१५ | स्तम्भनादिमन्त्राः । |
| ३१६ | नानामन्त्राः कालदष्टजीवनादिमन्त्रनिरूपणम् । |
| ३१७ | सकलादिमन्त्रोद्धारः ब्रह्मपञ्चकम् प्रासादमन्त्रादिकथनम् पञ्चाङ्गसदाशिवकथनम् विघ्नेश्वरवर्णनम् । |

अध्यायाः । विषयाः ।


३१८ गणपूजा शिवगायत्री द्वारोपद्वारनिर्मितविघ्ननाशनरूपमण्डले गणपतिपूजनविधिः जपहोमादिविधानम् ।

३१९ वागीश्वरीपूजा समण्डलं वागीश्वरीपूजनम् । कपिलाज्येन होमविधानम् पूजनात्कवित्व

३२० मण्डलानि । सर्वतोभद्रकादिमण्डलानि ।

३२१ अघोरास्त्रादिशान्तिकल्पः शिवाद्यस्त्रपूजनम् ग्रहपूजनादेकादशस्थानप्राप्तिः सर्वोत्पातविनाशिकास्त्रशान्तिकथनम् ।

३२२ पाशुपतशान्तिः ।

३२३ षडङ्गान्यघोरास्त्राणि वशीकरणादिमन्त्राणां विधिः शतावर्यादिचूर्णसेवनात्पुत्रलाभः महामृत्युञ्जयादिमन्त्राः ।

३२४ रुद्रशान्तिः रुद्रशान्तिफलम् ।

३२५ अंशकादिः । रुद्राक्षधारणं मन्त्रसिद्धेः सिद्धाद्यंशकथनम् ।

३२६ गौर्यादिपूजा मन्त्रध्यानमण्डलमुद्रादिवर्णनं गौरीपूजाफलम् । मृत्युञ्जयार्चनम् । तत्फलम् ।

३२७ देवालयमाहात्म्यम् । यमलाजपविधिः शिवलिंगपूजाप्रशंसा वित्तानुसारतो देवालयादि निर्माणावश्यकत्वम् ।

३२८ छन्दःसारः ।

३२९ छन्दःसारः यजुषां षडर्णा गायत्र्यृचामष्टादशार्णेत्यादिगायत्रीभेदः । गायत्रीछन्दोनिरूपणम् ।

३३० छन्दःसारः-पादभेदाच्छन्दोभेदादिकथनं छन्दोदेवताकथनम् ।

३३१ छन्दोजातिनिरूपणम् उत्कृत्यादिच्छन्दोजातिकथनम् ।

३३२ विषमवृत्तकथनम् ।

३३३ अर्धसमवृत्तनिरूपणम् ।

३३४ समवृत्तनिरूपणम् ।

३३५ प्रस्तारनिरूपणम् ।

३३६ शिक्षानिरूपणं कण्ठस्थानादिकथनम् ।

३३७ काव्यादिलक्षणं काव्यलक्षणकथनं गद्यपद्यात्मककाव्यत्रैविध्यम् । आख्यायिकादिभेदेन गद्यकाव्यस्य पञ्चप्रकारत्वम् । आख्यायिकादीनां लक्षणम् । पद्यकुटुम्बादिकथनं महाकाव्यलक्षणादिकञ्च ।

३३८ नाटकनिरूपणम् नाटकस्य प्रकरणादिभेदनिरूपणम् । नाट्यलक्षणं पूर्वमुखे नान्दीमुखलक्षणम् । नटीविदूषकपारिपार्श्वकादिपात्राणां वर्णनम् । कथोपोद्घातलक्षणं सिद्धोत्प्रेक्षितादिभेदाः ।

३३९ शृङ्गारादिरसनिरूपणं रतिहासादिलक्षणम् । विभावस्याऽऽलम्बनोद्दीपनात्मकभेदेन द्विप्रकारत्वम् । धीरोदात्तादिनायकभेदाः शृङ्गारे नायकस्य नर्मसचिवानामनुनायकानाञ्च वर्णनम् । भावणादिस्वरूपम्

३४० रीतिनिरूपणम् । पाञ्चालीगौड्यादिभेदेन रीतिनिरूपणम् ।

३४१ नृत्यादावङ्गकर्मनिरूपणं कामिनीनां लीलाविलासादिभेदेन शरीरचेष्टादिकथनम् । शिरःकम्पनाद्याकम्पितादिभेदेन त्रयोदशप्रकाराः । सप्तप्रकारेण भ्रूकर्मादिकं तारकादीनां नवधा कर्मादिकथनम् ।

३४२ अभिनयादिनिरूपणम् । अभिनयलक्षणम् । रसादिविनियोगः संभोगविप्र-

अध्यायाः । विषयाः ।

लम्भादिभेदेन शृङ्गारो द्विधेति । पुनस्तद्भेदः हासादिलक्षणम् । करुणादिरसानां भेदाः । शब्दालंकारादिलक्षणम् ।
३४३ शब्दालंकाराः । अलंकाराणामनुप्रासादिकं चक्रबन्धगोमूत्रिकाद्यखिलबन्धाः ।
३४४ अर्थालङ्काराः सादृश्यालंकाराः । तल्लक्षणंच ।
३४५ शब्दार्थालंकाराः प्रशस्तीत्यादिषड्भेदानां वर्णनं तल्लक्षणञ्च ।
३४६ रागलक्षणादिकथनम् ।
३४७ काव्यदोषविवेकः सत्यानामुद्वेगजनकत्वादयः सप्त दोषाः । असाधुत्वाप्रयुक्तत्वयोः पदनिग्रहत्वेन प्रतिपादनं तयोः शब्दशास्त्रविरुद्धत्वादसाधुतानिरूपणम् । छान्दसत्वादिविस्पृष्टत्वादिदोषकथनम् तल्लक्षणं विसंध्यादिदोषाः ।
३४८ एकाक्षराभिधानम् एकाक्षरमन्त्राः मातृकामन्त्राः नवदुर्गार्चनं गणपतिमन्त्रकथनम् अमुना       ःतो होमविधिः ।
३४९ व्याकरणसारः प्रत्याहारसाधकसूत्राणां कथनम् अणादिप्रत्याहारः ।
३५० संधिसिद्धरूपं दण्डाग्राद्युदाहरणानां निरूपणम् ।
३५१ सुब्विभक्तिसिद्धरूपं विभक्तिपदवाच्यसुप्तिङोः कथनं स्वादिविभक्तिनिरूपणम् । अजन्तहलन्तभेदेन प्रतिपादिकद्वैध्यं तयोस्त्रिप्रकारत्वं पुंस्त्वादिभेदेन वृक्षादिसिद्धरूपाणि ।
३५२ स्त्रीलिङ्गशब्दसिद्धरूपं रमादिरूपाणि ।
३५३ नपुंसकशब्दसिद्धरूपम् ।
३५४ कारकम् । अभिहितानभिहितत्वेन कर्तुरुत्तमाधमत्वं कर्मसंज्ञादिनिरूपणम् ।
३५५ समासः । तत्पुरुषादिसमासकथनम् ।

अध्यायाः । विषयाः ।

३५६ तद्धिताः । तद्धितसिद्धरूपाणि ।
३५७ उणादिसिद्धरूपकथनम् ।
३५८ तिङ्विभक्तिसिद्धरूपम् ।
३५९ कृत्सिद्धरूपम् ।
३६० स्वर्गपातालादिवर्गाः ।
३६१ अव्ययवर्गः ।
३६२ नानार्थवर्गः ।
३६३ भूमिवनौषध्यादिवर्गाः ।
३६४ नृब्रह्मक्षत्रविट्शूद्रवर्गाः ।
३६५ ब्रह्मवर्गः ।
३६६ क्षत्रविट्शूद्रवर्गाः ।
३६७ सामान्यनामलिङ्गानि ।
३६८ प्रलयवर्णनं नित्यनैमित्तिकप्राकृतात्यन्तिकादिभेदैश्चतुर्विधप्रलयवर्णनम् ।
३६९ आत्यन्तिकलयगर्भोत्पत्त्योर्लक्षणम् । शारीरमानसभेदेनाऽऽध्यात्मिकसंतापस्य द्विप्रकारत्वम् । भोगदेहं गृहीत्वा जीवस्य कर्मणा गर्भान्तरप्राप्तिः शुभाशुभकर्मफलं गर्भस्य प्रतिमासमवयवोत्पत्तिः सत्त्वादिगुणलक्षणं देहे असृगादीनां गुणाः ।
३७० शरीरावयवाः कर्मेन्द्रियाणि शरीरे सप्ताशयाः समग्रदेहे षोडशजालानि । ग्रीवाद्यवयवादिषु नाडीप्रमाणम् ।

| अध्यायाः । | विषयाः । |
|---|---|
| ३७१ | नरकनिरूपणम् । शुभकर्मणां मनुष्याणां प्राणऊर्ध्वच्छिद्रादिनिर्गच्छतीत्यादियाम्यमार्गकथनम् । तामिस्रादिनरकाणां वर्णनं पापिनां जनानामनाषदुःखमदयातनानिदर्शनम् आध्यात्मिकादितापलक्षणम् । |
| ३७२ | यमनियमाः । अष्टाङ्गयोगः प्रसह्यपरद्रव्यहरणेन तिर्यग्योनिप्राप्तिः मनोजयादिकथनम् विष्णुपूजनादुत्तमागतिः । |
| ३७३ | आसनप्राणायामप्रत्याहाराः । |
| ३७४ | ध्यानम् । ध्यानयज्ञस्य मुक्तिसाधनत्वं हृदये विष्णोर्ध्यानादिकम् । |
| ३७५ | धारणा । धारणालक्षणं वारुणीधारणा ऐशानीधारणा धारणादिभिः साधकस्य विगतक्लेशत्वम् । |
| ३७६ | समाधिः । समाधिलक्षणं योगिनः प्रशंसा योगीसूर्यमण्डलं निर्भिद्य ब्रह्मलोकमतिक्रम्य निर्वाणमृच्छतीत्यादि सदाचारगृहस्थास्यपि मोक्षरीतिकथनम् । |
| ३७७ | ब्रह्मज्ञानम् । देहादेरात्मभावबोधनम् । द्रष्टृभोक्तृत्वादिनिरूपणमात्मनः लिङ्गशरीरोत्पत्तिः । ब्रह्मज्ञस्य संसारान्मुक्तिः । |
| ३७८ | ब्रह्मज्ञानम् । |
| ३७९ | ब्रह्मज्ञानम् । क्रतुभिर्देवपदप्राप्तिस्तपसा वैराजपदस्य प्राप्तिः कर्मसंन्यासाद्ब्रह्मपदावाप्तिः वैराग्यात्प्रकृतौ लयः ज्ञानात्कैवल्यम् जीवानामित्येताः पञ्च गतयः भावनात्रैविध्येनब्रह्मोपासना ब्रह्मज्ञानलक्षणम् । |
| ३८० | अद्वैतब्रह्मविज्ञानम् अन्तकाले मृगादिस्मरणात्तद्देहप्राप्तिः । अद्वैतज्ञानविषयं नृपब्राह्मणसंवादः तत्र निदाघऋतुसंवादकथनं ब्राह्मणोपदेशाद्राज्ञो मुक्तिः । |
| ३८१ | गीतासारः । |
| ३८२ | यमगीता तस्याः फलम् । |
| ३८२ | आग्नेयमहापुराणमाहात्म्यम् हेमन्तादावाग्नेयपुराणश्रवणतोऽग्निष्टोमादियज्ञफलप्राप्तिः आग्नेयपुराणान्तर्गतविषयक्रमः पुराणसंख्या । पुराणपाठकपूजनादिकं पुस्तकदानफलम् । |


समाप्तेयमग्निपुराणान्तर्गताध्यायस्यविषयानुक्रमणिका ।

श्रीगणेशाय नमः ॥ अथाग्निमहापुराणं प्रारभ्यते ॥ ॐ नमो भगवते वासुदेवाय ॥ श्रियं सरस्वतीं गौरीं गणेशं स्कन्दमीश्वरम् ॥
ब्रह्माणं वह्निमिन्द्रादीन्वासुदेवं नमाम्यहम् ॥ १ ॥ नैमिषे हरिमीजाना ऋषयः शौनकादयः ॥ तीर्थयात्राप्रसङ्गेन स्वागतं सूतमब्रुवन्
॥ २ ॥ ऋषय ऊचुः ॥ सूत त्वं पूजितोऽस्माभिः सारात्सारं वदस्व नः ॥ येन विज्ञातमात्रेण सर्वज्ञत्वं प्रजायते ॥ ३ ॥ सूत
उवाच ॥ सारात्सारो हि भगवान्विष्णुः सर्गादिकृद्विभुः ॥ ब्रह्माहमस्मि तं ज्ञात्वा सर्वज्ञत्वं प्रजायते ॥ ४ ॥ द्वे ब्रह्मणी वेदितव्ये
शब्दब्रह्म परञ्च यत् ॥ द्वे विद्ये वेदितव्ये हि इति चाथर्वणी श्रुतिः ॥ ५ ॥ अहं शुकश्च पैलाद्या गत्वा बदरिकाश्रमम् ॥ व्यासं नत्वा
पृष्टवन्तः सोऽस्मान्सारमथाब्रवीत् ॥ ६ ॥ व्यास उवाच ॥ शुकाद्यैः शृणु सूत त्वं वसिष्ठो मां यथाऽब्रवीत् ॥ ब्रह्मसारं हि पृच्छन्तं
मुनिभिश्च परात्परम् ॥ ७ ॥ वसिष्ठ उवाच ॥ द्विविधं ब्रह्म वक्ष्यामि शृणु व्यासाखिलानुगम् ॥ यथाऽग्निर्मां पुरा प्राह मुनिभिर्दे-
वतैः सह ॥ ८ ॥ पुराणं परमाग्नेयं ब्रह्मविद्याक्षरं परम् ॥ ऋग्वेदाद्यपरं ब्रह्म सर्वदेवसुखावहम् ॥ ९ ॥ अग्निनोक्तं पुराणं यदाग्नेयं
ब्रह्मसम्मितम् ॥ भुक्तिमुक्तिप्रदं दिव्यं पठतां शृण्वतां नृणाम् ॥ १० ॥ कालाग्निरूपिणं विष्णुं ज्योतिर्ब्रह्म परात्परम् ॥ मुनिभिः
पृष्टवान्देवं पूजितं ज्ञानकर्मभिः ॥ ११ ॥ वसिष्ठ उवाच ॥ संसारसागरोत्तारनावं ब्रह्मेश्वरं वद ॥ विद्यासारं यद्विदित्वा सर्वज्ञो
जायते नरः ॥ १२ ॥ अग्निरुवाच ॥ विष्णुः कालाग्निरुद्रोऽहं विद्यासारं वदामि ते ॥ विद्यासारं पुराणं यत्सर्वं सर्वस्य कार-
णम् ॥ १३ ॥ सर्गस्य प्रतिसर्गस्य वंशमन्वतरस्य च ॥ वंशानुचरितादेश्च मत्स्यकूर्मादिरूपधृक् ॥ १४ ॥ द्वे विद्ये भगवान्विष्णुः
परा चैवापरा इ च ॥ ऋग्यजुःसामाथर्वाख्या वेदाङ्गानि च षट् द्विज ॥ १५ ॥ शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः ॥
छन्दोऽभिधानं मीमांसा धर्मशास्त्रं पुराणकम् ॥ १६ ॥ न्यायवैद्यकगान्धर्वं धनुर्वेदोऽर्थशास्त्रकम् ॥ अपरेयं परा विद्या यया
ब्रह्माभिगम्यते ॥ १७ ॥ यत्तदद्दश्यमग्राह्यमगोत्रचरणं ध्रुवम् ॥ विष्णुनोक्तं यथा मह्यं देवेभ्यो ब्रह्मणा पुरा ॥ तथा ते कथयि-
ष्यामि हेतुं मत्स्यादिरूपिणम् ॥ १८ ॥ इत्यादिमहापुराणे आग्नेये प्रश्नो नाम प्रथमोऽध्यायः ॥ १ ॥ अथ मत्स्यावतारवर्णनम् ॥
वसिष्ठ उवाच ॥ मत्स्यादिरूपिणं विष्णुं ब्रूहि सर्गादिकारणम् ॥ पुराणं ब्रह्म चाग्नेयं यथा विष्णोः पुरा श्रुतम् ॥ १ ॥

अग्निरुवाच ॥ मत्स्यावतारं वक्ष्येऽहं वसिष्ठ शृणु वै हरेः ॥ अवताराक्रिया दुष्टनष्ट्यै सत्पालनाय हि ॥ २ ॥ आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः ॥ समुद्रोपप्लुतास्तत्र लोका भूरादिका मुने ॥ ३ ॥ मनुर्वैवस्वतस्तेपे तपो वै भुक्तिमुक्तये ॥ एकदा कृतमालायां कुर्वतो जलतर्पणम् ॥ ४ ॥ तस्याञ्जल्युदके मत्स्यः स्वल्प एकोऽभ्यपद्यत ॥ क्षेप्तुकामं जले प्राह न मां क्षिप नरोत्तम ॥ ५ ॥ ग्राहादिभ्यो भयं मेऽत्र तच्छ्रुत्वा कलशेऽक्षिपत् ॥ स तु वृद्धः पुनर्मत्स्यः प्राह तं देहि मे बृहत् ॥ ६ ॥ स्थानमेतद्वचः श्रुत्वा राजाऽथोदञ्चनेऽक्षिपत् ॥ तत्र वृद्धोऽब्रवीद्भूपं पृथुं देहि पदं मनो ॥ ७ ॥ सरोवरे पुनः क्षिप्तो ववृधे तत्प्रमाणवान् ॥ ऊचे देहि बृहत्स्थानं प्राक्षिपच्चाम्बुधौ ततः ॥ ८ ॥ लक्षयोजनविस्तीर्णः क्षणमात्रेण सोऽभवत् ॥ मत्स्यं तमद्भुतं दृष्ट्वा विस्मितः प्राब्रवीन्मनुः ॥ ९ ॥ को भवान्ननु वै विष्णुर्नारायण नमोऽस्तु ते ॥ मायया मोहयसि मां किमर्थं त्वं जनार्दन ॥ १० ॥ मनुनोक्तोऽब्रवीन्मत्स्यो मनुं वै पालने रतम् ॥ अवतीर्णो भवायास्य जगतो दुष्टनष्टये ॥ ११ ॥ सप्तमे दिवसे त्वब्धिः प्लावयिष्यति वै जगत् ॥ उपस्थितायां नावि त्वं बीजादीनि विधाय च ॥ १२ ॥ सप्तर्षिभिः परिवृतो निशां ब्राह्मीं चरिष्यसि ॥ उपस्थितस्य मे शृङ्गे निबध्नीहि महाहिना ॥ १३ ॥ इत्युक्त्वान्तर्दधे मत्स्यो मनुः कालप्रतीक्षकः ॥ स्थितः समुद्र उद्वेले नावमारुरुहे तदा ॥ १४ ॥ एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः ॥ नावं बबन्ध तच्छृङ्गे मत्स्याख्यं च पुराणकम् ॥ १५ ॥ शुश्राव मत्स्यात्पापघ्नं संस्तुवन्स्तुतिभिश्च तम् । ब्रह्मवेदप्रहर्त्तारं हयग्रीवं च दानवम् ॥ १६ ॥ अवधीद्वेदमन्त्राद्यान्पालयामास केशवः ॥ प्राप्ते कल्पेऽथ वाराहे कूर्मरूपोऽभवद्धरिः ॥ १७ ॥ इत्यादिमहापुराणे आग्नेये मत्स्यावतारो नाम द्वितीयोऽध्यायः ॥ २ ॥ अथ कूर्मावतारवर्णनम् ॥ अग्निरुवाच ॥ वक्ष्ये कूर्मावतारं च संश्रुतं पापनाशनम् ॥ पुरा देवासुरे युद्धे दैत्यैर्देवाः पराजिताः ॥ १ ॥ दुर्वाससश्च शापेन निःश्रीकाश्चाभवंस्तदा ॥ स्तुत्वा क्षीराब्धिगं विष्णुमूचुः पालय चासुरात् ॥ २ ॥ ब्रह्मादिकान्हरिः प्राह सन्धिं कुर्वन्तु चासुरैः ॥ क्षीराब्धिमथनार्थं हि अमृतार्थं श्रियेऽसुराः ॥३॥ अरयोऽपि हि सन्धेयाः सति कार्य्यार्थगौरवे ॥ युष्मानमृतभाजो हि करिष्यामि न दानवान् ॥४॥ मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥ क्षीराब्धिं मत्सहायेन निर्मथध्वमतन्द्रिताः ॥ ५ ॥

विष्णूक्ताः संविदं कृत्वा दैत्यैः क्षीराब्धिमागताः ॥ ततो मथितुमारब्धा यतः पुच्छं ततः सुराः ॥ ६ ॥ फणिनिःश्वाससन्तप्ता हरिणाप्यायिताः सुराः ॥ मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत् ॥ ७ ॥ कूर्मरूपं समास्थाय दध्रे विष्णुश्च मन्दरम् ॥ क्षीराब्धेर्मथ्यमानाच्च विषं हालाहलं ह्यभूत् ॥ ८ ॥ हरेण धारितं कण्ठे नीलकण्ठस्ततोऽभवत् ॥ ततोऽभूद्वारुणी देवी पारिजातस्तु कौस्तुभः ॥ ९ ॥ गावश्चाप्सरसो दिव्या लक्ष्मीर्देवी हरिं गता ॥ पश्यन्तः सर्वदेवास्तां स्तुवन्तः सश्रियोऽभवन् ॥ १० ॥ ततो धन्वन्तरिर्विष्णुरायुर्वेदप्रवर्तकः ॥ बिभ्रत्कमण्डलुं पूर्णममृतेन समुत्थितः ॥ ११ ॥ अमृतं तत्कराद्दैत्याः सुरेभ्योऽर्द्धं प्रदाय च ॥ गृहीत्वा जग्मुर्जम्भाद्या विष्णुः स्त्रीरूपधृक्ततः ॥ १२ ॥ तां दृष्ट्वा रूपसम्पन्नां दैत्याः प्रोचुर्विमोहिताः ॥ भव भार्य्याऽमृतं गृह्य पाययास्मान्वरानने ॥ १३ ॥ तथेत्युक्त्वा हरिस्तेभ्यो गृहीत्वाऽपाययत्सुरान् ॥ चन्द्ररूपधरो राहुः पिबंश्चार्केन्दुनार्पितः ॥ १४ ॥ हरिणाप्यरिणा च्छिन्नं तदा राहोः शिरः पृथक् ॥ कृपयाऽमरतां नीतं वरदं हरिमब्रवीत् ॥ १५ ॥ राहुर्मत्तस्तु चन्द्रार्कौ प्राप्य ते ग्रहणं ग्रहः ॥ तस्मिन्काले च यद्दानं दास्यन्ते स्यात्तदक्षयम् ॥ १६ ॥ तथेत्याहाथ तं विष्णुस्ततः सर्वैः सहामरैः ॥ स्त्रीरूपं सम्परित्यज्य हरेणोक्तः प्रदर्शय ॥ १७ ॥ दर्शयामास रुद्राय स्त्रीरूपं भगवान्हरिः ॥ मायया मोहितः शम्भुर्गौरीं त्यक्त्वा स्त्रियं गतः ॥ १८ ॥ नग्न उन्मत्तरूपोऽभूत्स्त्रियः केशानधारयत् ॥ अगाद्विमुच्य केशान्स्त्री अन्वधावच्च तां गताम् ॥ १९ ॥ स्खलितं तस्य वीर्य्यं कौ यत्र यत्र हरस्य हि ॥ तत्रतत्राभवत्क्षेत्रं लिङ्गानां कनकस्य च ॥ २० ॥ मायेयमिति तां ज्ञात्वा स्वरूपस्थोऽभवद्धरः ॥ शिवमाह हरी रुद्र जिता माया त्वया हि मे ॥ २१ ॥ न जेतुमेनां शक्तो मे त्वदृतेऽन्यः पुमान्भुवि ॥ अप्राप्याथाऽमृतं दैत्या देवैर्युद्धे निपातिताः ॥ २२ ॥ त्रिदिवस्थाः सुराश्चासन्दैत्याः पातालवासिनः ॥ यो नरःपठते देवविजयं त्रिदिवं व्रजेत् ॥ २३ ॥ इत्यादिमहापुराणे आग्नेये कूर्म्मावतारो नाम तृतीयोऽध्यायः ॥ ३ ॥ अथ वराहाद्यवतारवर्णनम् ॥ अग्निरुवाच ॥ अवतारं वराहस्य वक्ष्येऽहं पापनाशनम् ॥ हिरण्याक्षोऽसुरेशोऽभूद्देवाञ्जित्वा दिविस्थितः ॥ १ ॥ देवैर्गत्वा स्तुतो विष्णुर्यज्ञरूपो वराहकः ॥ अद्भुतं दानवं हत्वा दैत्यैः सार्कं च कण्टकम् ॥ २ ॥

धर्मदेवादिरक्षाकृत्ततः सोऽन्तर्दधे हरिः ॥ हिरण्याक्षस्य वै भ्राता हिरण्यकशिपुस्तथा ॥ ३ ॥ जितदेवयज्ञभागः सर्वदेवाधिकारकृत् ॥ नारसिंहं वपुः कृत्वा तं जघान सुरैः सह ॥ ४ ॥ स्वपदस्थान्सुरांश्चक्रे नारसिंहः सुरैः स्तुतः ॥ देवासुरे पुरा युद्धे बलिप्रभृतिभिः सुराः ॥ ५ ॥ जिताः स्वर्गात्परिभ्रष्टा हरिं वै शरणं गताः ॥ सुराणामभयं दत्त्वा अदित्या कश्यपेन च ॥ ६ ॥ स्तुतोऽसौ वामनो भूत्वा ह्यदित्यां स क्रतुं ययौ ॥ बलेः श्रीयजमानस्य राजद्वारेऽगृणाच्छ्रुतिम् ॥ ७ ॥ वेदान्पठन्तं तं श्रुत्वा वामनं वरदोऽब्रवीत् ॥ निवारितोऽपि शुक्रेण बलिर्ब्रूहि यदिच्छसि ॥ ८ ॥ तत्तेऽहं सम्प्रदास्यामि वामनो बलिमब्रवीत् ॥ पदत्रयं हि गुर्वर्थं देहि दास्ये तमब्रवीत् ॥ ९ ॥ तोये तु पतिते हस्ते वामनोऽभूदवामनः ॥ भूर्लोकं स भुवर्लोकं स्वर्लोकं च पदत्रयम् ॥ १० ॥ चक्रे बलिं च सुतले तच्छक्राय ददौ हरिः ॥ शक्रो देवैर्हरिं स्तुत्वा भुवनेशः सुखी त्वभूत् ॥ ११ ॥ वक्ष्ये परशुरामस्य चावतारं शृणु द्विज ॥ उद्धतान्क्षत्रियान्मत्वा भूभारहरणाय सः ॥ १२ ॥ अवतीर्णो हरिः शान्त्यै देवविप्रादिपालकः ॥ जमदग्ने रेणुकायां भार्गवः शस्त्रपारगः ॥ १३ ॥ दत्तात्रेयप्रसादेन कार्त्तवीर्यो नृपस्त्वभूत् ॥ सहस्रबाहुः सर्वोर्वीपतिः स मृगयां गतः ॥ १४ ॥ श्रान्तो निमन्त्रितोऽरण्ये मुनिना जमदग्निना ॥ कामधेनुप्रभावेण भोजितः सबलो नृपः ॥ १५ ॥ अप्रार्थयत्कामधेनुं यदा स न ददौ तदा ॥ हृतवानथ रामेण शिरश्छित्त्वा निपातितः ॥ १६ ॥ युद्धे परशुना राजा सधेनुः स्वाश्रमं ययौ ॥ कार्त्तवीर्यस्य पुत्रैस्तु जमदग्निर्निपातितः ॥ १७ ॥ रामे वनं गते वैरादथ रामः समागतः ॥ पितरं निहतं दृष्ट्वा पितृनाशाभिमर्षितः ॥ १८ ॥ त्रिःसप्तकृत्वः पृथिवीं निःक्षत्रामकरोद्विभुः ॥ कुरुक्षेत्रे पञ्च कुण्डान्कृत्वा सन्तर्प्य वै पितॄन् ॥ १९ ॥ कश्यपाय महीं दत्त्वा महेन्द्रे पर्वते स्थितः ॥ कूर्मस्य च वराहस्य नृसिंहस्य च वामनम् ॥ अवतारं च रामस्य श्रुत्वा याति दिवं नरः ॥ २० ॥ इत्यादिमहापुराणे आग्नेये वराहनृसिंहाद्यवतारो नाम चतुर्थोऽध्यायः ॥ ४ ॥ अथ श्रीरामावतारवर्णनम् ॥ अग्निरुवाच ॥ रामायणमहं वक्ष्ये नारदेनोदितं पुरा ॥ वाल्मीकये यथा तद्वत्पठितं भुक्तिमुक्तिदम् ॥ १ ॥ नारद उवाच ॥ विष्णुनाभ्यब्जजो ब्रह्मा मरीचिर्ब्रह्मणः सुतः ॥ मरीचेः कश्यपस्तस्मात्सूर्यो वैवस्वतो मनुः ॥ २ ॥ ततस्तस्मात्तथेक्ष्वाकुस्तस्य वंशे ककुत्स्थकः ॥ ककुत्स्थस्य रघुस्त-

स्मादजो दशरथस्ततः ॥ ३ ॥ रावणादेर्वधार्थाय चतुर्द्धाभूत्स्वयं हरिः ॥ राज्ञो दशरथाद्रामः कौसल्यायां बभूव ह ॥ ४ ॥
कैकेय्यां भरतः पुत्रः सुमित्रायां च लक्ष्मणः ॥ शत्रुघ्न ऋष्यशृङ्गेण तासु सन्दत्तपायसात् ॥ ५ ॥ प्राशिताद्यज्ञसंसिद्धाद्रामा-
द्याश्च समाः पितुः ॥ यज्ञविघ्नविनाशाय विश्वामित्रार्थितो नृपः ॥ ६ ॥ रामं संप्रेषयामास लक्ष्मणं मुनिना सह ॥ रामो
गतोऽस्त्रशस्त्राणि शिक्षितस्ताडकान्तकृत् ॥ ७ ॥ मारीचं मानवास्त्रेण मोहितं दूरतोऽनयत् ॥ सुबाहुं यज्ञहन्तारं सबलं चा-
वधीद्बली ॥ ८ ॥ सिद्धाश्रमनिवासी च विश्वामित्रादिभिः सह ॥ गतः क्रतुं मैथिलस्य द्रष्टुं चापं सहानुजः ॥ ९ ॥ शतान-
न्दनिमित्तेन विश्वामित्रप्रभावतः ॥ रामाय कथिते राज्ञा समुनिः पूजितः क्रतौ ॥ १० ॥ धनुरापूरयामास लीलया स बभञ्ज
तत् ॥ वीर्यशुल्कां च जनकः सीतां कन्यां त्वयोनिजाम् ॥ ११ ॥ ददौ रामाय रामोऽपि पित्रादौ हि समागते ॥ उपयेमे
जानकीं तामूर्मिलां लक्ष्मणस्तथा ॥ १२ ॥ श्रुतकीर्तिं माण्डवीं च कुशध्वजसुते तथा ॥ जनकस्यानुजस्यैते शत्रुघ्नभरतावुभौ
॥ १३ ॥ कन्ये द्वे उपयेमाते जनकेन सुपूजितः ॥ रामोऽगात्सवसिष्ठाद्यैर्जामदग्न्यं विजित्य च ॥ अयोध्यां भरतोऽप्यागा-
त्सशत्रुघ्नो युधाजितः ॥ १४ ॥ इत्यादिमहापुराणे आग्नेये रामायणे बालकाण्डवर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥ अथायो-
ध्याकाण्डवर्णनम् ॥ नारद उवाच ॥ भरतेऽथ गते रामः पित्रादीनभ्यपूजयत् ॥ राजा दशरथो राममुवाच शृणु राघव ॥ १ ॥
गुणानुरागाद्राज्ये त्वं प्रजाभिरभिषेचितः ॥ मनसाऽहं प्रभाते ते यौवराज्यं ददामि ह ॥ २ ॥ रात्रौ त्वं सीतया सार्धं संयतः
सुव्रतो भव ॥ राज्ञश्च मन्त्रिणश्चाष्टौ सवसिष्ठास्तथाब्रुवन् ॥ ३ ॥ सृष्टिर्जयन्तो विजयः सिद्धार्थो राष्ट्रवर्धनः ॥ अशोको धर्म-
पालश्च सुमन्त्रः सवसिष्ठकः ॥ ४ ॥ पित्रादिवचनं श्रुत्वा तथेत्युक्त्वा स राघवः ॥ स्थितो देवार्चनं कृत्वा कौसल्यायै निवेद्य
तत् ॥ ५ ॥ राजोवाच वसिष्ठादीन्रामराज्याभिषेचने ॥ सम्भारान्सम्भवन्तु स्म इत्युक्त्वा कैकयीं गतः ॥ ६ ॥ अयोध्याल-
ङ्कृतिं दृष्ट्वा ज्ञात्वा रामाभिषेचनम् ॥ भविष्यतीत्याचचक्षे कैकेयीं मन्थरा सखी ॥ ७ ॥ पादौ गृहीत्वा रामेण कर्षिता साप-
राधतः ॥ तेन वैरेण सा रामवनवासं च काङ्क्षति ॥ ८ ॥ कैकेयि त्वं समुत्तिष्ठ रामराज्याभिषेचनम् ॥ मरणं तव पुत्रस्य मम ते

नात्र संशयः ॥ ९ ॥ कुब्जयोक्तं च तच्छ्रुत्वा एकमाभरणं ददौ ॥ उवाच मे यथा रामस्तथा मे भरतः सुतः ॥ १० ॥ उपायंतु
न पश्यामि भरतो येन राज्यभाक् ॥ कैकेयीमब्रवीत्क्रुद्धा हारं त्यक्त्वाऽथ मन्थरा ॥ ११ ॥ मन्थरोवाच ॥ बालिशे रक्ष भर-
तमात्मानं मां च राघवात् ॥ भविता राघवो राजा राघवस्य ततः सुतः ॥ १२ ॥ राजवंशस्तु कैकेयि भरतात्परिहास्यते ॥
देवासुरे पुरा युद्धे शम्बरेण हताः सुराः ॥ १३ ॥ रात्रौ भर्त्ता गतस्तत्र रक्षितो विद्यया त्वया ॥ वरद्वयं तदा प्रादाद्याचेदानीं
नृपं च तत् ॥ १४ ॥ रामस्य च वने वासं नव वर्षाणि पञ्च च ॥ यौवराज्यं च भरते तदिदानीं प्रदास्यति ॥ १५ ॥
प्रोत्साहिता कुब्जया सा अनर्थे चार्थदर्शिनी ॥ उवाच सदुपायं मे कश्चित्तं कारयिष्यति ॥ १६ ॥ क्रोधागारं प्रविष्टाऽथ
पतिता भुवि मूर्च्छिता ॥ द्विजादीनर्चयित्वाऽथ राजा दशरथस्तदा ॥ १७ ॥ ददर्श कैकयीं रुष्टामुवाच
कथमीदृशी ॥ रोगार्त्ता किं भयोद्विग्ना किमिच्छसि करोमि तत् ॥ १८ ॥ येन रामेण हि विना न जीवामि मुहूर्त्तकम् ॥ शपामि
तेन कुर्यां वै वाञ्छितं तव सुन्दरि ॥ १९ ॥ सत्यं ब्रूहीति सोवाच नृप मह्यं ददासि चेत् ॥ वरद्वयं पूर्व्वदत्तं सत्यात्त्वं देहि मे नृप
॥ २० ॥ चतुर्दश समा रामो वने वसतु संयतः ॥ सम्भारैरेभिरद्यैव भरतोऽत्राभिषेच्यताम् ॥ २१ ॥ विषं पीत्वा मरिष्यामि
दास्यसि त्वं न चेन्नृप ॥ तच्छ्रुत्वा मूर्च्छितो भूमौ वज्राहत इवापतत् ॥ २२ ॥ मुहूर्त्ताच्चेतनां प्राप्य कैकेयीमिदमब्रवीत् ॥ दशरथ
उवाच ॥ किं कृतं तव रामेण मया वा पापनिश्चये ॥ २३ ॥ यन्मामेवं ब्रवीषि त्वं सर्वलोकाप्रियङ्करि ॥ केवलं त्वत्प्रियं कृत्वा
भविष्यामि सुनिन्दितः ॥२४॥ या त्वं भार्या कालरात्रिर्भरतो नेदृशः सुतः ॥ प्रशाधि विधवा राज्यं मृते मयि गते सुते ॥ २५॥
सत्यपाशनिबद्धस्तु राममाहूय चाब्रवीत् ॥ कैकेय्या वञ्चितो राम राज्यं कुरु निगृह्य माम् ॥२६॥ त्वया वने तु वस्तव्यं कैके-
यीभरतो नृपः ॥ पितरं चैव कैकेयीं नमस्कृत्य प्रदक्षिणम् ॥ २७ ॥ कृत्वा नत्वा च कौसल्यां समाश्वास्य सलक्ष्मणः ॥ सी-
तया भार्यया सार्द्धं सरथः ससुमन्त्रकः ॥ २८ ॥ दत्त्वा दानानि विप्रेभ्यो दीनानाथेभ्य एव सः ॥ मातृभिश्चैव विप्राद्यैः शोकार्तै-
र्निर्गतः पुरात् ॥ २९ ॥ उषित्वा तमसातीरे रात्रौ पौरान्विहाय च ॥ प्रभाते तमपश्यन्तोऽयोध्यां ते पुनरागताः ॥ ३० ॥ रुद-

त्राजापि कौसल्यागृहमागात्सुदुःखितः ॥ पौरा जनाः स्त्रियः सर्वा रुरुदू राजयोषितः ॥ ३१ ॥ रामो रथस्थश्चीराढ्यः शृङ्गवेरपुर
ययौ ॥ गुहेन पूजितस्तत्र इङ्गुदीमूलमाश्रितः ॥ ३२ ॥ लक्ष्मणः सगुहो रात्रौ चक्रतुर्जागरं हि तौ ॥ सुमन्त्रं सरथं त्यक्त्वा प्रात-
र्नावाथ जाह्नवीम् ॥ ३३ ॥ रामलक्ष्मणसीताश्च तीर्णा आपुः प्रयागकम् ॥ भरद्वाजं नमस्कृत्य चित्रकूटं गिरिं ययुः ॥ ३४ ॥
वास्तुपूजां ततः कृत्वा स्थिता मन्दाकिनीतटे ॥ सीतायै दर्शयामास चित्रकूटं च राघवः ॥ ३५ ॥ नखैर्विदारयन्तं तां काकं
तच्चक्षुराक्षिपत् ॥ ऐषीकास्त्रेण शरणं प्राप्तो देवान्विहायसः ॥३६॥ रामे वनं गते राजा षष्ठेऽह्नि निशि चाब्रवीत् ॥ कौसल्यां स
कथां पौर्वां यदज्ञानाद्धतः पुरा ॥३७॥ कौमारे सरयूतीरे यज्ञदत्तकुमारकः ॥ शब्दभेदाच्च कुम्भेन शब्दं कुर्वंश्च तत्पिता ॥ ३८ ॥
शशाप विलपन्मात्रा शोकं कृत्वा रुदन्मुहुः ॥ पुत्रं विना मरिष्यावस्त्वं च शोकान्मरिष्यसि ॥३९॥ पुत्रं विना स्मरञ्शोकात्कौ-
सल्ये मरणं मम ॥ कथामुक्त्वाऽथ हा रामेत्युक्त्वा राजा दिवं गतः ॥ ४० ॥ सुप्तं मत्वाऽथ कौसल्या सुप्ता शोकार्त्तमेव सा ॥ सुप्र-
भाते शयानं तं सूतमागधबन्दिनः ॥ ४१ ॥ प्रबोधका बोधयन्ति न च बुध्यत्यसौ मृतः ॥ कौसल्या तं मृतं ज्ञात्वा हा हतास्मीति
चाब्रवीत् ॥ ४२ ॥ नरा नार्योऽथ रुरुदुरानीतो भरतस्तदा ॥ वसिष्ठाद्यैः सशत्रुघ्नः शीघ्रं राजगृहात्पुरीम् ॥ ४३ ॥ दृष्ट्वा सशोकां
कैकेयीं निन्दयामास दुःखितः ॥ अकीर्तिः पातिता मूर्ध्नि कौसल्यां स प्रशस्य च ॥ ४४ ॥ पितरं तैलद्रोणिस्थं संस्कृत्य सर-
यूतटे ॥ वसिष्ठाद्यैर्जनैरुक्तो राज्यं कुर्विति सोऽब्रवीत् ॥ ४५ ॥ व्रजामि राममानेतुं रामो राजा मतो बली ॥ शृङ्गवेरं प्रयागं च
भरद्वाजेन भोजितः ॥ ४६ ॥ नमस्कृत्य भरद्वाजं रामं लक्ष्मणमागतः ॥ पिता स्वर्गं गतो राम अयोध्यायां नृपो भव ॥ ४७ ॥ अहं
वनं प्रयास्यामि त्वदादेशप्रतीक्षकः ॥ रामः श्रुत्वा जलं दत्त्वा गृहीत्वा पादुके व्रज ॥ ४८ ॥ राज्यायाहं न यास्यामि सत्या-
च्चीरजटाधरः ॥ रामोक्तो भरतश्चायान्नन्दिग्रामे स्थितो बली ॥ त्यक्त्वाऽयोध्यां पादुके ते पूज्य राज्यमपालयत् ॥ ४९ ॥
इत्यादिमहापुराणे आग्नेये रामायणेऽयोध्याकाण्डवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥ अथारण्यकाण्डवर्णनम् ॥ नारद उवाच ॥
रामो वसिष्ठं मातॄंश्च नत्वाऽत्रिं च प्रणम्य सः ॥ अनसूयां च तत्पत्नीं शरभङ्गं सुतीक्ष्णकम् ॥ १ ॥ अगस्त्यभ्रातरं नत्वा





अगस्त्य तत्प्रसादतः ॥ धनुः खड्गं च सम्प्राप्य दण्डकारण्यमागतः ॥ २ ॥ जनस्थाने पञ्चवट्यां स्थितो गोदावरीतटे ॥ तत्र शूर्पणखायाता भक्षितुं तान्भयङ्करी ॥ ३ ॥ रामं सुरूपं दृष्ट्वा सा कामिनी वाक्यमब्रवीत् ॥ शूर्पनखोवाच ॥ कस्त्वं कस्मात्समायातो भर्त्ता मे भव चार्थितः ॥ ४ ॥ एतौ च भक्षयिष्यामि इत्युक्त्वा तं समुद्यता ॥ तस्या नासां च कर्णौ च रामोक्तो लक्ष्मणोऽच्छिनत् ॥ ५ ॥ रक्तं क्षरन्ती प्रययौ खरं भ्रातरमब्रवीत् ॥ मरिष्यामि विनासाऽहं खर जीवामि वै तदा ॥ ६ ॥ रामस्य भार्य्या सीताऽस्ति तस्यासील्लक्ष्मणोऽनुजः ॥ तेषां यद्रुधिरं कोष्णं पाययिष्यसि मां यदि ॥ ७ ॥ खरस्तथेति तामुक्त्वा चतुर्दशसहस्रकैः ॥ रक्षसां दूषणेनागाद्योद्धुं त्रिशिरसा सह ॥ ८ ॥ रामं रामोऽपि युयुधे शरैर्विव्याध राक्षसान् ॥ हस्त्यश्वरथपादात बल निन्ये यमक्षयम् ॥ ९ ॥ त्रिशीर्षाणं खरं रौद्रं युध्यन्तं चैव दूषणम् ॥ ययौ शूर्पणखा लङ्कां रावणाग्रेऽपतद्भुवि ॥ १० ॥ अब्रवीद्रावणं क्रुद्धा न त्वं राजा च रक्षकः ॥ खरादिहन्तू रामस्य सीतां भार्यां हरस्व च ॥ ११ ॥ रामलक्ष्मणरक्तस्य पानाज्जीवामि नान्यथा ॥ तथेत्याह च तच्छ्रुत्वा मारीचं प्राह व व्रज ॥ १२ ॥ स्वर्णचित्रमृगो भूत्वा रामलक्ष्मणकर्षकः ॥ सीताग्रे तां हरिष्यामि अन्यथा मरणं तव ॥ १३ ॥ मारीचो रावणं प्राह रामो मृत्युर्धनुर्धरः ॥ रावणादपि मर्त्तव्यं मर्त्तव्यं राघवादपि ॥ १४ ॥ अवश्यं यदि मर्त्तव्यं वरं रामो न रावणः ॥ इति मत्वा मृगो भूत्वा सीताग्रे व्यचरन्मुहुः ॥ १५ ॥ सीतया प्रेरितो रामः शरेणाथावधीच्च तम् ॥ म्रियमाणो मृगः प्राह हा सीते लक्ष्मणेति च ॥ १६ ॥ सौमित्रिः सीतयोक्तोऽथ विरुद्धं राममागतः ॥ रावणोऽप्यहरत्सीतां हत्वा गृध्रं जटायुषम् ॥ १७ ॥ जटायुषा स भिन्नाङ्गो अङ्केनादाय जानकीम् ॥ गतो लङ्कामशोकाख्ये धारयामास चाब्रवीत् ॥ १८ ॥ रावण उवाच ॥ भव भार्य्या ममाग्र्या त्वं राक्षस्यो रक्ष्यतामियम् ॥ रामो हत्वा तु मारीचं दृष्ट्वा लक्ष्मणमब्रवीत् ॥ १९ ॥ श्रीराम उवाच ॥ मायामृगोऽसौ सौमित्रे यथा त्वमिह चागतः ॥ तथा सीता हृता नूनं नापश्यत्स गतोऽथ ताम् ॥ २० ॥ शुशोच विललापार्त्तो मां त्यक्त्वा क्व गतासि वै ॥ लक्ष्मणाश्वासितो रामो मार्गयामास जानकीम् ॥ २१ ॥ दृष्ट्वा जटायुस्तं प्राह रावणो हृतवांश्च ताम् ॥ मृतोऽथ संस्कृतस्तेन कबन्धं चावधीत्ततः ॥ शापमुक्तोऽब्रवीद्रामं स त्वं

सुग्रीवमाव्रज ॥२२॥ इत्यादिमहापुराणे आग्नेये रामायणे आरण्यकाण्डवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥ अथ किष्किन्धाकाण्ड-वर्णनम् ॥ नारद उवाच ॥ रामः पम्पासरो गत्वाऽशोचत्स शबरीं ततः ॥ हनूमताथ सुग्रीवं नीतो मित्रं चकार ह ॥ १ ॥ सप्त तालान्विनिर्भिद्य शरेणैकेन पश्यतः ॥ पादेन दुन्दुभेः कायं चिक्षेप दशयोजनम् ॥२॥ तद्रिपुं वालिनं हत्वा भ्रातरं वैरकारिणम् ॥ किष्किन्धां कपिराज्यं च रुमां तारां समर्पयत् ॥३॥ ऋष्यमूके हरीशाय किष्किन्धेशोऽब्रवीत्स च ॥ सीतां त्वं प्राप्स्यसे यद्वत्तथा राम करोमि ते ॥ ४ ॥ तच्छ्रुत्वा माल्यवत्पृष्ठे चातुर्मास्यं चकार सः ॥ किष्किन्धायां च सुग्रीवो यदा नायाति दर्शनम् ॥ ५ ॥ तदाऽब्रवीत्तं रामोक्तं लक्ष्मणो व्रज राघवम् ॥ न स सङ्कुचितः पन्था येन वाली हतो गतः ॥ ६ ॥ समये तिष्ठ सुग्रीव मा वालि-पथमन्वगाः ॥ सुग्रीव आह संसक्तो गतं कालं न बुद्धवान् ॥ ७ ॥ इत्युक्त्वा स गतो रामं नत्वोवाच हरीश्वरः ॥ सुग्रीव उवाच ॥ आनीता वानराः सर्वे सीतायाश्च गवेषणे ॥ ८ ॥ त्वन्मतात्प्रेषयिष्यामि विचिन्वन्तु च जानकीम् ॥ पूर्वादौ मासमायान्तु मासादूर्ध्वं निहन्मि तान् ॥ ९ ॥ इत्युक्ता वानराः पूर्वपश्चिमोत्तरमार्गगाः ॥ जग्मू रामं ससुग्रीवमपश्यन्तस्तु जानकीम् ॥ १० ॥ रामाङ्गुलीयं सङ्गृह्य हनुमान्वानरैः सह ॥ दक्षिणे मार्गयामास सुप्रभाया गुहान्तिके ॥ ११ ॥ मासादूर्ध्वं च विन्ध्यस्था अपश्यन्तस्तु जानकीम् ॥ ऊचुर्वृथा मरिष्यामो जटायुर्धन्य एव सः ॥१२॥ सीतार्थेयोऽत्यजत्प्राणात्रावणेन हतो रणे ॥ तच्छ्रुत्वा प्राह सम्पातिर्विहाय कपिभक्षणम् ॥१३॥ भ्राताऽसौ मे जटायुर्वै मयोड्डीनोऽर्कमण्डलम् ॥ अर्कतापाद्रक्षितोऽगाद्दग्धपक्षोऽहमभ्रगः ॥ १४ ॥ रामवार्ताश्रवात्पक्षौ जातौ भूयोऽथ जानकीम् ॥ पश्याम्यशोकवनिकागतां लङ्कागतां किल ॥ १५ ॥ शतयोजनविस्तीर्णे लवणाब्धौ त्रिकूटके ॥ ज्ञात्वा रामं ससुग्रीवं वानराः कथयन्तु वै ॥ १६॥ इत्यादिमहापुराणे आग्नेये रामायणे किष्किन्धा-काण्डवर्णनं नामाष्टमोऽध्यायः ॥ ८ ॥ अथ सुन्दरकाण्डवर्णनम् ॥ नारद उवाच ॥ सम्पातिवचनं श्रुत्वा हनुमानङ्गदादयः ॥ अब्धिं दृष्ट्वाऽब्रुवंस्तेऽब्धिं लङ्घयेत्को नु जीवयेत् ॥ १ ॥ कपीनां जीवनार्थाय रामकार्यप्रसिद्धये ॥ शतयोजनविस्तीर्णं पुप्लुवेऽब्धिं स मारुतिः ॥ २ ॥ दृष्ट्वोत्थितं च मैनाकं सिंहिकां विनिपात्य च ॥ लङ्कां दृष्ट्वा राक्षसानां गृहाणि वनितागृहे ॥ ३ ॥

न्यामुपसंहृत्य यागद्रव्यं समस्तकम् ॥ १ ॥ विन्यस्य नारसिंहेन सम्मन्त्र्य शतवारकम् ॥ सर्षपांस्तु फडन्तेन रक्षोघ्नान्सर्वतः क्षिपेत् ॥ २ ॥ शक्तिं सर्वात्मिकां तत्र न्यसेत्प्रासादरूपिणीम् ॥ सर्वौषधीः समाहृत्य विकिरानभिमन्त्रयेत् ॥ ३ ॥ शतवारं शुभे पात्रे वासुदेवेन साधकः ॥ संसाध्य पञ्चगव्यं तु पञ्चभिर्मूलमूर्तिभिः॥४॥नारायणान्तैः सम्प्रोक्ष्य कुशाग्रैस्तेन तां भुवम् ॥ विकिरान्वासुदेवेन क्षिपेदुत्तानपाणिना ॥ ५ ॥ त्रिधा पूर्वमुखास्तिष्ठन्ध्यायेद्विष्णुं तथा हृदि ॥ वर्द्धन्या सहिते कुम्भे साङ्गं विष्णुं प्रपूजयेत् ॥ ६ ॥ शतवारं मन्त्रयित्वा त्वस्त्रेणैव च वर्धनीम् ॥ अच्छिन्नधारया सिञ्चन्नीशानान्तं नयेच्च तम् ॥ ७ ॥ कलशं पृष्ठतो नीत्वा स्थापयेद्विकिरोपरि ॥ संहृत्य विकिरान्दर्भैः कुम्भेशं कर्करीं यजेत् ॥ ८ ॥ सवस्त्रे पञ्चरत्नाढ्यं स्थण्डिले पूजयेद्धरिम् ॥ अग्नावपि समभ्यर्च्य मन्त्रान्सञ्जप्य पूर्ववत् ॥ ९ ॥ प्रक्षाल्य पुण्डरीकेण विलिप्यान्तः सुगन्धिना ॥ उखामाज्येन सम्पूर्य गोक्षीरेण तु साधकः ॥ १० ॥ आलोक्य वासुदेवेन ततः सङ्कर्षणेन च ॥ तण्डुलानाज्यसंमृष्टान्क्षिपेत्क्षीरे सुसंस्कृते ॥ ११ ॥ प्रद्युम्नेन समालोड्य दर्व्या संघट्टयेच्छनैः ॥ पक्वमुत्तारयेत्पश्चादनिरुद्धेन देशिकः ॥ १२ ॥ प्रक्षाल्यालिप्य तत्कुर्यादूर्ध्वपुण्ड्रं तु भस्मना ॥ नारायणेन पार्श्वेषु चरुमेवं सुसंस्कृतम् ॥ १३॥ भागमेकं तु देवाय कलशाय द्वितीयकम् ॥ तृतीयेन तु भागेन प्रदद्यादाहुतित्रयम् ॥ १४ ॥ शिष्यैः सह चतुर्थं तु गुरुरद्यादिशुद्धये ॥ नारायणेन सम्मंत्र्य सप्तधा क्षीरवृक्षजम् ॥ १५ ॥ दन्तकाष्ठं भक्षयित्वा त्यक्त्वा ज्ञात्वा स्वपातकम् ॥ ऐन्द्राग्न्युत्तरकेशानीमुखं पतितमुत्तमम् ॥ १६ ॥ शुभं सिंहशतं हुत्वा आचम्याथ प्रविश्य च ॥ पूजागारं न्यसेन्मन्त्री प्राच्यां विष्णुं प्रदक्षिणम् ॥ १७ ॥ संसारार्णवमग्नानां पशूनां पाशमुक्तये ॥ त्वमेव शरणं देव सदा त्वं भक्तवत्सल ॥ १८ ॥ देवदेवानुजानीहि प्राकृतैः पाशबन्धनैः ॥ पाशितान्मोचयिष्यामि त्वत्प्रसादात्पशूनिमान् ॥ १९ ॥ इति विज्ञाप्य देवेशं सम्प्रविश्य पशूंस्ततः ॥ धारणाभिस्तु संशोध्य पूर्ववज्ज्वलनादिना ॥ २० ॥ संस्कृत्य मूर्त्या संयोज्य नेत्रे बद्ध्वा प्रदर्शयेत् ॥ पुष्पपूर्णाञ्जलींस्तत्र क्षिपेत्तन्नाम योजयेत् ॥ २१ ॥ अमन्त्रमर्चनं तत्र पूर्ववत्कारयेत्क्रमात् ॥ यस्यां मूर्त्तौ पतेत्पुष्पं तस्य तन्नाम निर्दिशेत् ॥ २२ ॥ शिखान्तसम्मितं सूत्रं पादाङ्गुष्ठादिषड्गुणम् ॥ कन्यया कर्त्तितं रक्तं पुनस्तत्त्रिगुणीकृतम् ॥ २३ ॥ यस्यां

संलीयते विश्वं यया विश्वं प्रसूयते ॥ प्रकृतिं प्रक्रियाभेदैः संस्थितां तत्र चिंतयेत् ॥२४॥ तेन प्राकृतिकान्पाशान्ग्रथित्वा तत्त्वसङ्ख्यया ॥ कृत्वा शरावे तत्सूत्रं कुण्डपार्श्वे निधाय तु ॥२५॥ ततस्तत्त्वानि सर्वाणि ध्यात्वा शिष्यतनौ न्यसेत् ॥ मृष्टिक्रमात्प्रकृत्यादिपृथिव्यन्तानि देशिकः ॥ २६॥ तत्रैकधा पञ्चधा स्याद्दशद्वादशधापि वा ॥ दातव्यः सर्वभेदेन ग्रथितस्तत्त्वचिन्तकैः ॥२७॥ अङ्गैः पञ्चभिरध्वानं निखिलं विकृतिक्रमात् ॥ तन्मात्रात्मानि संहृत्य मायासूत्रे पशोस्तनौ ॥ २८ ॥ प्रकृतिर्लिंगशक्तिश्च कर्त्ता बुद्धिस्तथा मनः ॥ पञ्चतन्मात्रबुद्ध्याख्यं कर्माख्यं भूतपञ्चकम् ॥ २९ ॥ ध्यायेच्च द्वादशात्मानं सूत्रे देहे तथेच्छया ॥ हुत्वा सम्पातविधिना सृष्टेः सृष्टिक्रमेण तु ॥३०॥ एकैकशतहोमेन दत्त्वा पूर्णाहुतिं ततः ॥ शरावे संपुटीकृत्य कुंभेशाय निवेदयेत् ॥ ३१ ॥ अधिवास्य यथान्यायं भक्तं शिष्यं तु दीक्षयेत् ॥ करणीं कर्त्तरीं वापि रजांसि खटिकामपि ॥ ३२ ॥ अन्यदप्युपयोगि स्यात्सर्वं तद्वायुगोचरे ॥ संस्थाप्य मूलमन्त्रेण परामृश्याधिवासयेत् ॥ ३३ ॥ नमो भूतेभ्यश्च बलिः कुशे देयः स्मरन्हरिम् ॥ मण्डपं भूषयित्वाथ वितानघटलड्डुकैः ॥ ३४ ॥ मण्डलेऽथ यजेद्विष्णुं ततः सन्तर्प्य पावकम् ॥ आहूय दीक्षयेच्छिष्यान्बद्धपद्मासनस्थितान् ॥ ॥३५॥ सम्प्रोक्ष्य विष्णुं हस्तेन मूर्द्धानं स्पृश्य वै क्रमात् ॥ प्रकृत्यादिविकृत्यन्तां साधिभूताधिदैवताम् ॥ ३६ ॥ सृष्टिमाध्यात्मिकीं कृत्वा हृदि तां संहरेत्क्रमात् ॥ तन्मात्रभूतां सकलां जीवेन समतां गताम् ॥ ३७ ॥ ततः सम्प्रार्थ्य कुम्भेशं सूत्रं संहृत्य देशिकः ॥ अग्रे समीपमागत्य पार्श्वे तं सन्निवेश्य तु ॥३८॥ मूलमन्त्रेण सृष्टीशमाहुतीनां शतेन तम् ॥ उदासीनमथासाद्य पूर्णाहुत्या च देशिकः ॥३९॥ शुक्लं रजः समादाय मूलेन शतमन्त्रितम् ॥ सन्ताड्य हृदयं तेन हुंफट्कारान्तसंयुतैः ॥ ४० ॥ वियोगपदसंयुक्तैर्बीजैः पादादिभिः क्रमात् ॥ पृथिव्यादीनि तत्त्वानि विश्लिष्य जुहुयात्ततः ॥४१॥ वह्नावखिलतत्त्वानामालये व्याहृते हरौ ॥ नीयमानं क्रमात्सर्वं तत्राध्वानं स्मरेद्बुधः ॥ ४२ ॥ ताडनेन वियोज्यैव आदायापाद्य शाम्यताम् ॥ प्रकृत्याहृत्य जुहुयाद्यथोक्ते जातवेदसि ॥ ४३ ॥ गर्भाधानं जातकर्म भोगं चैव लयं तथा ॥ हुत्वाष्टौ तत्र तत्रैव ततः शुद्धन्तु होमयेत् ॥ ४४ ॥ शुद्धं तत्त्वं समुद्धृत्य पूर्णाहुत्या तु देशिकः ॥ सन्धयेद्धि परे तत्त्वे यावदव्याकृतं क्रमात् ॥४५॥ तत्परं ज्ञानयोगेन विलाप्य परमात्मनि ॥





विमुक्तबन्धनं जीवं परस्मिन्नव्यये पदे ॥ ४६ ॥ निर्वृतं परमानन्दे शुद्धे बुद्धे स्मरेद्बुधः ॥ दद्यात्पूर्णाहुतिं पश्चादेवं दीक्षा समाप्यते ॥ ४७ ॥ प्रयोगमन्त्रान्वक्ष्यामि यैर्दीक्षाहोमसंलयः ॥ ॐ यं भूतानि विशुद्धं हुं फट् ॥ अनेन ताडनं कुर्य्याद्वियोजनमिह द्वयम् ॥ ४८ ॥ ॐ यं भूतान्यापातयेऽहम् । आदानं कृत्वा चानेन प्रकृत्या योजनं शृणु ॥ ॐ य भूतानि पुंश्चाहो । होममन्त्रं प्रवक्ष्यामि ततः पूर्णाहुतेर्मनुम् ॥ ४९ ॥ ॐ भूतानि संहर स्वाहा । ॐ अं ॐ नमो भगवते वासुदेवाय वौषट् ॥ पूर्णाहुत्यनन्तरे तु तत्त्वे शिष्यं तु साधयेत् ॥ एवं तत्त्वानि सर्वाणि क्रमात्संशोधयेद्बुधः ॥ ५० ॥ नमोऽन्तेन स्वबीजेन ताडनादिपुरःसरम् ॥ ॐ वां कर्मेन्द्रियाणि । ओं दें बुद्धीन्द्रियाणि ॥ यं बीजेन समानन्तु ताडानादिप्रयोगकम् ॥ ५१ ॥ ॐ सुंगन्धतन्मात्रे वियुङ्क्ष्व हुं फट् ॐ सम्पाहिहा ॥ ॐ स्वं स्वं युङ्क्ष्व प्रकृत्या । ॐ सुं हुं गन्धतन्मात्रे संहर स्वाहा । ततः पूर्णाहुतिश्चैवमुत्तरेषु प्रयुज्यते ॥ ॐ रां रसतन्मात्रे । ॐ भें रूप तन्मात्रे । ॐ रं स्पर्शतन्मात्रे । ॐ एं शब्दतन्मात्रे । ॐ भं नमः । ॐ सों अहङ्कारः । ॐ नं बुद्धौ ॐ ॐ प्रकृतौ । एकमूर्त्तावयं प्रोक्तो दीक्षायोगः समासतः ॥ एवमेव प्रयोगस्तु नवव्यूहादिके स्मृतः ॥ ५२ ॥ दग्ध्वा परस्मिन्सन्दध्यान्निर्वाणे प्रकृतिं नरः ॥ अविकारे समादध्यादीश्वरे प्रकृतिं नरः ॥ ५३ ॥ शोधयित्वाथ भूतानि कर्माङ्गानि विशोधयेत् ॥ बुद्ध्याख्यान्यथ तन्मात्रं मनो ज्ञानमहङ्कृतिम् ॥ ५४ ॥ लिङ्गात्मानं विशोध्यान्ते प्रकृतिं शोधयेत्पुनः ॥ पुरुषं प्राकृतं शुद्धमीश्वरे धाम्नि संस्थितम् ॥ ५५ ॥ स्वगोचरीकृताशेषभोगं मुक्तौ कृतास्पदम् ॥ ध्यायन्पूर्णाहुतिं दद्याद्दीक्षेयं त्वधिकारिणी ॥ ५६ ॥ अङ्गैराराध्य मन्त्रस्य नीत्वा तत्त्वगणं समम् ॥ क्रमादेवं विशोध्यान्ते सर्वसिद्धिसमन्वितम् ॥ ५७ ॥ ध्यायन्पूर्णाहुतिं दद्याद्दीक्षेयं साधके स्मृता ॥ द्रव्यस्य वा न सम्पत्तिरशक्तिर्वात्मनो यदि ॥ ५८ ॥ इष्ट्वा देवं यथापूर्वं सर्वोपकरणान्वितम् ॥ सद्योऽधिवास्य द्वादश्यां दीक्षयेद्देशिकोत्तमः ॥ ५९ ॥ भक्तो विनीतः शारीरैर्गुणैः सर्वैः समन्वितः ॥ शिष्यो नातिधनी यस्तु स्थण्डिलेऽभ्यर्च्य दीक्षयेत् ॥ ६० ॥ अध्वानं निखिलं देवं भौतं वाध्यात्मिकं कृतम् ॥ सृष्टिक्रमेण शिष्यस्य देहे ध्यात्वा तु देशिकः ॥ ६१ ॥ अष्टाष्टाहुतिभिः पूर्वं क्रमात्सन्तर्प्य सृष्टिमान् ॥ स्वमन्त्रैर्वासुदेवादीञ्ज्वलनादीन्विसर्जयेत् ॥ ६२ ॥ होमेन शोधयेत्पश्चात्संहार-

क्रमयोगतः ॥ यानि सूत्राणि बद्धानि मुक्त्वा कर्माणि देशिकः ॥ ६३ ॥ शिष्यदेहात्समाहृत्य क्रमात्तत्त्वानि शोधयेत् ॥ अग्नौ प्राकृतिके विष्णौ लयं नीत्वाधिदैविके ॥ ६४ ॥ शुद्धं तत्त्वमशुद्धेन पूर्णाहुत्या तु साधयेत् ॥ शिष्ये प्रकृतिमापन्ने दग्ध्वा प्राकृतिकान्गुणान् ॥ ६५ ॥ मोचयेदधिकारे वा नियुज्याद्देशिकः शिशून् ॥ अथान्यां शक्तिदीक्षां वा कुर्याद्भावे स्थितो गुरुः ॥ ६६ ॥ भक्त्या सम्प्रतिपन्नानां यतीनां निर्द्धनस्य च ॥ सम्पूज्य स्थण्डिले विष्णुं पार्श्वस्थं स्थाप्य पुत्रकम् ॥ ६७ ॥ देवताभिमुखः शिष्यस्तिर्यगास्यः स्वयं स्थितः ॥ अध्वानं निखिलं ध्यात्वा पर्वभिः स्वैर्विकल्पितम् ॥ ६८ ॥ शिष्यदेहे तथा देवमाधिदैविकयाजनम् ॥ ध्यानयोगेन सञ्चिन्त्य पूर्ववत्ताडनादिना ॥ ६९ ॥ क्रमात्तत्त्वानि सर्वाणि शोधयेत्स्थण्डिले हरौ ॥ ताडनेन वियोज्याथ गृहीत्वात्मनि तत्परः ॥ ७० ॥ देवे संयोज्य संशोध्य गृहीत्वा तत्त्वभावतः ॥ आनीय शुद्धभावेन सन्धयित्वा क्रमेण तु ॥ ७१ ॥ शोधयेद्ध्यानयोगेन सर्वतो ज्ञानमुद्रया ॥ शुद्धेषु सर्वतत्त्वेषु प्रधाने चेश्वरे स्थिते ॥ ७२ ॥ दग्ध्वा निर्वापयेच्छिष्यान्पदे चैशे नियोजयेत् ॥ निनयेत्सिद्धिमार्गे वा साधकं देशिकोत्तमः ॥ ७३ ॥ एवमेवाधिकारस्थो गृही कर्म्माण्यतन्द्रितः ॥ आत्मानं शोधयंस्तिष्ठेद्यावद्रागक्षयो भवेत् ॥ ७४ ॥ क्षीणरागमथात्मानं ज्ञात्वा संशुद्धकिल्बिषः ॥ आरोप्य पुत्रे शिष्ये वा ह्यधिकारं तु संयमी ॥ ७५ ॥ दग्ध्वा मायामयं पाशं प्रव्रज्य स्वात्मनि स्थितः ॥ शरीरपातमाकाङ्क्षन्नासीताव्यक्तलिङ्गवान् ॥ ७६ ॥ इत्यादिमहापुराणे आग्नेये सर्वदीक्षाकथनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥ अथाचार्याभिषेकविधानम् ॥ नारद उवाच ॥ अभिषेकं प्रवक्ष्यामि यथाकुर्यात्तु पुत्रकः ॥ सिद्धिभाक्साधको येन रोगी रोगाद्विमुच्यते ॥ १ ॥ राज्यं राजा सुतं स्त्री च प्राप्नुयान्मलनाशनम् ॥ मृत्स्नाकुम्भान्सुरत्नाढ्यान्मध्यपूर्वादितो न्यसेत् ॥ २ ॥ सहस्रावर्त्तितान्कुर्यादथवा शतवर्त्तितान् ॥ मंडपे मण्डले विष्णुं प्राच्यैशान्योश्च पीठके ॥ ३ ॥ निवेश्य सकलीकृत्य पुत्रकं साधकादिकम् ॥ अभिषेकं समभ्यर्च्य कुर्याद्गीतादिपूर्वकम् ॥ ४ ॥ दद्याच्च योगपीठादीन्स्वनुग्राह्यास्त्वया नराः ॥ गुरुश्च समयान्ब्रूयाद्गुप्तः शिष्योऽथ सर्वभाक् ॥ ५ ॥ इत्यादिमहापुराणे आग्नेये आचार्याभिषेको नामाष्टाविंशोऽध्यायः ॥ २८ ॥ अथ सर्वतोभद्रमण्डलविधिः ॥ नारद उवाच ॥ साधकः साधयेन्मन्त्रं

देवतायतनादिके ॥ शुद्धभूमौ गृहे प्राच्ये मण्डले हरिमीश्वरम् ॥ १ ॥ चतुरश्रीकृते क्षेत्रे मण्डलादीनि वै लिखेत् ॥ रसबाणाक्षि-
कोष्ठेषु सर्वतोभद्रमालिखेत् ॥ २ ॥ षट्त्रिंशत्कोष्ठकैः पद्मं पीठं पंक्त्या बहिर्भवेत् ॥ द्वाभ्यां तु वीथिका तस्माद्वाभ्यां द्वाराणि
दिक्षु च ॥ ३ ॥ वर्तुलं भ्रामयित्वा तु पद्मक्षेत्रं पुरोदितम् ॥ पद्मार्द्धे भ्रामयित्वा तु भागं द्वादशकं बहिः ॥ ४ ॥ विभज्य भ्रामयेच्छेषं
चतुः क्षेत्रं तु वर्तुलम् ॥ प्रथमं कर्णिकाक्षेत्रं केसराणां द्वितीयकम् ॥ ५ ॥ तृतीयं दलसन्धीनां दलाग्राणां चतुर्थकम् ॥ प्रसार्य
कोणसूत्राणि कोणदिङ्मध्यमं ततः ॥ ६ ॥ निधाय केसराग्रे तु दलसन्धींस्तु लाञ्छयेत् ॥ पातयित्वाथ सूत्राणि तत्र पत्राष्टकं
लिखेत् ॥ ७ ॥ जलसन्ध्यन्तरालं तु मानं मध्ये निधाय तु ॥ दलाग्रं भ्रामयेत्तेन तदग्रे तदनन्तरम् ॥ ८ ॥ तदन्तरालं तत्पार्श्वे
कृत्वा बाह्यक्रमेण च॥ केसरे तु लिखेद्वौ द्वौ दलमध्ये ततः पुनः ॥९॥ पद्मलक्ष्मैतत्सामान्यं द्विषट्कदलमुच्यते ॥ कर्णिकार्द्धेन मानेन
प्राक्संस्थं भ्रामयेत्क्रमात् ॥ १० ॥ तत्पार्श्वे भ्रमयोगेन कुण्डल्यः षड् भवन्ति हि ॥ एवं द्वादश मत्स्याः स्युर्द्विषट्कदलकं च
तैः ॥ ११ ॥ पञ्चपत्राभिसिध्यर्थं मत्स्यै कृत्वैवमब्जकम् ॥ व्योमरेखाबहिः पीठं तत्र कोष्ठानि मार्जयेत् ॥ १२ ॥ त्रीणि कोणेषु
पादार्थं द्विद्विकान्यपराणि तु ॥ चतुर्दिक्षु विलिप्तानि पत्रकाणि भवन्त्युत ॥ १३ ॥ ततः पङ्क्तिद्वयं दिक्षु वीथ्यथ तु विलोपयेत् ॥
द्वाराण्याशासु कुर्वीत चत्वारि चतसृष्वपि ॥ १४ ॥ द्वाराणां पार्श्वतः शोभा अष्टौ कुर्याद्विचक्षणः ॥ तत्पार्श्वे उपशोभास्तु
तावत्यः परिकीर्त्तिताः ॥ १५ ॥ समीप उपशोभानां कोणास्तु परिकीर्त्तिताः ॥ चतुर्दिक्षु ततो द्वे द्वे चिन्तयेन्मध्यकोष्ठके ॥ १६ ॥
चत्वारि बाह्यतो मृज्यादेकैकं पार्श्वयोरपि ॥ शोभार्थं पार्श्वयोस्त्रीणि त्रीणि लुम्पेद्दलस्य तु ॥ १७॥ तद्वद्विपर्यये कुर्यादुपशोभां ततः
परम् ॥ कोणस्यान्तर्बहिस्त्रीणि चिन्तयेद्द्विर्विभेदतः ॥१८॥ एवं षोडशकोष्ठं स्यादेवमन्यत्तु मण्डलम् ॥ द्विषट्कभागे षट्त्रिंशत्पदं
पद्मं तु वीथिका ॥१९॥ एका पङ्क्तिः पराभ्यां तु द्वारशोभादि पूर्ववत् ॥ द्वादशाङ्गुलिभिः पद्ममेकहस्ते तु मण्डले ॥२०॥ द्विहस्ते ॥ १९ ॥
हस्तमात्रं स्याद्वृद्ध्या द्वारेण वाचरेत् ॥ अपीठं चतुरस्रं स्याद्विकरं चक्रपङ्कजम् ॥२१॥ पद्मार्द्धं नवभिः प्रोक्तं नाभिस्तु तिसृभिः
स्मृता ॥ अष्टाभिस्त्वरकान्कुर्यान्नेमिं तु चतुरङ्गुलैः ॥२२॥ त्रिधा विभज्य च क्षेत्रमन्तर्द्वाभ्यामथाङ्कयेत् ॥ पंचान्तस्त्वारसिद्ध्यर्थं

तेष्वास्फाल्य लिखेदरान् ॥ २३ ॥ इन्दीवरदलाकारानथवा मातुलुङ्गवत् ॥ पद्मपत्रायतान्वापि लिखेदिच्छानुरूपतः ॥ २४ ॥
भ्रामयित्वा बर्हिर्नेमावरसन्ध्यन्तरे स्थितः ॥ भ्रामयेदरमूलं तु सन्धिमध्ये व्यवस्थितः ॥२५॥ अरमध्ये स्थितो मध्यमरणिं भ्राम-
येत्समम् ॥ एवं संद्ध्यंनराः सम्यङ्मातुलुङ्गनिभाः समाः ॥ २६ ॥ विभज्य सप्तधा क्षेत्रं चतुर्दशकरं समम् ॥ द्विधा कृते शतं ह्यत्र
पणवत्यधिकानि तु ॥ २७ ॥ कोष्ठकानि चतुर्भिस्तैर्मध्ये भद्रं समालिखेत् ॥ परितो विसृजेद्वीथ्यै तथा दिक्षु समालिखेत्
॥ २८ ॥ कमलानि पुनर्वीथ्यै परितः परिमृज्य तु ॥ द्वे द्वे मध्यमकोष्ठे तु ग्रीवार्थं दिक्षु लोपयेत् ॥ २९ ॥ चत्वारि बाह्यतः
पश्चात्त्रीणि त्रीणि तु लोपयेत् ॥ ग्रीवापार्श्वे बहिस्त्वेका शोभा सा परिकीर्तिता ॥ ३० ॥ विसृज्य बाह्यकोणेषु सप्तान्तस्त्रीणि
मार्जयेत् ॥ मण्डलं नवभागं स्यान्नवव्यूहं हरिं यजेत् ॥ ३१ ॥ पञ्चविंशतिकव्यूहं मण्डलं विश्वरूपकम् ॥ द्वात्रिंशद्धस्तकं क्षेत्रं
भक्तं द्वात्रिंशता समम् ॥ ३२ ॥ एवंकृते चतुर्विंशत्यधिकं तु सहस्रकम् ॥ कोष्ठकानां समुद्दिष्टं मध्ये षोडशकोष्ठकैः ॥ ३३ ॥
भद्रकं परिलिख्याथ पार्श्वे पङ्क्तिं विमृज्य तु ॥ ततः षोडशभिः कोष्ठैर्दिक्षु भद्राष्टकं लिखेत् ॥ ३४ ॥ ततोऽपि पङ्क्तिं सम्मृज्य
तद्वत्षोडशभद्रकम् ॥ लिखित्वा परितः पङ्क्तिं विमृज्याथ प्रकल्पयेत् ॥३५॥ द्वारद्वादशकं दिक्षु त्रीणि त्रीणि यथाक्रमात् ॥ षड्भिश्च
परिलुप्यान्तर्मध्ये चत्वारि पार्श्वयोः ॥ ३६ ॥ चत्वार्यन्तर्बहिर्द्वे तु शोभार्थं परिमृज्य तु ॥ उपद्वारप्रसिद्ध्यर्थं त्रीण्यन्तः पञ्च
बाह्यतः ॥ ३७ ॥ परिमृज्य तथा शोभां पूर्ववत्परिकल्पयेत् ॥ बाह्यैः कोणेषु सप्तान्तस्त्रीणि कोष्ठानि मार्जयेत् ॥ ३८ ॥
पञ्चविंशतिकव्यूहे परं ब्रह्म यजेच्छुभे ॥ मध्ये पूर्वादितः पद्मे वासुदेवादयः क्रमात् ॥ ३९ ॥ वराहं पूजयित्वा च पूर्वपद्मे ततः
क्रमात् ॥ व्यूहान्सम्पूजयेत्तावद्यावत्षट्त्रिंशगो भवेत् ॥ ४० ॥ यथोक्तं व्यूहमखिलमेकस्मिन्पङ्कजे क्रमात् ॥ यष्टव्यमिति
यत्नेन प्रचेता मन्यतेऽध्वरम् ॥ ४१ ॥ सत्यं तु मूर्तिभेदेन विभक्तं मन्यतेऽच्युतम् ॥ चत्वारिंशत्करं क्षेत्रं ह्युत्तरं विभजेत्क्रमात् ॥
॥ ४२ ॥ एकैकं सप्तधा भूयस्तथैकैकं द्विधा पुनः ॥ चतुष्षष्ट्युत्तरं सप्तशतान्येकं सहस्रकम् ॥ ४३ ॥ कोष्ठकानां भद्रकं च
मध्ये षोडशकोष्ठकैः ॥ पार्श्वे वार्थी ततश्चाष्टभद्राण्यथ च वीथिका ॥ ४४ ॥ षोडशाब्जान्यथो वीथी चतुर्विंशतिपङ्कजम् ॥





वीथीपद्मानि द्वात्रिंशत्पङ्क्तिवीथिकजान्यथ ॥ ४५ ॥ चत्वारिंशत्ततो वीथी शेषपङ्क्तित्रयेण च ॥ द्वारशोभोपशोभाः स्युर्दिक्षु मध्ये विलोप्य च ॥ ४६ ॥ द्विचतुष्पद्द्वारसिद्ध्यै चतुर्दिक्षु विलोपयेत् ॥ पञ्च त्रीण्येककं बाह्ये शोभोपद्वारसिद्धये ॥४७॥ द्वाराणां पार्श्वयोरन्तः षड् वा चत्वारि मध्यतः ॥ द्वे द्वे लुप्येदेवमेव षड् भवन्त्युपशोभिकाः ॥ ४८ ॥ एकस्यां दिशि सङ्ख्याः स्युश्चतस्रः परिसङ्ख्यया ॥ एकैकस्यां दिशि त्रीणि द्वाराण्यपि भवन्त्युत ॥ ४९ ॥ पञ्च पञ्च तु कोणेषु पङ्क्तौ पङ्क्तौ क्रमात्सृजेत् ॥ कोष्ठकानि भवेदेवं मत्येष्टं मण्डलं शुभम् ॥५०॥ इत्यादिमहापुराणे आग्नेये सर्वतोभद्रमण्डलादिविधिर्नामोनत्रिंशोऽध्यायः ॥२९॥

अथ मण्डलविधिः ॥ नारद उवाच ॥ मध्ये पद्मे यजेद्ब्रह्म साङ्गं पूर्वेऽब्जनाभकम् ॥ आग्नेयेऽब्जे च प्रकृतिं याम्येऽब्जे पुरुषं यजेत् ॥ १ ॥ पुरुषाद्दक्षिणे वह्निं नैर्ऋते वारुणेऽनिलम् ॥ आदित्यमैन्दवे पद्मे ऋग्यजुश्चैशपद्मके ॥ २ ॥ इन्द्रादींश्च द्वितीयायां पद्मे षोडशके तथा ॥ सामाथर्वाणमाकाशं वायुं तेजस्तथा जलम् ॥ ३ ॥ पृथिवी च मनश्चैव श्रोत्रं त्वक् चक्षुरर्चयेत् ॥ रसनां च तथा घ्राणं भूर्भुवश्चैव षोडशम् ॥ ४ ॥ महर्जनस्तपः सत्यं अत्यग्निष्टोममेव च ॥ तथाग्निष्टोमकं चोक्थं षोडशीं वाजपेयकम् ॥ ५ ॥ अतिरात्रं च सम्पूज्य तथाप्तोर्याममर्चयेत् ॥ मनो बुद्धिमहङ्कारं शब्दं स्पर्शं च रूपकम् ॥ ६ ॥ रसं गन्धं च पद्मेषु चतुर्विंशतिषु क्रमात् ॥ जीवं मनो धियं चाहं प्रकृतिं शब्दमात्रकम् ॥ ७ ॥ वासुदेवादिमूर्तींश्च तथा चैव दशात्मकम् ॥ मनः श्रोत्रं त्वचं प्राच्यं चक्षुश्च रसनं तथा ॥ ८ ॥ घ्राणं वाक्पाणिपादं च द्वात्रिंशद्वारिजेष्विमान् ॥ चतुर्थावरणे पूज्याः साङ्गाः सपरिवारकाः ॥ ९ ॥ पायूपस्थौ च सम्पूज्य मासानां द्वादशाधिपान् ॥ पुरुषोत्तमादिषड्विंशान्बाह्यावरणके यजेत् ॥ १० ॥ चक्राब्जे तेषु सम्पूज्या मासानां पतयः क्रमात् ॥ अष्टौ प्रकृतयः षड् वा पञ्चाथ चतुरोऽपरे ॥ ११ ॥ रजःपातं ततः कुर्याल्लिखिते मंडले शृणु ॥ कर्णिका पीतवर्णा स्याद्रेखाः सर्वाः सिताः समाः ॥ १२ ॥ द्विहस्तेऽङ्गुष्ठमात्राः स्युर्हस्ते चार्द्धसमाः सिताः ॥ पद्मं शुक्लेन सन्धींस्तु कृष्णेन श्यामतोऽथवा ॥ १३ ॥ केसरा रक्तपीताः स्युः कोणान्रक्तेन पूरयेत् ॥ भूषयेद्योगपीठं तु यथेष्टं सार्ववर्णिकैः ॥ १४ ॥ लतावितानपत्राद्यैर्वीथिकामुपशोभयेत् ॥ पीठद्वारे तु शुक्लेन शोभा रक्तेन पीततः ॥ १५ ॥ उपशोभां च नीलेन कोणसङ्ख्यांश्च

वै सितान् ॥ भद्रके पूरणं प्रोक्तमेवमन्येषु पूरणम् ॥ १६ ॥ त्रिकोणं सितरक्तेन कृष्णेन च विभूषयेत् ॥ द्विकोणं रक्तपीताभ्यां नाभिं कृष्णेन चक्रके ॥ १७ ॥ अरकान्पीतरक्ताभिः श्यामान्नेमिं तु रक्ततः ॥ सितश्यामारुणाः कृष्णाः पीता रेखास्तु बाह्यतः ॥ १८ ॥ शालिपिष्टादि शुक्लं स्याद्रक्तं कौसुम्भकादिकम् ॥ हरिद्रया च हारिद्रं कृष्णं स्याद्दग्धधान्यतः ॥ १९ ॥ शमीपत्रादिकैः श्यामं बीजानां लक्षजाप्यतः ॥ चतुर्लक्षस्तु मंत्राणां विद्यानां लक्षसाधनम् ॥ २० ॥ अयुतं बुद्धविद्यानां स्तोत्राणां च सहस्रकम् ॥ पूर्वमेवाथ लक्षेण मन्त्रशुद्धिस्तथात्मनः ॥ २१ ॥ तथापरेण लक्षेण मंत्रः क्षेत्रीकृता भवेत् ॥ पूर्वसेवासमो होमो बीजानां सम्प्रकीर्तितः ॥ २२ ॥ पूर्वसेवा दशांशेन मन्त्रादीनां प्रकीर्तिता ॥ पुरश्चरणमन्त्रे तु मासिकं व्रतमाचरेत् ॥ २३ ॥ भुवि न्यसेद्वामपादं न गृह्णीयात्प्रतिग्रहम् ॥ एवं द्वित्रिगुणेनैव मध्यमोत्तमसिद्धयः ॥ २४ ॥ मन्त्रध्यानं प्रवक्ष्यामि येन स्यान्मंत्रजं फलम् ॥ स्थूलं शब्दमयं रूपं विग्रहं बाह्यमिष्यते ॥ २५ ॥ सूक्ष्मं ज्योतिर्मयं रूपं हार्दं चिन्तामयं भवेत् ॥ चिन्तया रहितं यत्तु तत्परं परिकीर्तितम् ॥ २६ ॥ वाराहसिंहशक्तीनां स्थूलरूपं प्रधानतः ॥ चिन्तया रहितं रूपं वासुदेवस्य कीर्तितम् ॥ २७ ॥ इतरेषां स्मृतं रूपं हार्दंचिन्तामयं सदा ॥ स्थूलं वैराजमाख्यात सूक्ष्मं वै लिङ्गित भवेत् ॥ २८ ॥ चिन्तया रहितं रूपमैश्वरं परिकीर्तितम् ॥ हृत्पुण्डरीकनिलयं चैतन्यं ज्योतिरव्ययम् ॥ २९ ॥ बीजं बीजात्मकं ध्यायेत्कदम्बकुसुमाकृति ॥ कुम्भान्तरगतो दीपो निरुद्धप्रसवो यथा ॥ ३० ॥ संहतः केवलस्तिष्ठेदेवं मन्त्रेश्वरो हृदि ॥ अनेकसुषिरे कुम्भे तावन्मात्रा गभस्तयः ॥ ३१ ॥ प्रसरन्ति बहिस्तद्वन्नाडीभिर्बीजरश्मयः ॥ अथावभासतो दैवीमात्मीकृत्य तनुं स्थिताः ॥ ३२ ॥ हृदयात्प्रस्थिता नाड्यो दर्शनेन्द्रियगोचराः ॥ अग्नीषोमात्मके तासां नाड्यौ नासाग्रसंस्थिते ॥ ३३ ॥ सम्यग्गुह्येन योगेन जित्वा देहसमीरणम् ॥ जपध्यानरतो मन्त्री मन्त्रलक्षणमश्नुते ॥३४॥ संशुद्धभूततन्मात्रः सकामो योगमभ्यसन् ॥ अणिमादिमवाप्नोति विरक्तः प्रविलङ्घ्य च ॥ देवात्मको भूतमात्रान्मुच्यते चेन्द्रियग्रहात् ॥३५॥ इत्यादिमहापुराणे आग्नेये मण्डलादिवर्णनं नाम त्रिंशोऽध्यायः ॥३०॥ अथ कुशापामार्जनविधानम् ॥ अग्निरुवाच ॥ रक्षां स्वस्य परेषां च वक्ष्ये तां मार्जनाह्वयाम् ॥ यया विमुच्यते दुःखैः सुखं च प्राप्नुयान्नरः ॥ १ ॥

॥ ओं नमः परमार्थाय पुरुषाय महात्मने ॥ अरूपबहुरूपाय व्यापिने परमात्मने ॥ २ ॥ निष्कल्मषाय शुद्धाय ध्यान-
योगरताय च ॥ नमस्कृत्य प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ३ ॥ वराहाय नृसिंहाय वामनाय महात्मने ॥ नमस्कृत्य
प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ४ ॥ त्रिविक्रमाय रामाय वैकुंठाय नराय च ॥ नमस्कृत्य प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः
॥५॥ वराह नरसिंहेश वामनेश त्रिविक्रम ॥ हयग्रीवेश सर्वेश हृषीकेश हराशुभम् ॥६॥ अपराजित चक्राद्यैश्चतुर्भिः परमायुधैः ॥
अखण्डितानुभावैस्त्वं सर्वदुःखहरो भव ॥ ७ ॥ हरामुकस्य दुरितं सर्वं च कुशलं कुरु ॥ मृत्युबन्धार्त्तिभयदं दुरितस्य च यत्फ-
लम् ॥ ८ ॥ पराभिध्यानसहितैः प्रयुक्तं चाभिचारकम् ॥ गदस्पर्शमहारोगप्रयोगं जरया जर ॥ ९ ॥ ओं नमो वासुदेवाय नमः
कृष्णाय खड्गिने ॥ नमः पुष्करनेत्राय केशवायादिचक्रिणे ॥ १० ॥ नमः कमलकिञ्जल्कपीतनिर्मलवाससे ॥ महाहवरिपुस्कन्ध-
सृष्टचक्राय चक्रिणे ॥ ११ ॥ दंष्ट्रोद्धृतक्षितिभृते त्रयीमूर्त्तिमते नमः ॥ महायज्ञवराहाय शेषभोगाङ्कशायिने ॥ १२ ॥ तप्तहाटक-
केशाग्रज्वलत्पावकलोचन ॥ वज्राधिकनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥ १३ ॥ काश्यपायातिह्रस्वाय ऋग्यजुःसामभूषित ॥
तुभ्यं वामनरूपायाक्रमते गां नमो नमः ॥ १४ ॥ वराहाशेषदुःखानि सर्वपापफलानि वै ॥ मर्द मर्द महादंष्ट्र मर्द मर्द च तत्फलम्
॥ १५ ॥ नरसिंह करालास्य दन्तप्रान्तानलोज्ज्वल ॥ भञ्ज भञ्ज निनादेन दुष्टान्पश्यार्त्तिनाशन ॥ १६ ॥ ऋग्यजुःसामगर्भाभि-
र्वाग्भिर्वामनरूपधृक् ॥ प्रशम सर्वदुःखानि नयत्वस्य जनार्दनः ॥१७॥ ऐकाहिकं द्व्याहिकं च तथा त्रिदिवसं ज्वरम् ॥ चातुर्थिकं
तथात्युग्रं तथैव सततं ज्वरम् ॥ १८ ॥ दोषोत्थं सन्निपातोत्थं तथैवागन्तुकं ज्वरम् ॥ शमं नयाशु गोविंद च्छिन्धि च्छिन्ध्यस्य
वेदनाम् ॥१९॥ नेत्रदुःखं शिरो दुःखं दुःखं चोदरसम्भवम् ॥ अन्तःश्वासमतिश्वासं परितापं सवेपथुम् ॥२०॥ गुदघ्राणांघ्रिरोगांश्च
कुष्ठरोगांस्तथा क्षयम् ॥ कामलादींस्तथा रोगान्प्रमेहांश्चातिदारुणान् ॥ २१ ॥ भगन्दरातिसारांश्च मुखरोगांश्च वल्गुलीम् ॥
अश्मरीमूत्रकृच्छ्रांश्च रोगानन्यांश्च दारुणान् ॥ २२ ॥ ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ॥ कफोद्भवाश्च ये केचिद्ये चान्ये
सान्निपातिकाः ॥२३॥ आगन्तुकाश्च ये रोगा लूता विस्फोटकादयः ॥ ते सर्वे प्रशमं यांतु वासुदेवापमार्जिताः ॥२४॥ विलयं यांतु

ते सर्वे विष्णोरुच्चारणेन च ॥ क्षयं गच्छन्तु चाशेषास्ते चक्राभिहता हरेः ॥ २५ ॥ अच्युतानन्तगोविन्दनामोच्चारणभीषिताः ॥
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ २६ ॥ स्थावरं जङ्गमं वापि कृत्रिमं चापि यद्विषम् ॥ दन्तोद्भवं नख-
भवमाकाशप्रभवं विषम् ॥ २७ ॥ लूतादिप्रभवं यच्च विषमन्यत्तु दुःखदम् ॥ शमं नयतु तत्सर्वं कीर्तितोऽस्य जनार्दनः ॥ २८ ॥
ग्रहान्प्रेतग्रहांश्चापि तथा वै डाकिनीग्रहान् ॥ वेतालांश्च पिशाचांश्च गन्धर्वान् यक्षराक्षसान् ॥ २९ ॥ शकुनीपूतनाद्यांश्च तथा
वैनायकान्ग्रहान् ॥ मुखमण्डीं तथा क्रूरां रेवतीं वृद्धरेवतीम् ॥ ३० ॥ वृद्धकाख्यान्ग्रहांश्चोग्रांस्तथा मातृग्रहानपि ॥ बालस्य
विष्णोश्चरितं हन्तु बालग्रहानिमान् ॥ ३१ ॥ वृद्धाश्च ये ग्रहाः केचिद्ये च बालग्रहाः क्वचित् ॥ नरसिंहस्य ते दृष्ट्या दग्धा ये
चापि यौवने ॥ ३२ ॥ सटाकरालवदनो नरसिंहो महाबलः ॥ ग्रहानशेषान्निःशेषान्करोतु जगतो हितः ॥ ३३ ॥ नरसिंह महा-
सिंह ज्वालामालोज्ज्वलानन ॥ ग्रहानशेषान्सर्वेश खाद खादाग्निलोचन ॥ ३४ ॥ ये रोगा ये महोत्पाता यद्विषं ये महाग्रहाः ॥
यानि च क्रूरभूतानि ग्रहपीडाश्च दारुणाः ॥ ३५ ॥ शस्त्रक्षतेषु ये दोषा ज्वालागर्दभकादयः ॥ तानि सर्वाणि सर्वात्मा परमात्मा
जनार्दनः ॥ ३६ ॥ किंचिद्रूपं समास्थाय वासुदेवस्य नाशय ॥ क्षिप्त्वा सुदर्शनं चक्रं ज्वालामालातिभीषणम् ॥ सर्वदुष्टो-
पशमनं कुरु देववराच्युत ॥ ३७ ॥ सुदर्शन महाज्वाल च्छिन्धि च्छिन्धि महारव ॥ सर्वदुष्टानि रक्षांसि क्षयं यान्तु
विभीषण ॥ ३८ ॥ प्राच्यां प्रतीच्यां च दिशि दक्षिणोत्तरतस्तथा ॥ रक्षां करोतु सर्वात्मा नरसिंहः सुगर्जितः ॥ ३९ ॥ दिवि
भुव्यन्तरिक्षे च पृष्ठतः पार्श्वतोऽग्रतः ॥ रक्षां करोतु भगवान्बहुरूपो जनार्दनः ॥ ४० ॥ यथा विष्णुर्जगत्सर्वं सदेवासुरमानुषम् ॥
तेन सत्येन दुष्टानि शममस्य व्रजन्तु वै ॥ ४१ ॥ यथा विष्णौ स्मृते सद्यः संक्षयं यातु पातकम् ॥ सत्येन तेन सकलं दुष्टमस्य
प्रशाम्यतु ॥ ४२ ॥ परमात्मा यथा विष्णुर्वेदान्तेषु च गीयते ॥ तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥ ४३ ॥ यथा
यज्ञेश्वरो विष्णुर्देवेष्वपि हि गीयते ॥ सत्येन तेन सकलं यन्मयोक्तं तथास्तु तत् ॥ ४४ ॥ शान्तिरस्तु शिवं चास्तु दुष्टमस्य प्रशा-
म्यतु ॥ वासुदेवशरीरोत्थैः कुशैर्निर्मथितं मया ॥ ४५ ॥ अपमार्जतु गोविन्दो नरो नारायणस्तथा ॥ तथास्तु सर्वदुःखानां प्रशमो

जपनाद्धरेः ॥ ४६ ॥ अपामार्जनकं शस्त्रं सर्वरोगादिवारणम् ॥ अहं हरिः कुशो विष्णुर्हता रोगा मया तव ॥ ४७ ॥ इत्यादि-
महापुराणे आग्नेये कुशापामार्जनं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥ अथ संस्कारकथनम् ॥ अग्निरुवाच ॥ निर्वाणादिषु दीक्षासु
चत्वारिंशत्तथाष्ट च ॥ संस्कारान्कारयेद्धीमाञ्छृणु तान्यैः सुरो भवेत् ॥ १ ॥ गर्भाधानं तु योन्यां वै ततः पुंसवनं चरेत् ॥
सीमन्तोन्नयनं चैव जातकर्म्म च नाम च ॥ २ ॥ अन्नाशनं ततश्चूडा ब्रह्मचर्य्यं व्रतानि च ॥ चत्वारि वैष्णवी पार्थी भौतिकी
श्रौतिकी तथा ॥३॥ गोदानं स्नातकत्वं च पाकयज्ञाश्च सप्त ते ॥ अष्टका पार्वणश्राद्धं श्रावण्याग्रयणीति च ॥४॥ चैत्री चाश्वयुजी
सप्त हविर्यज्ञाश्च ताञ्छृणु ॥ आधानं चाग्निहोत्रं च दर्शो वै पौर्णमासकः ॥५॥ चातुर्मास्यं पशोर्बन्धः सौत्रामणिरथापरः ॥ सोमसंस्थाः
सप्त शृणु चाग्निष्टोमः क्रतूत्तमः ॥६॥ अत्यग्निष्टोम उक्थश्च षोडशी वाजपेयकः ॥ अतिरात्राप्तोर्य्यामश्च सहस्रेशाः सवा इमे ॥७॥
हिरण्यांघ्रिर्हिरण्याक्षो हिरण्यामित्र इत्यतः ॥ हिरण्यपाणिर्हेमाक्षो हेमाङ्गो हेमसूत्रकः ॥ ८ ॥ हिरण्यास्यो हिरण्याङ्गो हेमजिह्वो
हिरण्यवान् ॥ अश्वमेधो हि सर्वेशो गुणाश्चाष्टाथ ताञ्छृणु ॥ ९ ॥ दया च सर्वभूतेषु क्षान्तिश्चैव तथार्जवम् ॥ शौचं चैवमना-
यासो मङ्गलं चापरो गुणः ॥ १० ॥ अकार्पण्यं चास्पृहा च मूलेन जुहुयाच्छतम् ॥ सौरशाक्तेयविष्ण्वीशदीक्षास्वेते समाः
स्मृताः ॥ ११ ॥ संस्कारैः संस्कृतश्चैतैर्भुक्तिं मुक्तिमवाप्नुयात् ॥ सर्वरोगादिनिर्मुक्तो देववद्वर्त्तते नरः ॥ जप्याद्धोमात्पूजनाच्च
ध्यानाद्देवस्य चेष्टभाक् ॥ १२ ॥ इत्यादिमहापुराणे आग्नेये अष्टचत्वारिंशत्संस्कारकथनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥
अथ पवित्रारोपणविधानम् ॥ अग्निरुवाच ॥ पवित्रारोपण वक्ष्ये वर्षपूजाफलं हरेः ॥ आषाढादौ कार्तिकान्ते प्रतिपत्त्यज्यते तिथिः
॥ १ ॥ श्रिया गौर्यां गणेशस्य सरस्वत्या गुहस्य च ॥ मार्त्तंडमातृदुर्गाणां नागर्षिहरिमन्मथैः ॥ २ ॥ शिवस्य ब्रह्मणस्तद्वद्द्विती-
यादितिथेः क्रमात् ॥ यस्य देवस्य यो भक्तः पवित्रा तस्य सा तिथिः ॥३॥ आरोहणे तुल्यविधिः पृथङ् मन्त्रादिकं यदि ॥ सौवर्णं
राजतं ताम्रं नेत्रकार्पासकादिकम् ॥ ४ ॥ ब्राह्मण्या कर्त्तितं सूत्रं तदलाभे तु संस्कृतम् ॥ द्विगुणं त्रिगुणीकृत्य तेन कुर्य्यात्पवित्र-
कम् ॥ ५ ॥ अष्टोत्तरशतादूर्द्ध्वं तदर्द्धं चोत्तमादिकम् ॥ क्रियालोपविघातार्थं यत्त्वयाभिहितं प्रभो ॥ ६ ॥ मया तत्क्रियते देव

यथा यत्र पवित्रकम् ॥ अविघ्नं तु भवेदत्र कुरु नाथ जयाव्यय ॥ ७ ॥ प्रार्थ्य तन्मण्डलापादौ गायत्र्या वन्धयेन्नरः ॥ ॐ नारायणाय विद्महे वासुदेवाय धीमहि ॥ ८ ॥ तन्नोविष्णुः प्रचोदयाद्देवदेवानुरूपतः ॥ जानूरुनाभिनासान्तं प्रतिमासु पवित्रकम् ॥९॥ पादान्ता वनमाला स्यादष्टोत्तरसहस्रतः ॥ मालां तु कल्पसाध्यां वा द्विगुणां षोडशांगुलाम् ॥ १० ॥ कर्णिकाकेसरं पत्रं मन्त्राद्यं मण्डलान्तकम् ॥ मण्डलांगुलमात्रैकचक्राब्जादौ पवित्रकम् ॥ ११ ॥ स्थंडिलेंऽगुलमानेन आत्मनः सप्तविंशतिः ॥ आचार्याणां च सूत्राणि पितृमात्रादिपुस्तके ॥ १२ ॥ नाभ्यन्तं द्वादशग्रन्थिं तथा गन्धपवित्रके ॥ अंगुलात्कल्पनादौ द्विर्माला चाष्टोत्तरं शतम् ॥ १३ ॥ अथवार्कचतुर्विंशषट्त्रिंशन्मालिका द्विज ॥ अनामामध्यमांगुष्ठैर्मन्दाद्यैः मालिकार्थिभिः ॥ १४ ॥कनिष्ठा दौ द्वादश वा ग्रंथयः स्युः पवित्रके ॥ रवेः कुम्भहुताशादेः सम्भवे विष्णुवन्मतम् ॥१५॥ पीठस्य पीठमानं स्यान्मेखलांते च कुंडके ॥ यथाशक्ति सूत्रग्रन्थिः परिचारेऽथ वैष्णवे ॥ १६ ॥ सूत्राणि वा सप्तदश सूत्रेण त्रिविभक्तके ॥ रोचनागुरुकर्पूरहारिद्राकुङ्कुमादिभिः ॥ १७ ॥ रञ्जयेच्चन्दनाद्यैर्वा स्नानसन्ध्यादिकृन्नरः ॥ एकादश्यां यागगृहे भगवंतं हरिं यजेत् ॥१८॥ समस्तपरिवाराय बलिं पीठे समर्चयेत् ॥ क्षौंक्षेत्रपालाय द्वारान्ते द्वारोपरि तथा श्रियम् ॥१९॥ धात्रे दक्षे विधात्रे च गङ्गां च यमुनां तथा ॥ शङ्खपद्मनिधी पूज्य मध्ये वास्त्वपसारणम् ॥ सारङ्गायेति भूतानां भूतशुद्धिं स्थितश्चरेत् ॥ २० ॥ ॐ हूं हः फट् हूं गन्धतन्मात्रं संहरामि नमः ॥ ॐ हूं हः फट् हूं रसतन्मात्रं संहरामि नमः ॐ हूं हः फट् हूं रूपतन्मात्रं संहरामि नमः ॥ ॐ हूं हः फट् हूं स्पर्शतन्मात्रं संहरामि नमः ॥ ॐ हूं हः फट् हूं शब्दतन्मात्रं संहरामि नमः पञ्चोद्घातैर्गन्धतन्मात्रस्वरूपं भूमिमण्डलम् ॥ चतुरस्रं च पीतं च कठिनं वज्रलाञ्छितम् ॥ २१ ॥ इन्द्राधिदैवतं पादयुग्ममध्यगतं स्मरेत् ॥ शुद्धं च रसतन्मात्रं प्रविलाप्याऽथ संहरेत् ॥ रसमात्रं रूपमात्रे क्रमेणानेन पूजकः ॥ २२ ॥ ॐ ह्रीं हः फट् हूं रसतन्मात्रं संहरामि नमः ॥ ॐ ह्रीं हः फट् हूं रूपतन्मात्रं संहरामि नमः ॥ ॐ ह्रीं हः फट् हूं स्पर्शतन्मात्रं संहरामि नमः ॥ ॐ ह्रीं हः फट् हूं शब्दतन्मात्रं संहरामि नमः ॥ जानुनाभिमध्यगतं श्वेतं वै पद्मलाञ्छितम् ॥ शुक्लवर्णं चार्द्धचन्द्रं ध्यायेद्वरुणदैवतम् ॥ २३ ॥ चतुर्भिश्च तदुद्घातैः शुद्धं तद्रसमात्रकम् ॥ संहरेद्रसतन्मात्रे रूपमात्रे च संहरेत् ॥





॥ २४ ॥ ॐ हूं हः फट् हूं रूपतन्मात्रं सहरामि नमः ॥ ॐ हूं हः फट् हूं स्पर्शतन्मात्रं संहरामि नमः ॥ ॐ हूं हः फट् हूं शब्द-
तन्मात्रं संहरामि नमः ॥ इति त्रिभिस्तदुद्घातैस्त्रिकोणं वह्निमण्डलम् ॥ नाभिकण्ठमध्यगतं रक्तं स्वस्तिकलाञ्छितम् ॥ २५ ॥
ध्यात्वानलाधिदेवं तच्छुद्धं स्पर्शे लयं नयेत् ॥ ॐ ह्रीं हः फट् हूं स्पर्शतन्मात्रं संहरामि नमः ॥ ॐ ह्रीं हः फट् हूं शब्दतन्मात्रं संह-
रामि नमः ॥ कण्ठनासामध्यगतं वृत्तं वै वायुमण्डलम् ॥ २६ ॥ द्विरुद्घातैर्धूम्रवर्णं ध्यायेच्छुद्धेन्दुलाञ्छितम् ॥ स्पर्शमात्रं शब्द-
मात्रैः संहरेद्ध्यानयोगतः ॥ २७ ॥ ॐ ह्रीं हः फट् हूं शब्दतन्मात्रं संहरामि नमः ॥ एकोद्घातेन चाकाशं शुद्धस्फटिकसन्निभम् ॥
नासापुटशिखान्तस्थमाकाशमुपसंहरेत् ॥ २८ ॥ शोषणाद्यैर्देहशुद्धिं कुर्यादेव क्रमात्ततः ॥ शुष्कं कलेवरं ध्यायेत्पादाद्यं च शिखा-
न्तकम् ॥ २९ ॥ यंबीजेन वंबीजेन ज्वालामालासमायुतम् ॥ देहं रमित्यनेनैव ब्रह्मरन्ध्राद्विनिर्गतम् ॥ ३० ॥ बिन्दुं ध्यात्वा
चामृतस्य तेन भस्म कलेवरम् ॥ संप्लावयेल्लमित्यस्माद्देहं सम्पाद्य दिव्यकम् ॥ ३१ ॥ न्यासं कृत्वा करे देहे मानसं यागमा-
चरेत् ॥ विष्णुं साङ्गं हृदि पद्मे मानसैः कुसुमादिभिः ॥ ३२ ॥ मूलमन्त्रेण देवेशं प्रार्चयेद्भुक्तिमुक्तिदम् ॥ स्वागतं देवदेवेश
सन्निधौ भव केशव ॥ ३३ ॥ गृहाण मानसीं पूजां यथार्थं परिभाविताम् ॥ आधारशक्तिः कूर्मोऽथ पूज्योऽनन्तो मही ततः
॥ ३४ ॥ मध्येऽग्न्यादौ च धर्माद्या अधर्माद्याश्च मुख्यगाः ॥ सत्त्वादिमध्ये पद्मं च मायाविद्याख्यतत्त्वके ॥ ३५ ॥ कालतत्त्वं
च सूर्यादिमण्डलं पक्षिराजकः ॥ मध्ये ततश्च वायव्यादीशान्ता गुरुपंक्तिका ॥ ३६ ॥ गणः सरस्वती पूज्या नारदो नलकूबरः ॥
गुरुर्गुरोः पादुका च परो गुरुश्च पादुका ॥ ३७ ॥ पूर्वसिद्धाः परसिद्धाः केसरेषु च शक्तयः ॥ लक्ष्मीः सरस्वती प्रीतिः कीर्तिः
शान्तिश्च कांतिका ॥ ३८ ॥ पुष्टिस्तुष्टिर्महेन्द्राद्या मध्ये चावाहितो हरिः ॥ धृतिः श्रीरतिकान्त्याद्या मूलेन स्थापितोऽच्यु-
तः ॥ ३९ ॥ ॐ अभिमुखो भवेति प्रार्थ्य प्राच्यां सन्निहितो भव ॥ विन्यस्यार्घ्यादिकं दत्त्वा गन्धाद्यैर्मूलतो यजेत् ॥ ४० ॥
ॐ भीषय भीषय हृच्छिरस्त्रासय वै पुनः ॥ मर्दय मर्दय शिखा अग्न्यादौ शस्त्रतोऽस्त्रकम् ॥ ४१ ॥ रक्ष रक्ष प्रध्वंसय प्रध्वंसय
कवचाय नमस्ततः ॥ ॐ हूं फट् अस्त्राय नमो मूलबीजेन चाङ्गकम् ॥ ४२ ॥ पूर्ववक्षाप्यसौम्येषु मूर्त्यावरणमर्चयेत् ॥ वासुदेवः

सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥४३॥ अग्न्यादौ श्रीधृतिरतिकान्तयो मूर्त्तयो हरेः ॥ शङ्खचक्रगदापद्ममग्न्यादौ पूर्वकादिकम् ॥४४॥ शार्ङ्गं च मुसलं खड्गं वनमालां च तद्बहिः ॥ इन्द्राद्याश्च तथानन्तो नैर्ऋत्यां वरुणस्ततः ॥ ४५ ॥ ब्रह्मेन्द्रेशानयोर्मध्ये अस्त्रावरणकं बहिः ॥ ऐरावतस्ततश्छागो महिषो वानरो झषः ॥ ४६ ॥ मृगः शशोऽथ वृषभः कूर्म्मो हंसस्ततो बहिः ॥ पृश्निगर्भः कुमुदाद्या द्वारपाला द्वयं द्वयम् ॥ ४७ ॥ पूर्वाद्युत्तरद्वारान्तं हरिं नत्वा बलिं बहिः ॥ विष्णुपार्षदेभ्यो नमो बलिपीठे बलिं ददेत् ॥ ४८ ॥ विश्वाय विष्वक्सेनात्मने ईशानके यजेत् ॥ देवस्य दक्षिणे हस्ते रक्षासूत्रं च बन्धयेत् ॥ ४९ ॥ संवत्सरकृतार्चायाः संपूर्णफलदायिने ॥ पवित्रारोहणायेदं कौतुकं धारय ॐ नमः ॥ ५० ॥ उपवासादिनियमं कुर्य्याद्वै देवसन्निधौ ॥ उपवासादिनियतो देवं सन्तोषयाम्यहम् ॥ ५१ ॥ कामक्रोधादयः सर्वे मा मे तिष्ठन्तु सर्वथा ॥ अद्यप्रभृति देवेश यावद्वैशेषिकं दिनम् ॥ ५२ ॥ यजमानो ह्यशक्तश्चेत्कुर्यान्नक्तादिकं व्रती ॥ हुत्वा विसर्जयेत्स्तुत्वा श्रीकरं नित्यपूजनम् ॥ ॐ ह्रीं श्रीं श्रीधराय त्रैलोक्यमोहनाय नमः ॥ ५३ ॥ इत्यादिमहापुराणे आग्नेये पवित्रारोहणे श्रीधरनित्यपूजाविधानं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ अथ होमादिविधिः ॥ अग्निरुवाच ॥ विशेदनेन मन्त्रेण यागस्थानं च भूषयेत् ॥ नमो ब्रह्मण्यदेवाय श्रीधरायाव्ययात्मने ॥ १॥ ऋग्यजुःसामरूपाय शब्ददेहाय विष्णवे ॥ विलिख्य मण्डलं सायं यागद्रव्यादि चाहरेत् ॥ २ ॥ प्रक्षालितकरांघ्रिः सन्विन्यस्यार्घ्यकरो नरः ॥ अर्घ्याद्भिस्तु शिरः प्रोक्ष्य द्वारदेशादिक तथा ॥ ३ ॥ आरभेद्वारयागं च तोरणेशान्प्रपूजयेत् ॥ अश्वत्थोदुंवरवटप्लक्षाः पूर्वादिगा नगाः ॥ ४ ॥ ऋगिन्द्रशोभनं प्राच्यां यजुर्यमसुभद्रकम् ॥ सामापश्च सुधन्वाख्यं सोमाथर्वसुहोत्रकम् ॥ ५ ॥ तोरणान्ताः पताकाश्च कुमुदाद्या घटद्वयम् ॥ द्वारि द्वारि स्वनाम्नार्च्याः पूर्वे पूर्णश्च पुष्करः ॥ ६ ॥ आनन्दनन्दनो दक्षो वीरसेनः सुषेणकः ॥ संभवप्रभवौ सौम्ये द्वारपांश्चैव पूजयेत् ॥ ७ ॥ अस्त्रजप्तपुष्पक्षेपाद्विघ्नानुत्सार्य संविशेत् ॥ भूतशुद्धिं विधायाथ विन्यस्य कृतमुद्रकः ॥ ८ ॥ फट्कारान्तं शिखां जप्त्वा सर्षपान्दिक्षु निक्षिपेत् । वासुदेवेन गोमूत्रं सङ्कर्षणेन गोमयम् ॥ ९ ॥ प्रद्युम्नेन पयस्तज्जाद्दधि नारायणाद्घृतम् ॥ एकद्वित्र्यादिवारेण घृताद्वै भागतोऽधिकम् ॥ १० ॥ घृतपात्रे तदेकत्र पञ्चगव्यमुदाहृतम् ॥ मण्डपप्रोक्षणायैकं

चापरं प्राशनाय च ॥ ११ ॥ आनीय दशकुंभेषु इन्द्राद्यान्लोकपान्यजेत् ॥ पूज्याज्ञां श्रावयेत्तांश्च स्थातव्यं चाज्ञया हरेः ॥ १२ ॥
यागद्रव्यादि संरक्ष्य विकिरान्विकिरेत्ततः ॥ मूलाष्टशतसंजप्तान्कुशकूर्चान्हरेच्च तान् ॥१३॥ ऐशान्यां दिशि तत्रस्थं स्थाप्यं कुंभं च
वर्द्धनीम् ॥ कुंभे साङ्गं हरिं प्राच्यं वर्द्धन्यामस्त्रमर्चयेत् ॥ १४ ॥ प्रदक्षिणं यागगृहं वर्द्धन्याऽच्छिन्नधारया ॥ सिञ्चन्नयेत्ततः कुम्भं
पूजयेच्च स्थिरासने ॥१५॥ सपञ्चरत्नवस्त्राढ्यकुम्भे गन्धादिभिर्हरिम् ॥ वर्द्धन्यां हेमगर्भायां यजेदस्त्रं च वामतः ॥१६॥ तत्समीपे
वास्तुलक्ष्मीं भूविनायकमर्चयेत् ॥ स्नपनं कल्पयेद्विष्णोः संक्रान्त्यादौ तथैव च ॥ १७ ॥ पूर्णकुम्भानवस्थाप्य नवकोणेषु
निर्व्रणान् ॥ पाद्यमर्घ्यमाचमनीयं पञ्चगव्यं च निःक्षिपेत् ॥ १८ ॥ पूर्वादिकलशेऽग्न्यादौ पञ्चामृतजलादिकम् ॥ दधि क्षीरं
मधूष्णोदं पाद्यं स्याच्चतुरङ्गकम् ॥ १९ ॥ पद्मश्यामाकदूर्वाश्च विष्णुपर्णी च पाद्यकम् ॥ तथाष्टाङ्गार्घ्यमाख्यातं यवगन्धफला-
क्षतम् ॥ २० ॥ कुशाः सिद्धार्थपुष्पाणि तिला द्रव्याणि चार्हणम् ॥ लवङ्गकंकोलयुतं दद्यादाचमनीयकम् ॥ २१ ॥ स्नापयेन्मू-
लमन्त्रेण देवं पञ्चामृतैरपि ॥ शुद्धोदं मध्यकुंभेन देवमूर्ध्नि विनिःक्षिपेत् ॥ २२ ॥ कलशान्निःसृतं तोयं कूर्चाग्रं संस्पृशेन्नरः ॥
शुद्धोदकेन पाद्यं च अर्घ्यमाचमनं ददेत् ॥ २३ ॥ परिमृज्य पटेनांगं सवस्त्रं मंडलं नयेत् ॥ तत्राभ्यर्च्याचरेद्धोमं कुंडादौ प्राण-
संयमी ॥ २४ ॥ प्रक्षाल्य हस्तौ रेखाश्च तिस्रः पूर्वाग्रगामिनीः ॥ दक्षिणादुत्तरान्ताश्च तिस्रश्चैवोत्तराग्रगाः ॥ २५ ॥ अर्घ्योदकेन
सम्प्रोक्ष्य योनिमुद्रां प्रदर्शयेत् ॥ ध्यात्वाग्निरूपं चाग्निं तु योन्यां कुण्डे क्षिपेन्नरः ॥ २६ ॥ पात्राण्यासादयेत्पश्चाद्दर्भस्रुक्स्रुवका-
दिभिः ॥ बाहुमात्राः परिधय इध्मव्रश्चनमेव च ॥ २७ ॥ प्रणीता प्रोक्षणीपात्रमाज्यस्थाली घृतादिकम् ॥ प्रस्थद्वयं तण्डुलानां
युग्मं युग्ममधोमुखम् ॥ २८ ॥ प्रणीताप्रोक्षणीपात्रे न्यसेत्प्रागग्रगं कुशम् ॥ अद्भिः पूर्य्य प्रणीतां तु ध्यात्वा देवं प्रपूज्य च
॥ २९ ॥ प्रणीतां स्थापयेदग्रे द्रव्याणां चैव मध्यतः ॥ प्रोक्षणीमद्भिरसम्पूर्य्य प्राच्यं दक्षे तु विन्यसेत् ॥ ३० ॥ चरुं च श्रपये-
दग्नौ ब्रह्माणं दक्षिणे न्यसेत् ॥ कुशानास्तीर्य्य पूर्वादौ परिधींस्थापयेत्ततः ॥ ३१ ॥ वैष्णवीकरणं कुर्याद्गर्भाधानादिना नरः ॥
गर्भाधानं पुंसवनं सीमन्तोन्नयनं जनिः ॥ ३२ ॥ नामादिसमावर्त्तनान्तं जुहुयादष्ट चाहुतीः ॥ पूर्णाहुतिं प्रतिकर्म्म स्रुचा

सुवसुयुक्तया ॥ ३३ ॥ कुण्डमध्ये ऋतुमतीं लक्ष्मीं सञ्चिन्त्य होमयेत् ॥ कुण्डलक्ष्मीः समाख्याता प्रकृतिस्त्रिगुणात्मिका ॥ ३४ ॥ सा योनिः सर्वभूतानां विद्यामन्त्रगणस्य च ॥ विमुक्तेः कारणं वह्निः परमात्मा च मुक्तिदः ॥ ३५ ॥ प्राच्यां शिरः समाख्यातं बाहू कोणे व्यवस्थितौ ॥ ईशानाग्नेयकोणे तु जङ्घे वायव्यनैर्ऋते ॥ ३६ ॥ उदरं कुण्डमित्युक्तं योनिर्योनिर्विधीयते ॥ गुणत्रयं मेखलाः स्युर्ध्यात्वैवं समिधो दश ॥ ३७ ॥ पञ्चाधिकांस्तु जुहुयात्प्रणवान्मुष्टिमुद्रया ॥ पुनराघारौ जुहुयाद्वाय्वग्न्यन्तं ततः श्रयेत् ॥ ३८ ॥ ईशान्तं मूलमन्त्रेण आज्यभागौ तु होमयेत् ॥ उत्तरे द्वादशान्तेन दक्षिणे तेन मध्यतः ॥ ३९ ॥ व्याहृत्या पद्ममध्यस्थं ध्यायेद्वह्निं तु संस्कृतम् ॥ वैष्णवं सप्तजिह्वं च सूर्यकोटिसमप्रभम् ॥ ४० ॥ चन्द्रवक्त्रं च सूर्याक्षं जुहुयाच्छतमष्ट च ॥ तदर्द्धं चाष्ट मूलेन अङ्गानां च दशांशतः ॥ ४१ ॥ इत्यादिमहापुराणे आग्नेये अग्निकार्यकथनं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ अथ पवित्राधिवासनादिविधिः ॥ अग्निरुवाच ॥ सम्पाताद्धुतिना सिच्य पवित्राण्यधिवासयेत् ॥ नृसिंहमन्त्रजप्तानि गुप्तान्यस्त्रेण तानि तु ॥ १ ॥ वस्त्रसंवेष्टितान्येव पात्रस्थान्यभिमन्त्रयेत् ॥ बिल्वाद्यद्भिः प्रोक्षितानि मन्त्रेण त्वेकधा द्विधा ॥ २ ॥ कुम्भपार्श्वे तु संस्थाप्य रक्षां विज्ञाप्य देशिकः ॥ दन्तकाष्ठं चामलकं पूर्वे सङ्कर्षणेन तु ॥ ३ ॥ प्रद्युम्नेन भस्मतिलान्दक्षे गोमयमृत्तिकाम् ॥ वारुणे चानिरुद्धेन सौम्ये नारायणेन च ॥ ४ ॥ दर्भोदकं चाथ हृदा अग्नौ कुङ्कुमरोचनम् ॥ ऐशान्यां शिरसा धूपं शिखया नैर्ऋतेऽप्यथ ॥ ५ ॥ मूलपुष्पाणि दिव्यानि कवचेनाथ वायवे ॥ चन्दनाम्ब्वक्षतदधिदूर्वांश्च पुटिकास्थिताः ॥ ६ ॥ गृहं त्रिसूत्रेणावेष्ट्य पुनः सिद्धार्थकान्क्षिपेत् ॥ दद्यात्पूजाक्रमेणाथ स्वैः स्वैर्गंधपवित्रकम् ॥ ७ ॥ मन्त्रैर्वै द्वारपादिभ्यो विष्णुकुम्भे त्वनेन च ॥ विष्णुतेजोभवं रम्यं सर्वपातकनाशनम् ॥ ८ ॥ सर्वकामप्रदं देव तवाङ्गे धारयाम्यहम् ॥ संपूज्य धूपदीपाद्यैर्व्रजेद्द्वारसमीपतः ॥ ९ ॥ गन्धपुष्पाक्षतोपेतं पवित्रं चाखिलेऽर्पयेत् ॥ पवित्रं वैष्णवं तेजो महापातकनाशनम् ॥ १० ॥ धर्मकामार्थसिद्ध्यर्थं स्वकेऽङ्गे धारयाम्यहम् ॥ आसने परिवारादौ गुरौ दद्यात्पवित्रकम् ॥ ११ ॥ गन्धादिभिः समभ्यर्च्य गन्धपुष्पाक्षतादिमत् ॥ विष्णुतेजो भवेत्यादिमूलेन हरयेऽर्पयेत् ॥ १२ ॥ वह्निस्थाय ततो दत्त्वा देवं सम्प्रार्थये-

त्ततः ॥ क्षीरोदधिमहानागशय्यावारिस्थतविग्रह ॥ १३ ॥ प्रातस्त्वां पूजयिष्यामि सान्निधौ भव केशव ॥ इन्द्रादिभ्यस्ततो दत्त्वा विष्णुपार्षदके बलिम् ॥ १४ ॥ ततो देवाग्रतः कुम्भं वासोयुगसमन्वितम् ॥ रोचनाचन्द्रकाश्मीरगन्धाद्युदकसंयुतम् ॥ १५ ॥ गन्धपुष्पादिनाभ्यर्च्य मूलमन्त्रेण पूजयेत् ॥ मण्डपाद्बहिरागत्य विलिप्ते मण्डलत्रये ॥ १६ ॥ पञ्चगव्यं चरुं दन्तकाष्ठं चैव क्रमाद्भवेत् ॥ पुराणश्रवणं स्तोत्रं पठञ्जागरणं निशि ॥ १७ ॥ परप्रेषकबालानां स्त्रीणां भोगभुजां तथा ॥ सद्योऽधिवासनं कुर्याद्विना गन्धपवित्रकम् ॥ १८ ॥ इत्यादिमहापुराणे आग्नेये पवित्राधिवासनं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

अथ विष्णुपवित्रारोपणविधिः ॥ अग्निरुवाच ॥ प्रातः स्नानादिकं कृत्वा द्वारपालान्प्रपूज्य च ॥ प्रविश्य गुप्ते देशे च समाकृष्याथ धारयेत् ॥ १ ॥ पूर्वाधिवासितं द्रव्यं वस्त्राभरणगन्धकम् ॥ निरस्य सर्वं निर्म्माल्यं देवं संस्थाप्य पूजयेत् ॥ २ ॥ पञ्चामृतैः कषायैश्च शुद्धगन्धोदकैस्ततः ॥ पूर्वाधिवासितं दद्याद्वस्त्रं गन्धं च पुष्पकम् ॥ ३ ॥ अग्नौ हुत्वा नित्यवच्च देवं सम्प्रार्थयेन्नमेत् ॥ समर्प्य कर्म्म देवाय पूजां नैमित्तिकीं चरेत् ॥ ४ ॥ द्वारपालविष्णुकुम्भवर्द्धनीः प्रार्थयेद्धरिम् ॥ अतोदेवेतिमन्त्रेण मूलमन्त्रेण कुम्भके ॥ ५ ॥ कृष्णकृष्ण नमस्तुभ्यं गृहीष्वेदं पवित्रकम् ॥ पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥ ६ ॥ पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतम् ॥ शुद्धो भवाम्यहं देव त्वत्प्रसादात्सुरेश्वर ॥ ७ ॥ पवित्रं च हृदाद्येस्तु आत्मानमभिषिच्य च ॥ विष्णुकुम्भं च सम्प्रोक्ष्य व्रजेद्देवसमीपतः ॥ ८ ॥ पवित्रमात्मने दद्याद्रक्षाबन्धं विसृज्य च ॥ गृहाण ब्रह्मसूत्रं च यन्मया कल्पितं प्रभो ॥ ९ ॥ कर्म्मणां पूरणार्थाय यथा दोषो न मे भवेत् ॥ द्वारपालासनगुरुमुख्यानां च पवित्रकम् ॥ १० ॥ कनिष्ठादि च देवाय वनमालां च मूलतः ॥ हृदादिविष्वक्सेनान्ते पवित्राणि समर्पयेत् ॥ ११ ॥ वह्नौ हुत्वा वह्निगेभ्यो विष्ण्वादिभ्यः पवित्रकम् ॥ प्रार्च्य पूर्णाहुतिं दद्यात्प्रायश्चित्ताय मूलतः ॥ १२ ॥ अष्टोत्तरशतं वापि पञ्चोपनिषदैस्ततः ॥ मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ॥ १३ ॥ इयं सांवत्सरी पूजा तवास्तु गरुडध्वज ॥ वनमाला यथा देव कौस्तुभं सततं हृदि ॥ १४ ॥ तद्वत्पवित्रतन्तूंश्च पूजां च हृदये वह ॥ कामतोऽकामतो वापि यत्कृतं नियमार्च्चने ॥ १५ ॥ विधिना विघ्नलोपेन परिपूर्णं तदस्तु मे ॥ प्रार्थ्य नत्वा

क्षमाप्याथ पवित्रं मस्तकेऽर्प्पयेत् ॥ १६ ॥ दत्त्वा बलिं दक्षिणाभिर्वैष्णवं तोषयेद्गुरुम् ॥ विप्रान्भोजनवस्त्राद्यैर्दिवसं पक्षमेव वा ॥ १७ ॥ पवित्रं स्नानकाले वा अवतार्य्यं समर्चयेत् ॥ अनिवारितमन्नाद्यं दद्याद्भुङ्क्तेऽथ च स्वयम् ॥ १८ ॥ विसर्जनेऽह्नि सम्पूज्य पवित्राणि विसर्जयेत् ॥ सांवत्सरीमिमां पूजां सम्पाद्य विधिवन्मम ॥ १९ ॥ व्रज पवित्रकेदानीं विष्णुलोकं विसर्जितः ॥ मध्ये सोमेशयोः प्राच्यं विष्वक्सेनं हि तस्य च ॥ २० ॥ पवित्राणि समभ्यर्च्य ब्राह्मणाय समर्पयेत् ॥ यावन्तस्तन्तवस्तस्मिन्पवित्रे परिकल्पिताः ॥२१॥ तावद्युगसहस्राणि विष्णुलोके महीयते ॥ कुलानां शतमुद्धृत्य दश पूर्व्वान्दशापरान् ॥ विष्णुलोके तु संस्थाप्य स्वयं मुक्तिमवाप्नुयात् ॥२२॥ इत्यादिमहापुराणे आग्नेये विष्णुपवित्रारोपणविधिनिरूपणं नाम षट्त्रिंशोऽध्यायः॥ ३६॥

अथ सर्वदेवपवित्रारोपणविधिः ॥ अग्निरुवाच ॥ सङ्क्षेपात्सर्वदेवानां पवित्रारोपणं शृणु ॥ पवित्रं पूर्वलक्ष्म स्यात्स्वरसानलगं त्वपि ॥ १ ॥ जगद्योने समागच्छ परिवारगणैः सह ॥ निमन्त्रयाम्यहं प्रातर्दद्यां तुभ्यं पवित्रकम् ॥ २ ॥ जगत्सृजे नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥ पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥३॥ शिव देव नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥ मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ॥ ४ ॥ इयं सांवत्सरी पूजा तवास्तु वेदवित्पते ॥ सांवत्सरीमिमां पूजां सम्पाद्य विधिवन्मम ॥ ५ ॥ व्रज पवित्रकेदानीं स्वर्गलोकं विसर्जितः ॥ सूर्य्य देव नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥ ६ ॥ [ पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥ शिवदेव नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ]॥ ७॥ पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥ गणेश्वर नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥ ८ ॥ पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥ शक्ति देवि नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥ ९ ॥ पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥ नारायणमयं सूत्रमनिरुद्धमयं वरम् ॥१०॥ धनधान्यायुरारोग्यप्रदं संप्रददामि ते ॥ कामदेवमयं सूत्रं सङ्कर्षणमयं वरम् ॥ ११ ॥ विद्यासन्ततिसौभाग्यप्रदं संप्रददामि ते ॥ वासुदेवमयं सूत्रं धर्म्मकामार्थमोक्षदम् ॥ १२ ॥ संसारसागरोत्तारकारणं प्रददामि ते ॥ विश्वरूपमयं सूत्रं सर्व्वदं पापनाशनम् ॥ १३ ॥ अतीतानागतकुलसमुद्धारं ददामि ते ॥ कनिष्ठादीनि चत्वारि ददिरे मनुभिः क्रमात ॥ १४ ॥ इत्यादिमहापुराणे आग्नेये सर्वदेवपवित्रारोपणं नाम सप्तत्रिंशोऽध्यायः ॥ ३७॥





अथ देवालयनिर्म्माणफलम् ॥ अग्निरुवाच ॥ वासुदेवाद्यालयस्य कृतौ वक्ष्ये फलादिकम्॥ चिकीर्षोर्देवधामादि सहस्रजानिपापनुत्
॥ १ ॥ मनसा सद्मकर्तॄऽर्णां शतजन्माघनाशनम् ॥ येऽनुमोदन्ति कृष्णस्य क्रियमाणं नरा गृहम् ॥ २ ॥ तेऽपि पापैर्विनिर्मुक्ताः
प्रयान्त्यच्युतलोककम् ॥ समतीतं भविष्यं च कुलानामयुतं नरः ॥ ३ ॥ विष्णुलोकं नयत्याशु कारयित्वा हरेर्गृहम् ॥ वसन्ति
पितरो हृष्टा विष्णुलोके ह्यलङ्कृताः ॥ ४ ॥ विमुक्ता नारकैर्दुःखैः कर्त्तुः कृष्णस्य मन्दिरम् ॥ ब्रह्महत्यादिपापौघघातकं देवता-
लयम् ॥ ५ ॥ फलं यन्नाप्यते यज्ञैर्धाम कृत्वा तदाप्यते ॥ देवागारे कृते सर्वतीर्थस्नानफलं लभेत् ॥ ६ ॥ देवाद्यर्थे हतानां च रणे
यत्तत्फलादिकम् ॥ शाठ्येन पांसुना वापि कृतं धाम च नाकदम् ॥ ७ ॥ एकायतनकृत्स्वर्गी त्र्यगारी ब्रह्मलोकभाक् ॥ पञ्चा-
गारी शम्भुलोकमष्टागाराद्धरौ स्थितिः ॥ ८ ॥ षोडशालयकारी तु भुक्तिं मुक्तिमवाप्नुयात् ॥ कनिष्ठं मध्यमं श्रेष्ठं कारयित्वा
हरेर्गृहम् ॥ ९ ॥ स्वर्गं च वैष्णवं लोकं मोक्षमाप्नोति च क्रमात् ॥ श्रेष्ठमायतनं विष्णोः कृत्वा यद्धनवाँल्लभेत् ॥ १० ॥ कनिष्ठे-
नैव तत्पुण्यं प्राप्नोत्यधनवान्नरः ॥ समुत्पाद्य धनं कृत्वा स्वल्पेनापि सुरालयम् ॥ ११ ॥ कारयित्वा हरेः पुण्यं प्राप्नोत्यभ्य-
धिकं वरम् ॥ लक्षेणाथ सहस्रेण शतस्यार्द्धेन वा हरेः ॥ १२ ॥ कारयन्भवनं याति यत्रास्ते गरुडध्वजः ॥ बाल्ये तु क्रीडमाणा
ये पांसुभिर्भवनं हरेः ॥ १३ ॥ वासुदेवस्य कुर्व्वंति तेऽपि तल्लोकगामिनः ॥ तीर्थे चायतने पुण्ये सिद्धक्षेत्रे तथाश्रमे ॥ १४ ॥
कर्त्तुरायतनं विष्णोर्यथोक्तात्त्रिगुणं फलम् ॥ बन्धूकपुष्पविन्यासैः सुधापंकेन वैष्णवम् ॥ १५ ॥ ये विलिम्पन्ति भवनं ते यान्ति
भगवत्पुरम् ॥ पतितं पतमानं तु तथार्द्धपतितं नरः ॥ १६ ॥ समुद्धृत्य हरेर्धाम प्राप्नोति द्विगुणं फलम् ॥ पतितस्य तु यः कर्त्ता
पतितस्य च रक्षिता ॥ १७ ॥ विष्णोरायतनस्येह स नरो विष्णुरूपभाक् ॥ इष्टकानिचयास्तिष्ठेद्यावदायतनं हरेः ॥ १८ ॥ सकु-
लस्तस्य वै कर्त्ता विष्णुलोके महीयते ॥ स एव पुण्यवान्पूज्य इह लोके परत्र च ॥ १९ ॥ कृष्णस्य वासुदेवस्य यः कारयति
केतनम् ॥ जातः स एव सुकृती कुलं तेनैव पावितम् ॥ २० ॥ विष्णुरुद्रार्कदेव्यादेर्गृहकर्त्ता स कीर्तिभाक् ॥ किं तस्य वित्तनिच-
येर्मूढस्य परिरक्षिणः ॥ २१ ॥ दुःखार्जितैर्यः कृष्णस्य न कारयति केतनम् ॥ नोपभोग्यं धनं यस्य पितृपिम- ॥ २६ ॥

दिवौकसाम् ॥ २२ ॥ नोपभोगाय बन्धूनां व्यर्थस्तस्य धनागमः ॥ यथा ध्रुवो नृणां मृत्युर्वित्तनाशस्तथा ध्रुवः ॥ २३ ॥ मूढस्तत्राऽनुबध्नाति जीवितेऽथ चले धने ॥ यदा वित्तं न दानाय नोपभोगाय देहिनाम् ॥ २४ ॥ नापि कीर्त्यै न धर्मार्थं तस्य स्वाम्येऽथ को गुणः ॥ तस्माद्वित्तं समासाद्य दैवाद्वा पौरुषादथ ॥ २५ ॥ दद्यात्सम्यग्द्विजाग्र्येभ्यः कीर्त्तनानि च कारयेत् ॥ दानेभ्यश्चाधिकं यस्मात्कीर्त्तनेभ्यो वरं यतः ॥ २६ ॥ अतस्तत्कारयेद्धीमान्विष्ण्वादेर्मन्दिरादिकम् ॥ विनिवेश्य हरेर्धाम भक्तिमद्भिर्नरोत्तमैः ॥ २७ ॥ निवेशितं भवेत्कृत्स्नं त्रैलोक्यं सचराचरम् ॥ भूतं भव्यं भविष्यं च स्थूलं सूक्ष्मं तथेतरत् ॥ २८ ॥ आब्रह्मस्तंबपर्य्यन्तं सर्वं विष्णोः समुद्भवम् ॥ तस्य देवाधिदेवस्य सर्वगस्य महात्मनः ॥ २९ ॥ निवेश्य भवनं विष्णोर्न भूयो भुवि जायते ॥ यथा विष्णोर्धामकृतौ फलं तद्वद्दिवौकसाम् ॥ ३० ॥ शिवब्रह्मार्कविघ्नेशचण्डीलक्ष्म्यादिकात्मनाम् ॥ देवालयकृतेः पुण्यं प्रतिमाकरणेऽधिकम् ॥ ३१ ॥ प्रतिमास्थापने यागे फलस्यान्तो न विद्यते ॥ मृन्मयाद्दारुजे पुण्यं दारुजादिष्टकोद्भवे ॥ ३२ ॥ इष्टकोत्थाच्छैलजे स्याद्धेमादेराधिकं फलम् ॥ सप्तजन्मकृतं पापं प्रारम्भादेव नश्यति ॥३३॥ देवालयस्य स्वर्गी स्यान्नरकं न स गच्छति ॥ कुलानां शतमुद्धृत्य विष्णोर्लोकं नयेन्नरः ॥३४॥ यमो यमभटानाह देवमन्दिरकारिणः ॥ यम उवाच ॥ प्रतिमापूजादिकृतो नानेया नरकं नराः ॥ ३५ ॥ देवालयाद्यकर्त्तार आनेयास्ते विशेषतः ॥ विचरध्वं यथान्याय्यं नियोगो मम पाल्यताम् ॥ ३६ ॥ नाज्ञाभंगं करिष्यन्ति भवतां जन्तवः क्वचित् ॥ केवलं ये जगत्तातमनन्तं समुपाश्रिताः ॥३७॥ भवाद्भिः परिहर्त्तव्यास्तेषां नात्रास्ति संस्थितिः ॥ यत्र भागवता लोके तच्चित्तास्तत्परायणाः ॥ ३८ ॥ पूजयन्ति सदा विष्णुं ते वस्त्याज्याः सुदूरतः ॥ यस्तिष्ठन्प्रस्वपन्गच्छन्नुत्तिष्ठन्स्खलिते स्थिते ॥ ३९ ॥ सङ्कीर्त्तयन्ति गोविन्दं ते वस्त्याज्याः सुदूरतः ॥ नित्यैर्नैमित्तिकैर्देवं ये यजन्ति जनार्दनम् ॥ ४० ॥ नावलोक्या भवद्भिस्ते तद्व्रता यांति सद्गतिम् ॥ ये पुष्पधूपवासोभिर्भूषणैश्चातिवल्लभैः ॥ ४१ ॥ अर्चयन्ति न ते ग्राह्या नराः कृष्णालयं गताः ॥ उपलेपनकर्त्तारः सम्मार्जनपराश्च ये ॥ ४२ ॥ कृष्णालये परित्याज्यास्तेषां पुत्रास्तथा कुलम् ॥ येन चायतनं विष्णोः कारितं तत्कुलोद्भवम् ॥ ४३ ॥ पुंसां शतं नावलोक्यं भव-





द्भिर्दुष्टचेतसा ॥ यस्तु देवालयं विष्णोर्दारुशैलमयं तथा ॥ ४४ ॥ कारयेन्मृन्मयं वापि सर्वपापैः प्रमुच्यते ॥ अहन्यहनि यज्ञेन यजतो यन्महाफलम् ॥ ४५ ॥ प्राप्नोति तत्फलं विष्णोर्यः कारयाति केतनम् ॥ कुलानां शतमागामि समतीतं तथा शतम् ॥४६॥ कारयन्भगवद्धाम नयत्यच्युतलोककम् ॥ सप्तलोकमयो विष्णुस्तस्य यः कुरुते गृहम् ॥ ४७ ॥ तारयत्यक्षयाँल्लोकानक्षयान्प्रतिपद्यते ॥ इष्टकाचयविन्यासो यावन्त्यब्दानि तिष्ठति ॥ ४८ ॥ तावद्वर्षसहस्राणि तत्कर्तुर्दिवि संस्थितिः ॥ प्रतिमाकृद्विष्णुलोकं स्थापको लीयते हरौ ॥ देवसद्मप्रतिकृतिप्रतिष्ठाकृत्तु गोचरे ॥ ४९ ॥ अग्निरुवाच ॥ यमोक्ता नानयंस्तेऽथ प्रतिष्ठादिकृतं हरेः ॥ हयशीर्षः प्रतिष्ठार्थं देवानां ब्रह्मणेऽब्रवीत् ॥ ५० ॥ इत्यादिमहापुराणे आग्नेये देवालयादिनिर्माणमाहात्म्यादिवर्णनं नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥ अथ भूपरिग्रहविधानम् ॥ हयग्रीव उवाच ॥ विष्ण्वादीनां प्रतिष्ठादि वक्ष्यं ब्रह्मञ्शृणुष्व मे ॥ प्रोक्तानि पञ्चरात्राणि सप्तरात्राणि वै मया ॥ १ ॥ व्यस्तानि मुनिभिर्लोके पञ्चविंशतिसङ्ख्यया ॥ हयशीर्षं तन्त्रमाद्यं तन्त्रं त्रैलोक्यमोहनम् ॥ २ ॥ वैभवं पौष्करं तन्त्रं प्रह्लादं गार्ग्यगालवम् ॥ नारदीयं च श्रीप्रश्नं शाण्डिल्यं चेश्वरं तथा ॥ ३ ॥ सत्योक्तं शौनकं तन्त्रं वासिष्ठं ज्ञानसागरम् ॥ स्वायम्भुवं कापिलं च तार्क्ष्यं नारायणीयकम् ॥ ४ ॥ आत्रेयं नारसिंहाख्यमानन्दाख्यं तथारुणम् ॥ बौधायनं तथाष्टांगं विश्वोक्तं तस्य सारतः ॥ ५ ॥ प्रतिष्ठां हि द्विजः कुर्यान्मध्यदेशादिसम्भवः ॥ न कच्छदेशसम्भूतः कावेरीकोङ्कणोद्भतः ॥ ६ ॥ कामरूपः कलिङ्गोत्थः काञ्चीकाश्मीरकोसलः ॥ आकाशवायुतेजोऽम्बुभूरेताः पञ्च रात्रयः ॥ ७ ॥ अचैतन्यास्तमोद्रिक्ताः पञ्चरात्रविवर्जिताः ॥ ब्रह्माहं विष्णुरमल इति विद्यात्स देशिकः ॥ ८ ॥ सर्वलक्षणहीनोऽपि स गुरुस्तन्त्रपारगः ॥ नगराभिमुखाः स्थाप्या देवा न च पराङ्मुखाः ॥ ९ ॥ कुरुक्षेत्रे गयादौ च नदीनां तु समीपतः ॥ ब्रह्मा मध्ये तु नगरे पूर्वे शक्रस्य शोभनम् ॥ १० ॥ अग्नावग्नेश्च मातॄणां भूतानां च यमस्य च ॥ दक्षिणे चण्डिकायाश्च पितृदैत्यादिकस्य च ॥ ११ ॥ नैर्ऋते मन्दिरं कुर्याद्वरुणादेश्च वारुणे ॥ वायोर्नागस्य वायव्ये सौम्ये यक्षगुहस्य च ॥ १२ ॥ चण्डीशस्य महेशस्य ऐशे विष्णोश्च सर्वशः ॥ पूर्वदेवकुलं पीड्य प्रासादं स्वल्पकं त्वथ ॥ १३ ॥ समं वाप्यधिकं वापि न

कर्त्तव्यं विजानता ॥ उभयोर्द्विगुणां सीमां त्यक्त्वा चोच्छ्रायसम्मिताम् ॥ १४ ॥ प्रासादं कारयेदन्यं नोभयं पीडयेद्बुधः ॥ भूमौ तु शोधितायां तु कुर्याद्भूमिपरिग्रहम् ॥ १५ ॥ प्राकारसीमापर्य्यन्तं ततो भूतबलिं हरेत् ॥ माषं हरिद्राचूर्णं तु सलाजं दधिसक्तुभिः ॥ १६ ॥ अष्टाक्षरेण सक्तूंश्च पातयित्वाष्टदिक्षु च ॥ राक्षसाश्च पिशाचाश्च येऽस्मिंस्तिष्ठन्ति भूतले ॥ १७ ॥ सर्वे ते व्यपगच्छन्तु स्थानं कुर्य्यामहं हरेः ॥ हलेन दारयित्वा गां गोभिश्चैवावदारयेत् ॥ १८ ॥ परमाण्वष्टकेनैव रथरेणुः प्रकीर्तितः ॥ रथरेण्वष्टकेनैव त्रसरेणुः प्रकीर्त्त्यते ॥ १९ ॥ तैरष्टभिस्तु बालाग्रं लिक्षा तैरष्टभिर्मता ॥ ताभिर्यूकाष्टभिः ख्याता ताश्चाष्टौ यवमध्यमः ॥ २० ॥ यवाष्टकैरङ्गुलं स्याच्चतुर्विंशाङ्गुलः करः ॥ चतुरङ्गुलसंयुक्तः स हस्तः पद्महस्तकः ॥ २१ ॥ इत्यादिमहापुराणे आग्नेये विष्ण्वादिदेवताप्रतिष्ठार्थं भूपरिग्रहो नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ अथार्घ्यदानविधिशल्यकथने ॥ भगवानुवाच ॥ पूर्वमासीन्महद्भूतं सर्वभूतभयङ्करम् ॥ तद्देवैर्निहितं भूमौ स वास्तुपुरुषः स्मृतः ॥ १ ॥ चतुष्षष्टिपदे क्षेत्रे ईशं कोणार्द्धसंस्थितम् ॥ घृताक्षतैस्तर्पयेत्तं पर्जन्यं पदगं ततः ॥ २ ॥ उत्पलाद्भिर्जयन्तं च द्विपदस्थं पताकया ॥ महेन्द्रं चैककोष्ठस्थं सर्वरक्तैः पदे रविम् ॥ ३ ॥ वितानेनार्द्धपदगं सत्यं पादे भृशं घृतैः ॥ व्योम शाकुनमांसेन कोणार्द्धपदसंस्थितम् ॥ ४ ॥ स्रुचा चार्द्धपदे वह्निं पूषणं लाजयैकतः ॥ स्वर्णेन वितथं द्विष्ठं मंथनेन गृहाक्षतम् ॥ ५ ॥ मांसोदनेन धर्मेशमेकैकस्मिन् स्थितं द्वयम् ॥ गन्धर्वं द्विपदं गन्धैर्भृशं शाकुनजिह्वया ॥ ६ ॥ एकस्थमर्धसंस्थं च मृगनीलपटैस्तथा ॥ पितॄन्कृशरयार्द्धस्थं दन्तकाष्ठैः पदस्थितम् ॥ ७ ॥ दावौरिकं द्विसंस्थं च सुग्रीवं यावकेन तु ॥ पुष्पदन्तं कुशस्तम्बैः पद्मैर्वरुणमेकतः ॥ ८ ॥ असुरं सुरया द्विष्ठं पदेशाय घृतांभसा ॥ यवैः पापं पदार्द्धस्थं रोगमध्ये च मण्डकैः ॥९॥ नागपुष्पैः पदे नागं मुख्यं भक्ष्यैर्द्विसंस्थितम् ॥ मुद्गोदनेन भल्लाटं पदे सोमं पदे तथा ॥ १० ॥ मधुना पायसेनाथ शालूकेन ऋषिं द्वये ॥ पदे दितिं लोपिकाभिरर्द्धे दितिमथापरम् ॥ ११ ॥ पूरिकाभिस्ततश्चापमीशाधः पयसा पदे ॥ ततोऽधश्चापवत्सन्तु दध्ना चैकपदे स्थितम् ॥ १२ ॥ लड्डुकैश्च मरीचिं तु पूर्वकोष्ठचतुष्टये ॥ सवित्रे रक्तपुष्पाणि ब्रह्माधःकोणकोष्ठके ॥ १३ ॥ तदधःकोष्ठके दद्यात्सवित्रे च कुशोदकम् ॥ विवस्वतेऽरुणं दद्या-







चन्दनं चतुरंघ्रिषु ॥ १४ ॥ रक्षोऽधःकोणकोष्ठे तु इन्द्रायार्घ्यं निशान्वितम् ॥ इन्द्रं जयाय तस्याधो घृतार्द्रं कोणकोष्ठके ॥ १५ ॥ चतुष्पदे तु दातव्यमिन्द्राय गुडपायसम् ॥ वाय्वधःकोणदेशे तु रुद्राय पक्वमांसकम् ॥ १६ ॥ तदधः कोणकोष्ठे तु यक्षायार्द्रं फलं तथा ॥ महीधराय मांसान्नं माषं च चतुरंघ्रिषु ॥ १७ ॥ मध्ये चतुष्पदे स्थाप्या ब्रह्मणे तिलतण्डुलाः ॥ चरकिं माषसर्पिभ्यां स्कन्दं कृशरयासृजा ॥ १८ ॥ रक्तपत्रैर्विदारीं च कन्दर्पं च पलोदनैः ॥ पूतनां पलपित्ताभ्यां मांसासृग्भ्यां च जम्भकम् ॥ १९ ॥ पित्तासृगस्थिभिः पापं पिलिपिञ्जं स्रजासृजा ॥ ईशाद्यान्रक्तमांसेन अभावादक्षतैर्यजेत् ॥ २० ॥ रक्षोमातृगणेभ्यश्च पिशाचादिभ्यः एव च ॥ पितृभ्यः क्षेत्रपालेभ्यो बलीन्दद्यात्प्रकामतः ॥ २१ ॥ अहुत्वैतानसन्तर्प्य प्रासादादीन्न कारयेत् ॥ ब्रह्मस्थाने हरिं लक्ष्मीं गणं पश्चात्समर्चयेत् ॥ २२ ॥ महीश्वरं वास्तुमयं वर्द्धन्या सहितं घटम् ॥ ब्रह्माणं मध्यतः कुम्भे ब्रह्मादींश्च दिगीश्वरान् ॥ २३ ॥ दद्यात्पूर्णाहुतिं पश्चात्स्वस्ति वाच्य प्रणम्य च ॥ प्रगृह्य कर्करीं सम्यङ्मण्डलं तु प्रदक्षिणम् ॥ २४ ॥ सूत्रमार्गेण हे ब्रह्मंस्तोयधारां च भ्रामयेत् ॥ पूर्ववत्तेन मार्गेण सप्त बीजानि वापयेत् ॥ २५ ॥ प्रारम्भं तेन मार्गेण तस्य खातस्य कारयेत् ॥ ततो गर्तं खनेन्मध्ये हस्तमात्रप्रमाणतः ॥ २६ ॥ चतुरङ्गुलकं चाधश्चोपलिप्यार्चयेत्ततः ॥ ध्यात्वा चतुर्भुजं विष्णुमर्घ्यं दद्याच्च कुम्भतः ॥ २७ ॥ कर्कर्यां पूरयेच्छ्वभ्रं शुक्लपुष्पाणि च न्यसेत् ॥ दक्षिणावर्त्तकं श्रेष्ठं बीजैर्मृद्भिश्च पूरयेत् ॥ २८ ॥ अर्घ्यदानं विनिष्पाद्य गोवस्त्रादीन्ददेद्गुरौ ॥ कालज्ञाय स्थपतये वैष्णवादिभ्य अर्चयेत् ॥ २९ ॥ ततस्तु खानयेद्यावज्जलान्तं यावदेव तु ॥ पुरुषाधः स्थितं शल्यं न गृहे दोषदं भवेत् ॥ ३० ॥ अस्थिशल्ये भिद्यते वै भित्तिर्वै गृहिणोऽसुखम् ॥ यन्नामशब्दं शृणुयात्तत्र शल्यं तदुद्भवम् ॥ ३१ ॥ इत्यादिमहापुराणे आग्नेये अर्घ्यदानशल्ययोः कथनं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥ अथ शिलाविन्यासविधिः ॥ भगवानुवाच ॥ पादप्रतिष्ठां वक्ष्यामि शिलाविन्याससलक्षणम् ॥ अग्रतो मण्डपः कार्यः कुण्डानां तु चतुष्टयम् ॥ १ ॥ कुम्भन्यासेष्टकान्यासौ द्वारस्तम्भोच्छ्रयं शुभम् ॥ पादोनं पूरयेत्खातं तत्र वास्तुं यजेत्समे ॥ २ ॥ इष्टकाश्च सुपकाः स्युर्द्वादशाङ्गुलसम्मिताः ॥ सुविस्तारात्रिभागेण वैपुल्येन समन्विताः ॥ ३ ॥ करप्रमाणा श्रेष्ठा स्याच्छिलाप्यथ शिला-

॥ २८ ॥

मये ॥ नव कुम्भांस्ताम्रमयान्स्थापयेदिष्टकाघटान् ॥ ४ ॥ अद्भिः पञ्चकषायेण सर्वौषधिजलेन च ॥ गन्धतोयेन च तथा कुम्भै-
स्तोयसुपूरितैः ॥ ५ ॥ हिरण्यव्रीहिसंयुक्तैर्गन्धचन्दनचर्चितैः ॥ आपोहिष्ठेति तिसृभिः शन्नोदेवीति चाप्यथ ॥ ६ ॥ तरत्समन्दी-
रिति च पावमानीभिरेव च ॥ उदुत्तमं वरुणमिति कयानश्च तथैव च ॥ ७ ॥ वरुणस्येति मन्त्रेण हँसः शुचिषदित्यपि ॥ श्रीसू-
क्तेनापि च तथा शिलाः संस्थाप्य संयुताः ॥ ८ ॥ शय्यायां मण्डपे प्राच्यां मण्डले हरिमर्चयेत् ॥ जुहुयाज्जनयित्वाग्निं समिधो
द्वादशीस्ततः ॥ ९ ॥ आघारावाज्यभागौ तु प्रणवेनैव कारयेत् ॥ अष्टाहुतीस्तथाष्टान्तैराज्यं व्याहृतिभिः क्रमात् ॥ १० ॥
लोकेशानामग्नये वै सोमायावग्रहेषु च ॥ पुरुषोत्तमायेति च व्याहृतीर्जुहुयात्ततः ॥ ११ ॥ प्रायश्चित्तं ततः पूर्णां मूर्तिमांसघृतां-
स्तिलान् ॥ वेदाद्यैर्द्वादशान्तेन कुम्भेषु च पृथक्पृथक् ॥१२॥ प्राङ्मुखस्तु गुरुः कुर्यादष्ट दिक्षु विलिप्य च ॥ मध्ये चैकां शिलां
कुम्भान्न्यसेदेतान्सुरान्क्रमात् ॥ १३॥ पद्मं चैव महापद्मं मकरं कच्छपं तथा ॥ कुमुदं च तथा नन्दं पद्मशङ्खे च पद्मिनीम् ॥ १४ ॥
कुम्भान्न चालयेत्तेषु न्यसेदष्टेष्टकाः क्रमात् ॥ ईशानान्ताश्च पूर्वादाविष्टकाः प्रथमं न्यसेत् ॥ १५ ॥ शक्तयो विमलाद्यास्तु
इष्टकानान्तु देवताः ॥ न्यसनीया यथायोगं मध्ये न्यस्यास्त्वनुग्रहा ॥ १६ ॥ अव्यङ्गे चाक्षते पूर्णे मुनेरङ्गिरसः सुते ॥ इष्टके त्वं
प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहम् ॥ १७ ॥ मन्त्रेणानेन विन्यस्य इष्टका देशिकोत्तमः ॥ गर्भाधानं ततः कुर्यान्मध्यस्थाने समा-
हितः ॥ १८ ॥ कुम्भोपरिष्टाद्देवेशं पद्मिनीं न्यस्य देवताम् ॥ मृत्तिकाश्चैव पुष्पाणि धातवो रत्नमेव च ॥ १९ ॥ लोहानि दिक्-
पतेरस्त्रं यजेद्वै गर्भभाजने ॥ द्वादशांगुलविस्तारे चतुरङ्गुलकोच्छ्रये ॥ २० ॥ पद्माकारे ताम्रमये भाजने पृथिवीं यजेत् ॥ एकान्ते
सर्वभूतेशे पर्वतासनमण्डिते ॥ २१ ॥ समुद्रपरिवारे त्वं देवि गर्भं समाश्रय ॥ नन्दे नन्दय वासिष्ठे वसुभिः प्रजया सह ॥ २२ ॥
जये भार्गवदायादे प्रजानां विजयावहे ॥ पूर्णेऽङ्गिरसदायादे पूर्णकामं कुरुष्व माम् ॥ २३ ॥ भद्रे काश्यपदायादे कुरु भद्रां मतिं
मम ॥ सर्वबीजसमायुक्ते सर्वरत्नौषधीवृते ॥ २४ ॥ जये सुरुचिरे नन्दे वासिष्ठे रम्यतामिह ॥ प्रजापतिसुते देवि चतुरस्रे मही-
यसि ॥ २५ ॥ सुभगे सुप्रभे भद्रे गृहे काश्यपि रम्यताम् ॥ पूजिते परमाश्चर्ये गन्धमाल्यैरलंकृते ॥ २६॥ भवभूतिकरी देवि गृहे





भार्गवि रम्यताम् ॥ देशस्वामिपुरस्वामिगृहस्वामिपरिग्रहे ॥२७॥ मनुष्यादिकतुष्टचर्थं पशुवृद्धिकरी भव ॥ एवमुक्त्वा ततः खातं
गोमूत्रेण तु सेचयेत् ॥ २८ ॥ कृत्वा निधापयेद्गर्भं गर्भाधानं भवेन्निशि ॥ गोवस्त्रादि प्रदद्याच्च गुरवेऽन्येषु भोजनम् ॥ २९ ॥
गर्भं न्यस्येष्टका न्यस्य ततो गर्भं प्रपूरयेत् ॥ पीठबन्धमतः कुर्य्यान्मितप्रासादमानतः ॥ ३० ॥ पीठोत्तमं चोच्छ्रयेण प्रासाद-
स्यार्द्धविस्तरात् ॥ पादहीनं मध्यमं स्यात्कनिष्ठं चोत्तमार्द्धतः ॥ ३१ ॥ पीठबन्धोपरिष्टात्तु वास्तुयागं पुनर्यजेत् ॥ पादप्रति-
ष्ठाकारी तु निष्पापो दिवि मोदते ॥ ३२ ॥ देवागारं करोमीति मनसा यस्तु चिन्तयेत् ॥ तस्य कायगतं पापं तदह्ना हि प्रण-
श्यति ॥ ३३ ॥ कृते तु किं पुनस्तस्य प्रासादे विधिनैव तु ॥ अष्टेष्टकासमायुक्तं यः कुर्य्याद्देवतालयम् ॥ ३४ ॥ न तस्य फल-
सम्पात्तिर्वक्तुं शक्येत केनचित् ॥ अनेनैवानुमेयं हि फलं प्रासादविस्तरात् ॥ ३५ ॥ ग्राममध्ये च पूर्वे च प्रत्यग्द्वारं प्रकल्पयेत् ॥
विदिशासु च सर्वासु ग्रामे प्रत्यङ्मुखो भवेत् ॥ दक्षिणे चोत्तरं चैव पश्चिमे प्राङ्मुखो भवेत् ॥ ३६ ॥ इत्यादिमहापुराणे आग्नेये
शिलाविन्यासकथनं नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥ अथ प्रासादलक्षणम् ॥ हयग्रीव उवाच ॥ प्रासादं संप्रवक्ष्यामि
सर्वसाधारणं शृणु ॥ चतुरस्रीकृतं क्षेत्रं भजेत्षोडशधा बुधः ॥१॥ मध्ये तस्य चतुर्भिस्तु कुर्यादायसमन्वितम् ॥ द्वादशैव तु भागांश्च
भित्त्यर्थं परिकल्पयेत् ॥ २ ॥ जंघोच्छ्रायस्तु कर्त्तव्यश्चतुर्भागेण चायतः ॥ जंघाया द्विगुणोच्छ्रायं मञ्जर्याः कल्पयेद्बुधः ॥ ३ ॥
तुर्यभागेण मञ्जर्याः कार्यः सम्यक्प्रदक्षिणः ॥ तन्माननिर्गमः कार्य उभयोः पार्श्वयोः समः ॥ ४ ॥ शिखरेण समं कार्यमग्रे जगति
विस्तरम् ॥ द्विगुणेनापि कर्त्तव्यं यथाशोभानुरूपतः ॥ ५ ॥ विस्तारान्मण्डपस्याग्रे गर्भसूत्रद्वयेन तु ॥ दैर्घ्यात्पादाधिकं कुर्यान्म-
ध्यस्तम्भैर्विभूषितम् ॥ ६ ॥ प्रासादगर्भमानं वा कुर्वीत मुखमण्डपम् ॥ एकाशीतिपदैर्वास्तुं पश्चान्मण्डपमारभेत् ॥ ७ ॥ शुका-
न्प्राग्द्वारविन्यासे पादान्तःस्थान्यजेत्सुरान् ॥ तथा प्राकारविन्यासे यजेद्द्वात्रिंशदन्तगान् ॥ ८ ॥ सर्वसाधारणं चैतत्प्रासादस्य च
लक्षणम् ॥ मानेन प्रतिमाया वा प्रासादमपरं शृणु ॥ ९ ॥ प्रतिमायाः प्रमाणेन कर्त्तव्या पिण्डिका शुभा ॥ गर्भस्तु पिण्डिकार्द्धेन
गर्भमानास्तु भित्तयः॥१०॥भित्तेरायाममानेन उत्सेधं तु प्रकल्पयेत् ॥ भित्त्युच्छ्रायात्तु द्विगुणं शिखरं कल्पयेद्बुधः ॥११॥ शिख-

रस्य तु तुर्येण भ्रमणं परिकल्पयेत् ॥ शिखरस्य चतुर्थेन अग्रतो मुखमण्डपम् ॥१२॥ अष्टमांशेन गर्भस्य रथकानां तु निर्गमः ॥
परिधेर्गुणभागेन रथकांस्तत्र कल्पयेत् ॥१३॥ तत्तृतीयेन वा कुर्याद्रथकानां तु निर्गमम् ॥ वामत्रयं स्थापनीयं रथकत्रितये सदा॥
॥ १४ ॥ शिखरार्थं हि सूत्राणि चत्वारि विनिपातयेत् ॥ शुकनासोर्ध्वतः सूत्रं तिर्यग्भूतं निपातयेत् ॥१५॥ शिखरस्यार्द्धभागस्थं
सिंहं तत्र तु कारयेत् ॥ शुकनासां स्थिरीकृत्य मध्यसन्धौ निधापयेत् ॥ १६ ॥ अपरे च तथा पार्श्वे तद्वत्सूत्रं निधापयेत् ॥
तदूर्ध्वं तु भवेद्वेदी सकण्ठासनसारकम् ॥ १७ ॥ स्कन्धभग्नं न कर्त्तव्यं विकरालं तथैव च ॥ ऊर्ध्वं च वेदिकामानात्कलशं परि-
कल्पयेत् ॥ १८ ॥ विस्ताराद्द्विगुणं द्वारं कर्त्तव्यं तु सुशोभनम् ॥ उदुम्बरौ तदूर्ध्वं च न्यसेच्छाखां सुमङ्गलैः ॥ १९ ॥ द्वारस्य तु
चतुर्थांशे कार्यौ चण्डप्रचण्डकौ ॥ विष्वक्सेनो वत्सदण्डो शाखाधोंदुम्बरे श्रियम् ॥२०॥ दिग्गजैः स्नाप्यमानां तां घटैः साञ्जां
सुरूपिकाम् ॥ प्रासादस्य चतुर्थांशे प्राकारस्योच्छ्रयो भवेत् ॥२१ ॥ प्रासादात्पादहीनस्तु गोपुरस्योच्छ्रयो भवेत् ॥ पञ्चहस्तस्य
देवस्य एकहस्ता तु पीठिका ॥२२॥ गारुडं मंडपं चाग्रे एकं भौमादिधाम च॥कुर्याद्धि प्रतिमायां तु दिक्षु चाष्टासु चोपरि ॥२३॥
पूर्वे वराहं दक्षे च नृसिंहं श्रीधरं जले ॥ उत्तरे तु हयग्रीवमाग्नेय्यां जामदग्न्यकम् ॥ २४ ॥ नैर्ऋत्यां रामकं वायौ वामनं वासुदेव-
कम् ॥ ईशे प्रासादरचना देया वस्वर्ककादिभिः ॥ द्वारस्य चाष्टमाद्यंशं त्यक्त्वा वेधो न दोषभाक् ॥२५॥ इत्यादिमहापुराणे आग्नेये
प्रासादलक्षणं नाम द्विचत्वारिंशोऽध्यायः॥४२॥अथ प्रासाददेवतास्थापनभूतशान्त्यादिकथनम् ॥ भगवानुवाच ॥ प्रासादे देवताः
स्थाप्या वक्ष्ये ब्रह्मञ्शृणुष्व मे ॥ पञ्चायतनमध्ये तु वासुदेवं निवेशयेत् ॥ १ ॥ वामनं नृहरिं चाश्वशीर्षं तद्वच्च सूकरम् ॥ आग्नेये
नैर्ऋते चैव वायव्ये चेशगोचरे॥२॥अथ नारायणं मध्ये ह्याग्नेय्यामम्बिकां न्यसेत् ॥ नैर्ऋत्यां भास्करं वायौ ब्रह्माणं लिङ्गमीशके
॥ ३ ॥ अथवा रुद्ररूपं तु अथवा नवधामसु ॥ वासुदेवं न्यसेन्मध्ये पूर्वादौ रामरामकान् ॥ ४ ॥ इन्द्रादींल्लोकपालांश्च अथवा नव
धामसु ॥ पञ्चायतनकं कुर्यान्मध्ये तु पुरुषोत्तमम् ॥ ५ ॥ लक्ष्मीवैश्रवणौ पूर्वे दक्षे मातृगणं न्यसेत् ॥ स्कंदं गणेशमीशानं सूर्या-
दीन्पश्चिमे ग्रहान् ॥ ६ ॥ उत्तरे दश मत्स्यादीनाग्नेय्यां चण्डिकां तथा ॥ नैर्ऋत्यामम्बिकां स्थाप्य वायव्ये तु सरस्वतीम् ॥ ७ ॥





पद्मामैशे वासुदेवं मध्ये नारायणं च वा ॥ त्रयोदशालये मध्ये विश्वरूपं न्यसेद्धरिम् ॥ ८ ॥ पूर्वादौ केशवादींश्च अन्यधाम
स्वयं हरिः ॥ मृन्मयी दारुघटिता लोहजा रत्नजा तथा ॥ ९ ॥ शैलजा गन्धजा चैव कौसुमी सप्तधा स्मृता ॥ कौसुमी गन्धजा
चैव मृन्मयी प्रतिमा तथा ॥ १० ॥ तत्कालपूजिताश्चैताः सर्वकामफलप्रदाः ॥ अथ शैलमयीं वक्ष्ये शिला यत्र च गृह्यते ॥ ११ ॥
पर्वतनामभावे च गृह्णीयाद्भूगतां शिलाम् ॥ पांडुरा ह्यरुणा पीता कृष्णा शस्ता तु वर्णिनाम् ॥ १२ ॥ न यदा लभ्यते सम्य-
ग्वर्णिनां वर्णतः शिला ॥ वर्णाद्यापादनं तत्र जुहुयात्सिंहविद्यया ॥ १३ ॥ शिलायां शुक्लरेखाढ्या कृष्णाढ्या सिंहहोमतः ॥
कांस्यघंटानिनादा स्यात्पुंलिङ्गा विस्फुलिङ्गिका ॥ १४ ॥ तन्मन्दलक्षणा स्त्री स्याद्रूपाभावान्नपुंसका ॥ दृश्यते मंडलं यस्यां
सगर्भां तां विवर्जयेत् ॥ १५ ॥ प्रतिमार्थं धनं दत्त्वा वनयागं समाचरेत् ॥ तत्र खात्वोपलिप्याथ मंडपे तु हरिं यजेत् ॥ १६ ॥
बलिं दत्त्वा कर्मशस्त्रं टङ्कादिकमथार्चयेत् ॥ हुत्वाथ शालितोयेन अस्त्रेण प्रोक्षयेच्छिलाम् ॥ १७ ॥ रक्षां कृत्वा नृसिंहेन मूलम-
न्त्रेण पूजयेत् ॥ हुत्वा पूर्णाहुतिं दद्यात्ततो भूतबलिं गुरुः ॥ १८ ॥ अत्र ये संस्थिताः सत्त्वा यातुधानाश्च गुह्यकाः ॥ सिद्धादयो
वा ये चान्ये तान्सम्पूज्य क्षमापयेत् ॥ १९ ॥ विष्णुबिम्बार्थमस्माकं यात्रैषा केशवाज्ञया ॥ विष्ण्वर्थं यद्भवेत्कार्यं युष्माकमपि
तद्भवेत् ॥ २० ॥ अनेन बलिदानेन प्रीता भवत सर्वथा ॥ क्षेमेण गच्छताऽन्यत्र मुक्त्वा स्थानमिदं त्वरात् ॥ २१ ॥ एवं प्रबोधिता
मुक्त्वा यान्ति तृप्ता यथासुखम् ॥ शिल्पिभिश्च चरुं प्राश्य स्वप्नमन्त्रं जपेन्निशि ॥ २२ ॥ ॐ नमः सकललोकाय विष्णवे
प्रभविष्णवे ॥ विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ २३ ॥ आचक्ष्व देवदेवेश प्रसुप्तोऽस्मि तवान्तिकम् ॥ स्वप्ने सर्वाणि
कार्याणि हृदिस्थानि तु यानि मे ॥ २४ ॥ ॐ ॐ हूं फट् विष्णवे स्वाहा ॥ शुभे स्वप्ने शुभं सर्वं ह्यशुभे सिंहहोमतः ॥ प्रात-
रर्घ्यं शिलायां तु दत्त्वास्त्रेणास्त्रकं यजेत् ॥ २५ ॥ कुद्दालटङ्कशस्त्राद्यं मध्वाज्याक्तमुखं चरेत् ॥ आत्मानं चिन्तयेद्विष्णुं शिल्पिनं
विश्वकर्मकम् ॥ २६ ॥ शस्त्रं विष्ण्वात्मकं दद्यान्मुखपृष्ठादि दर्शयेत् ॥ जितेन्द्रियष्टङ्कहस्तः शिल्पी तु चतुरस्रकाम् ॥ २७ ॥ शिलां
कृत्वा पिण्डिकार्थं किञ्चिन्न्यूनां तु कल्पयेत् ॥ रथे स्थाप्य समानीय सवस्त्रां कारुवेश्मनि ॥ पूजयित्वाथ घटयेत्प्रतिमां

॥ ३० ॥

स तु कर्मकृत् ॥ २८ ॥ इत्यादिमहापुराणे आग्नेये प्रासाददेवतास्थापनशान्त्यादिवर्णनं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
अथ वासुदेवादिप्रतिमालक्षणानि ॥ भगवानुवाच ॥ वासुदेवादिप्रतिमालक्षणं प्रवदामि ते ॥ प्रासादस्योत्तरे पूर्वमुखीं वा चोत्तराननाम् ॥ १ ॥ संस्थाप्य पूज्य च बलिं दत्त्वाथो मध्यसूत्रकम् ॥ शिलां शिल्पी तु नवधा विभज्य नवमें-शके ॥ २ ॥ सूर्ये भक्ते शिलायां तु भागं स्वाङ्गुलमुच्यते ॥ द्व्यंगुलं गोलकं नाम्ना कलानेत्रं तदुच्यते ॥ ३ ॥ भागमेकं त्रिधा भक्त्वा पार्ष्णिभागं प्रकल्पयेत् ॥ भागमेकं तथा जानौ ग्रीवायां भागमेव च ॥ ४ ॥ मुकुटं तालमात्रं स्यात्तालमात्रं तथा मुखम् ॥ तालेनैकेन कण्ठं तु तालेन हृदयं तथा ॥ ५ ॥ नाभिमेढ्रान्तरं तालं द्वितालावूरुकौ तथा ॥ तालद्वयेन जंघा स्यात्सूत्राणि शृणु साम्प्रतम् ॥ ६ ॥ कार्य्यं सूत्रद्वयं पादे जंघामध्ये तथापरम् ॥ जानौ सूत्रद्वयं कार्य्यमूरुमध्ये तथा परम् ॥७॥ मेढ्रे तथापरं कार्य्यं कट्यां सूत्रं तथापरम् ॥ मेखलाबन्धसिद्ध्यर्थं नाभ्यां चैवापरं तथा ॥ ८ ॥ हृदये च तथा कार्य्यं कण्ठे सूत्रद्वयं तथा ॥ ललाटे चापरं कार्यं मस्तके च तथापरम् ॥ ९ ॥ मुकुटोपरि कर्तव्यं सूत्रमेकं विचक्षणैः ॥ सूत्राण्यूर्द्ध्वं प्रदेयानि सप्तैव कमलोद्भव ॥ १० ॥ कक्षात्रिकान्तरेणैव षट् सूत्राणि प्रदापयेत् ॥ मध्यसूत्रं तु सन्त्यज्य सूत्राण्येव निवेदयेत् ॥ ११ ॥ ललाटं नासिकावक्त्रं कर्तव्यं चतुरङ्गुलम् ॥ ग्रीवा कर्णौ तु कर्तव्यावायामाच्चतुरङ्गुलौ ॥१२॥ द्व्यङ्गुले हनुके कार्य्ये विस्ताराच्चिबुकं तथा ॥ अष्टाङ्गुलं ललाटं तु विस्तारेण प्रकीर्तितम् ॥ १३ ॥ परेण द्व्यङ्गुलौ शङ्खौ कर्तव्यावलकान्वितौ ॥ चतुरङ्गुलमाख्यातमन्तरं कर्णनेत्रयोः ॥ १४ ॥ द्व्यङ्गुलौ पृथुकौ कर्णौ कर्णापाङ्गार्द्धपञ्चमे ॥ भ्रूसमेन तु सूत्रेण कर्णस्रोतः प्रकीर्तितम् ॥ १५ ॥ विद्धं षडङ्गुलं कर्णमविद्धं चतुरङ्गुलम् ॥ चिबुकेन समं विद्धमविद्धं वा षडंगुलम् ॥ १६ ॥ गन्धपात्रं तथावर्त्तं शष्कुलीं कल्पयेत्तथा ॥ अंगुलेनाधरः कार्य्यस्तस्यार्द्धेनोत्तराधरः ॥१७॥ अर्द्धांगुलं तथा नेत्रं वक्रं तु चतुरंगुलम् ॥ आयामेन तु वैपुल्यात्सार्द्धमंगुलमुच्यते ॥ १८ ॥ अव्यात्तमेवं स्याद्वक्त्रं व्यात्तं त्र्यंगुलमिष्यते ॥ नासावंशसमुच्छ्रायं मूले त्वेकांगुलं मतम् ॥ १९ ॥ उच्छ्रायाद्द्व्यंगुलं चाग्रे करवीरोपमा स्मृता ॥ अंतरं चक्षुषोः कार्य्यं चतुरंगुलमानतः ॥२०॥ द्व्यंगुलं चाक्षिकोणं च द्व्यंगुलं चांतरं तयोः ॥ तारा नेत्रत्रिभागेण



हक्कारा पञ्चमांशिका ॥ २१ ॥ त्र्यंगुलं नेत्रविस्तारं द्रोणी चार्द्धांगुला मता ॥ तत्प्रमाणा भ्रुवोर्लेखा भ्रुवौ चैव समे मते ॥ २२ ॥
भ्रूमध्यं द्व्यंगुलं कार्य्यं भ्रूदैर्घ्यं चतुरंगुलम् ॥ षट्त्रिंशदंगुलायामं मस्तकस्य तु वेष्टनम् ॥ २३ ॥ मूर्तीनां केशवादीनां द्वात्रिं-
शद्वेष्टनं भवेत् ॥ पञ्चनेत्रा त्वधो ग्रीवा विस्ताराद्वेष्टनं पुनः ॥ २४ ॥ त्रिगुणं तु भवेदूर्द्ध्वं विस्तृताष्टांगुलं पुनः ॥ ग्रीवात्रिगुणमा-
यामं ग्रीवावक्षोऽन्तरं भवेत् ॥ २५ ॥ स्कन्धावष्टांगुलौ कार्यौ त्रिकलावंशको शुभौ ॥ सप्तनेत्रौ स्मृतौ बाहू प्रबाहू षोडशां-
गुलौ ॥ २६ ॥ त्रिकलौ विस्तृतौ बाहू प्रबाहू चापि तत्समौ ॥ बाहुदंडोर्ध्वतो ज्ञेयः परीणाहः कला नव ॥ २७ ॥ सप्तदशां-
गुलो मध्ये कूर्परोऽर्द्धे च षोडश ॥ कूर्परस्य भवेन्नाहस्त्रिगुणः कमलोद्भव ॥ २८ ॥ नाहः प्रबाहुमध्ये तु षोडशांगुल उच्यते ॥
अग्रहस्ते परीणाहो द्वादशांगुल उच्यते ॥ २९ ॥ विस्तारेण करतलं कीर्तितं तु षडंगुलम् ॥ दैर्घ्यं सप्तांगुलं कार्यं मध्या पञ्चांगुला
मता ॥ ३० ॥ तर्जन्यनामिका चैव तस्मादर्द्धांगुलं विना ॥ कनिष्ठांगुष्ठकौ कार्यौ चतुरंगुलसम्मितौ ॥ ३१ ॥ द्विपर्वोऽङ्गुष्ठकः
कार्यः शेषांगुल्यस्त्रिपर्विकाः ॥ सर्वासां पर्वणोऽर्द्धेन नखमानं विधीयते ॥ ३२ ॥ वक्षसो यत्प्रमाणं तु जठरं तत्प्रमाणतः ॥
अंगुलैका भवेन्नाभी वेधेन च प्रमाणतः ॥ ३३ ॥ ततो मेढ्रान्तरं कार्यं तालमात्रं प्रमाणतः ॥ नाभिमध्ये परीणाहो द्विच-
त्वारिंशदंगुलः ॥ ३४ ॥ अन्तरं स्तनयोः कार्यं तालमात्रं प्रमाणतः ॥ चूचुकौ यवमानौ तु मण्डलं द्विपदं भवेत् ॥ ३५ ॥
चतुःषष्ट्यंगुलं कार्यं वेष्टनं वक्षसः स्फुटम् ॥ चतुर्मुखं च तदधो वेष्टनं परिकीर्तितम् ॥ ३६ ॥ पारिणाहस्तथा कट्याश्चतुःपञ्चद-
शांगुलैः ॥ विस्तारश्चोरुमूले तु प्रोच्यते द्वादशांगुलः ॥ ३७ ॥ तस्मादभ्याधिकं मध्ये ततो निम्नतरं क्रमात् ॥ विस्तृ-
ताष्टांगुलं जानुस्त्रिगुणा परिणाहतः ॥३८॥ जङ्घामध्ये तु विस्तारः सप्तांगुल उदाहृतः ॥ त्रिगुणः परिधिश्चास्य जङ्घाग्रे पञ्च विस्त-
राव ॥३९॥ त्रिगुणः परिधिश्चास्य पादौ तालप्रमाणकौ ॥ आयामादुत्थितौ पादौ चतुरंगुलमेव च ॥ ४० ॥ गुल्फात्पूर्वं तु कर्तव्यं
प्रमाणाच्चतुरंगुलम् ॥ त्रिकलं विस्तृतौ पादौ त्र्यंगुलो गुह्यकः स्मृतः ॥ ४१ ॥ पञ्चांगुलस्तु नाहोऽस्य दीर्घा तद्वत्प्रदेशिनी ॥ अष्ट- ॥३१॥
माष्टांशितो न्यूनाः शेषांगुल्यः क्रमेण तु ॥ ४२ ॥ सपादांगुलमुत्सेधमंगुष्ठस्य प्रकीर्तितम् ॥ तदेव द्विगुणं कार्यमंगुष्ठस्य नखं

तथा॥४३॥ अर्द्धांगुलं तथा न्यासं क्रमान्न्यूनं तु कारयेत् ॥ द्व्यंगुलौ वृषणौ कार्यौ मेढ्रं तु चतुरंगुलम् ॥४४॥ परिणाहोऽत्र कोषाग्रं कर्तव्यं चतुरंगुलम् ॥ षडंगुलपरीणाहौ वृषणौ परिकीर्तितौ ॥ ४५ ॥ प्रतिमा भूषणाढ्या स्यादेतदुद्देशलक्षणम् ॥ अनयैव दिशा कार्यं लोके दृष्ट्वा तु लक्षणम् ॥ ४६ ॥ दक्षिणे तु करे चक्रमधस्तात्पद्ममेव च ॥ वामे शंखं गदाधस्ताद्वासुदेवस्य लक्षणात् ॥ ४७ ॥ श्रीपुष्टी चापि कर्तव्ये पद्मवीणाकरान्विते ॥ ऊरुमात्रोच्छ्रितायामे मालाविद्याधरौ तथा ॥ ४८ ॥ प्रभामण्डलसंस्थौ तौ प्रभा हस्त्यादिभूषणा ॥ पद्माभं पादपीठं तु प्रतिमास्वेवमाचरेत् ॥ ४९ ॥ इत्यादिमहापुराणे आग्नेये वासुदेवादिप्रतिमालक्षणं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ अथ पिण्डिकादिलक्षणम् ॥ भगवानुवाच ॥ पिंडिकालक्षणं वक्ष्ये दैर्घ्येण प्रतिमासमा ॥ उच्छ्राये प्रतिमार्द्धं तु चतुःषष्टिपुटां च ताम् ॥ १ ॥ त्यक्त्वा पङ्क्तिद्वयं चाधस्तदूर्ध्वं यत्तु कोष्ठकम् ॥ समन्तादुभयोः पार्श्वे अन्तःस्थं परिमार्जयेत् ॥२॥ ऊर्ध्वं पङ्क्तिद्वयं त्यक्त्वा अधस्ताद्यत्तु कोष्ठकम् ॥ अन्तःसन्मार्जयेद्यत्नात्पार्श्वयोरुभयोः समम् ॥ ३ ॥ तयोर्मध्यगतौ तत्र चतुष्कौ मार्जयेत्ततः ॥ चतुर्द्धा भाजयित्वा तु ऊर्ध्वपंक्तिद्वयं बुधः ॥ ४ ॥ मेखला भागमात्रा स्यात्खातं तस्यार्द्धमानतः ॥ भागं भागं परित्यज्य पार्श्वयोरुभयोः समम् ॥ ५ ॥ दत्त्वा चैकं पदं बाह्ये प्रमाणं कारयेद्बुधः ॥ त्रिभागेन च भागस्याग्रे स्यात्तोयविनिर्गमः ॥ ६ ॥ नानाप्रकारभेदेन भद्रेयं पिण्डिका शुभा ॥ अष्टताला तु कर्त्तव्या देवी लक्ष्मीस्तथा स्त्रियः ॥ ७ ॥ भ्रुवौ यवाधिके कार्य्ये यवहीना तु नासिका ॥ गोलकेनाधिकं वक्त्रमूर्ध्वं तिर्य्यग्विवर्जितम् ॥ ८ ॥ आयते नयने कार्य्ये त्रिभागोनैर्यवैस्त्रिभिः ॥ तदर्द्धेन तु वैपुल्यं नेत्रयोः परिकल्पयेत् ॥ ९ ॥ कर्णपाशोऽधिकः कार्य्यः सृक्किणी समसूत्रतः ॥ नम्रं कलाविहीनं तु कुर्य्यादंशद्वयं तथा ॥ १० ॥ ग्रीवा सार्द्धकला कार्य्या तद्विस्तारोपशोभिता ॥ नेत्रं विना तु विस्तारौ ऊरू जानू च पिण्डिका ॥ ११ ॥ अंघ्रिपृष्ठौ स्फिचौ कट्यां यथायोगं प्रकल्पयेत् ॥ सप्तांशोनास्तथाङ्गुल्यो दीर्घविष्कम्भनाहतम् ॥ १२ ॥ नेत्रैकवर्जितायामा जङ्घोरुश्च तथा कटिः ॥ मध्यपार्श्वं तु यद्वृत्तं घनं पीनं कुचद्वयम् ॥ १३ ॥ तालमात्रौ स्तनौ कार्य्यौ कटिः सार्द्धकलाधिका ॥ लक्ष्म शेषं पुरावत्स्याद्दक्षिणे चाम्बुजं करे ॥ १४ ॥ वामे बिल्वं स्त्रियौ पार्श्वे शुभे





चामरहस्तके ॥ दीर्घघोणस्तु गरुडश्चक्राङ्काद्यानथो वदे ॥ १६ ॥ इत्यादिमहापुराणे आग्नेये पिण्डिकादिलक्षणं नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥ अथ शालग्रामादिमूर्तिलक्षणम् ॥ श्रीभगवानुवाच ॥ शालग्रामादिमूर्तीश्च वक्ष्येऽहं भुक्तिमुक्तिदाः ॥ वासुदेवोऽसितो द्वारि शिलालग्नद्विचक्रकः ॥ १ ॥ ज्ञेयः सङ्कर्षणो लग्नद्विचक्रो रक्त उत्तमः ॥ सूक्ष्मचक्रो बहुच्छिद्रः प्रद्युम्नो नीलदीर्घकः ॥ २ ॥ पीतोऽनिरुद्धः पद्माङ्को वर्तुलो द्वित्रिरेखकः ॥ कृष्णो नारायणो नाभ्युन्नतः सुषिरदीर्घवान् ॥ ३ ॥ परमेष्ठी साब्जचक्रः पृष्ठच्छिद्रश्च बिन्दुमान् ॥ स्थूलचक्रोऽसितो विष्णुर्मध्ये रेखा गदाकृतिः ॥ ४ ॥ नृसिंहः कपिलः स्थूलचक्रः स्यात्पञ्चबिन्दुकः ॥ वराहः शक्तिलिङ्गः स्यात्तच्चक्रौ विषमौ स्मृतौ ॥ ५ ॥ इन्द्रनीलनिभः स्थूलस्त्रिरेखालाञ्छितः शुभः ॥ कूर्मस्तथोन्नतः पृष्ठे वर्तुलावर्तकोऽसितः ॥६॥ हयग्रीवोऽङ्कुशाकाररेखो नीलः सबिन्दुकः ॥ वैकुण्ठ एकचक्रोऽब्जी मणिभः पुच्छरेखकः ॥ ७॥ मत्स्यो दीर्घस्त्रिबिन्दुः स्यात्काचवर्णस्तु पूरितः ॥ श्रीधरो वनमालाङ्कः पञ्चरेखस्तु वर्तुलः ॥ ८॥ वामनो वर्तुलश्चातिह्रस्वो नीलः सबिन्दुकः ॥ श्यामस्त्रिविक्रमो दक्षरेखो वामेन रिक्तकः ॥ ९ ॥ अनन्तो नागभोगाङ्को नैकाभो नैकमूर्तिमान् ॥ स्थूलो दामोदरो मध्यचक्रः स्यात्सूक्ष्मबिन्दुकः ॥ १० ॥ सुदर्शनस्त्वेकचक्रो लक्ष्मीनारायणो द्वयात् ॥ त्रिचक्रश्चाच्युतो देवस्त्रिचक्रो वा त्रिविक्रमः ॥ ११ ॥ जनार्दनश्चतुश्चक्रो वासुदेवश्च पञ्चभिः ॥ षट् चक्रश्चैव प्रद्युम्नः सङ्कर्षणश्च सप्तभिः ॥ १२ ॥ पुरुषोत्तमोऽष्टचक्रो नवव्यूहो नवाङ्कितः ॥ दशावतारो दशभिर्दशैकेनानिरुद्धकः ॥ द्वादशात्मा द्वादशभिरत ऊर्ध्वमनन्तकः ॥ १३ ॥ इत्यादिमहापुराणे आग्नेये शालग्रामादिमूर्तिलक्षणं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ अथ शालग्रामादिपूजाकथनम् ॥ श्रीभगवानुवाच ॥ शालग्रामादिचक्राङ्कपूजाः सिद्धयै वदामि ते ॥ त्रिविधा स्याद्धरेः पूजा काम्याकाम्योभयात्मिका ॥ १ ॥ मीनादीनां तु पञ्चानां काम्यार्था वोभयात्मिका ॥ वराहस्य नृसिंहस्य वामनस्य च मुक्तये ॥ २ ॥ चक्रादीनां त्रयाणां तु शालग्रामार्चनं शृणु ॥ ॥ ३२ ॥
उत्तमा निष्फला पूजा कनिष्ठा सफलार्चना ॥ ३ ॥ मध्यमा मूर्तिपूजा स्याच्चक्राब्जे चतुरस्रके ॥ प्रणवं हृदि विन्यस्य षडङ्गं करदेहयोः ॥ ४ ॥ कृतमुद्रात्रयश्चक्राद्बहिः पूर्वे गुरुं यजेत् ॥ आप्ये गणं वायवे च धातारं नैर्ऋते यजेत् ॥ ५ ॥ विधातारं च कर्तारं

हर्त्तारं दक्षसौम्ययोः ॥ विष्वक्सेनं यजेदीश आग्नेये क्षेत्रपालकम् ॥ ६ ॥ ऋगादिवेदान्प्रागादावाधारानन्तकं भुवम् ॥ पीठं पद्मं चार्कचन्द्रवह्न्याख्यं मण्डलत्रयम् ॥ ७॥ आसनं द्वादशार्णेन तत्र स्थाप्य शिलां यजेत् ॥ व्यस्तेन च समस्तेन स्वबीजेन यजेत्क्रमात् ॥ ८ ॥ पूर्वादावथ वेदाद्यैर्गायत्रीभ्यां जितादिना ॥ प्रणवेनार्चयेत्पश्चान्मुद्रास्तिस्रः प्रदर्शयेत् ॥ ९ ॥ विष्वक्सेनस्य चक्रस्य क्षेत्रपालस्य दर्शयेत् ॥ शालग्रामस्य प्रथमा पूजाथो निष्फलोच्यते ॥ १० ॥ पूर्ववत्षोडशारं च सपद्मं मण्डलं लिखेत् ॥ शङ्खचक्रगदाखड्गैर्गुर्वाद्यं पूर्ववद्यजेत् ॥ ११ ॥ पूर्वे सौम्ये धनुर्बाणान्वेदाद्यैरासनं ददेत् ॥ शिलां न्यसेद्द्वादशार्णैस्तृतीयं पूजनं शृणु ॥ १२ ॥ अष्टारमब्जं विलिखेद्गुर्वाद्यं पूर्ववद्यजेत् ॥ अष्टार्णेनासनं दत्त्वा तेनैव च शिलां न्यसेत् ॥ पूजयेद्दशधा तेन गायत्रीभ्यां जितं तथा ॥ १३ ॥ इत्यादिमहापुराणे आग्नेये शालग्रामादिपूजाकथनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ अथ चतुर्विंशतिमूर्त्तिस्तोत्रम् ॥ श्रीभगवानुवाच ॥ ओंरूपः केशवः पद्मशंखचक्रगदाधरः ॥ नारायणः शंखपद्मगदाचक्री प्रदक्षिणम् ॥ १ ॥ ततो गदी माधवोऽरिशंखपद्मी नामामि तम् ॥ चक्रकौमोदकीपद्मशंखी गोविन्द ऊर्जितः ॥ २ ॥ मोक्षदः श्रीगदी पद्मी शंखो विष्णुश्च चक्रधृक् ॥ शंखचक्राब्जगादिनं मधुसूदनमानमे ॥ ३ ॥ भक्त्या त्रिविक्रमः पद्मगदी चक्री च शंख्यपि ॥ शंखचक्रगदापद्मी वामनः पातु मां सदा ॥ ४ ॥ गतिदः श्रीधरः पद्मी चक्रशार्ङ्गी च शंख्यपि ॥ हृषीकेशो गदी चक्री पद्मी शङ्खी च पातु नः ॥५॥ वरदः पद्मनाभस्तु शंखाब्जारिगदाधरः ॥ दामोदरः पद्मशंखगदाचक्री नमामि तम् ॥६॥ तेने गदी शंखचक्री वासुदेवोऽब्जभृज्जगत् ॥ सङ्कर्षणो गदी शंखी पद्मी चक्री च पातु वः ॥७॥ गदी चक्री शंखगदी प्रद्युम्नः पद्मभृत्प्रभुः ॥ अनिरुद्धश्चक्रगदी शंखी पद्मी च पातु नः ॥८॥ सुरेशोऽर्य्यब्जशंखाढ्यः श्रीगदी पुरुषोत्तमः ॥ अधोऽक्षजः पद्मगदी शंखी चक्री च पातु वः ॥९॥ देवो नृसिंहश्चक्राब्जगदी शंखी नमामि तम् ॥ अच्युतः श्रीगदी पद्मी चक्री शंखी च पातु वः ॥ १० ॥ बालरूपी शंखगदी उपेन्द्रश्चक्रपद्म्यपि ॥ जनार्दनः पद्मचक्री शंखधारी गदाधरः ॥११॥ शंखी पद्मी च चक्री च हरिः कौमोदकीधरः ॥ कृष्णः शंखी गदी पद्मी चक्री मे भुक्तिमुक्तिदः ॥१२॥ आदिमूर्तिर्वासुदेवस्तस्मात्सङ्कर्षणोऽभवत् ॥ सङ्कर्षणाच्च प्रद्युम्नः प्रद्युम्नादानिरुद्धकः ॥१३॥ केशवा-

दिग्भेदेन एकैकः स्यात्त्रिधा क्रमात् ॥ द्वादशाक्षरकं स्तोत्रं चतुर्विंशतिमूर्तिमत् ॥ यः पठेच्छृणुयाद्वापि निर्मलः सर्वमाप्नुयात् ॥१४॥
इत्यादिमहापुराणे आग्नेये चतुर्विंशतिमूर्तिस्तोत्रं नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ अथ मत्स्यादिलक्षणवर्णनम् ॥ श्रीभगवानु-
वाच ॥ दशावतारं मत्स्यादिलक्षणं प्रवदामि ते ॥ मत्स्याकारस्तु मत्स्यः स्यात्कूर्मः कूर्माकृतिर्भवेत् ॥ १ ॥नराङ्गो वाथ कर्त्तव्यो
भूवराहो गदादिभृत् ॥ दक्षिणे वामके शङ्खो लक्ष्मीर्वा पद्ममेव वा ॥२॥ श्रीर्वामकूर्परस्था तु क्ष्मानन्तौ चरणानुगौ ॥ वराहस्था-
पनाद्राज्यं भवाब्धितरणं भवेत् ॥३॥ नरसिंहो विवृत्तास्यो वामोरुक्षतदानवः ॥ तद्वक्षो दारयन्माली स्फुरच्चक्रगदाधरः ॥४॥ छत्री
दंडी वामनः स्यादथवा स्याच्चतुर्भुजः ॥ रामश्चापेषुहस्तः स्यात्खड्गी परशुनान्वितः ॥५॥ रामश्चापी शरी खड्गी शङ्खी वा द्विभुजः
स्मृतः ॥ गदालाङ्गलधारी च रामो वाथ चतुर्भुजः ॥ ६ ॥ वामार्धे लाङ्गलं दद्यादधः शङ्खं सुशोभनम् ॥ मुसलं दक्षिणार्द्धे तु चक्रं
चाधः सुशोभनम् ॥७॥ शान्तात्मा लम्बकर्णश्च गौराङ्गश्चाम्बरावृतः ॥ ऊर्ध्वपद्मस्थितो बुद्धो वरदाभयदायकः ॥८॥ धनुस्तूणा-
न्वितः कल्की म्लेच्छोत्सादकरो द्विजः ॥ अथवाश्वस्थितः खड्गी शङ्खचक्रशरान्वितः ॥ ९ ॥ लक्षणं वासुदेवादिनवकस्य वदामि
ते ॥ दक्षिणार्धे गदा वामे वामार्धे चक्रमुत्तमम् ॥ १० ॥ ब्रह्मेशौ पार्श्वगौ नित्यं वासुदेवोऽस्ति पूर्ववत् ॥ शङ्खी सवरदो वाथ
द्विभुजो वा चतुर्भुजः ॥ ११ ॥ लाङ्गली मुसली रामो गदापद्मधरः स्मृतः ॥ प्रद्युम्नो दक्षिणे वज्रं शङ्खं वामे धनुः करे ॥ १२ ॥
गदानाभ्यावृतः प्रीत्या प्रद्युम्नो वा धनुःशरी ॥ चतुर्भुजोऽनिरुद्धः स्यात्तथा नारायणो विभुः ॥ १३ ॥ चतुर्मुखश्चतुर्बाहुर्बृहज्जठ-
रमण्डलः ॥ लम्बकूर्चो जटायुक्तो ब्रह्मा हंसाग्र्यवाहनः ॥ १४ ॥ दक्षिणे चाक्षसूत्रं च स्रुवो वामे तु कुण्डिका ॥ आज्यस्थाली
सरस्वती सावित्री वामदक्षिणे ॥ १५ ॥ विष्णुरष्टभुजस्तार्क्ष्ये करे खड्गस्तु दक्षिणे ॥ गदाधरश्च वरदो वामे कार्मुकखेटके ॥ १६ ॥
चक्रशङ्खौ चतुर्बाहुर्नरसिंहश्चतुर्भुजः ॥ शङ्खचक्रधरो वापि विदारितमहासुरः ॥ १७ ॥ चतुर्बाहुर्वराहस्तु शेषः पाणितले धृतः ॥
धारयन्बाहुना पृथ्वीं वामेन कमलाधरः ॥ १८ ॥ पादलग्ना धरा कार्य्या पदा लक्ष्मीर्व्यवस्थिता ॥ त्रैलोक्यमोहनस्तार्क्ष्ये ह्यष्ट-
बाहुस्तु दक्षिणे ॥ १९ ॥ चक्रं खड्गं च मुसलमङ्कुशं वामके करे ॥ शङ्खशार्ङ्गगदापाशान्पद्मवीणासमन्विते ॥ २० ॥ लक्ष्मीसर-

स्थती कार्ये विश्वरूपोऽथ दक्षिणे ॥ मुद्गरं च तथा पाशं शक्तिशूलं शरं करे ॥ २१ ॥ वामे शङ्खं च शार्ङ्गं च गदां पाशं च तोमरम् ॥ लाङ्गलं परशुं दण्डं छुरिकां चर्मक्षेपणम् ॥ २२ ॥ विंशद्बाहुश्चतुर्वक्त्रो दक्षिणस्थोऽथ वामके ॥ त्रिनेत्रो वामपार्श्वेनशायितो जलशाय्यपि ॥ २३ ॥ श्रिया धृतैकचरणो विमलाद्याभिरीडितः ॥ नाभिपद्मचतुर्वक्त्रो हरिशङ्करको हरिः ॥ २४ ॥ शूलर्ष्टिधारी दक्षे च गदाचक्रधरोऽपरे ॥ रुद्रकेशवलक्ष्माङ्गो गौरीलक्ष्मीसमन्वितः ॥ २५ ॥ शंखचक्रगदावेदपाणिश्चाश्वशिरा हरिः ॥ वामपादो धृतः शेषे दक्षिणः कूर्मपृष्ठगः ॥ २६ ॥ दत्तात्रेयो द्विबाहुः स्याद्वामोत्सङ्गे श्रिया सह ॥ विष्वक्सेनश्चक्रगदी हली शङ्खी हरेर्गणः ॥ २७ ॥ इत्याग्नेये महापुराणे मत्स्यादिप्रतिमालक्षणं नामोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥ अथ देवीप्रतिमालक्षणम् ॥ श्रीभगवानुवाच ॥ चण्डी विंशतिबाहुः स्याद्बिभ्रती दक्षिणैः करैः ॥ शूलासिशक्तिचक्राणि पाशखेटायुधाभयम् ॥ १ ॥ डमरुं शक्तिकां वामैर्नागपाशं च खेटकम् ॥ कुठाराङ्कुशपाशांश्च घण्टाध्वजगदास्तथा ॥ २ ॥ आदर्शमुद्गरान्हस्तैश्चण्डी वा दशबाहुका ॥ तदधो महिषश्छिन्नमूर्धा पातितमस्तकः ॥ ३ ॥ शस्त्रोद्यतकरः क्रुद्धस्तद्ग्रीवासम्भवः पुमान् ॥ शूलहस्तो वमद्रक्तो रक्तस्रङ्मूर्द्धजेक्षणः ॥ ४ ॥ सिंहेनास्वाद्यमानस्तु पाशबद्धो गले भृशम् ॥ याम्यांघ्र्याक्रान्तसिंहा च सव्याङ्घ्रिर्नीचगासुरे ॥ ५ ॥ चण्डिकेयं त्रिनेत्रा च सशस्त्रा रिपुमर्दिनी ॥ नवपद्मात्मके स्थाने पूज्या दुर्गा स्वमूर्तितः ॥ ६ ॥ आदौ मध्ये तथेन्द्राद्या नवतत्त्वात्मभिः क्रमात् ॥ अष्टादशभुजैका तु दक्षे मुण्डं च खेटकम् ॥ ७ ॥ आदर्शं तर्जनीं चापं ध्वजं डमरुकं तथा ॥ पाशं वामे बिभ्रती च शक्तिमुद्गरशूलकम् ॥ ८ ॥ वज्रखड्गाङ्कुशशरान् चक्रं देवी शलाकया ॥ एतैरेवायुधैर्युक्ताः शेषाः षोडशबाहुकाः ॥ ९ ॥ डमरुं तर्जनीं त्यक्त्वा रुद्रचण्डादयो नव ॥ रुद्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ॥ १० ॥ चण्डा चण्डवती चैव चण्डरूपातिचण्डिका ॥ उग्रचण्डा च मध्यस्था रोचनाभाऽरुणाऽसिता ॥ ११ ॥ नीला शुक्ला धूम्रिका च पीता श्वेता च सिंहगा ॥ महिषोऽथ पुमाञ्छस्त्री तत्कचग्रहमुष्टिका ॥ १२ ॥ अलीढा नवदुर्गाः स्युः स्थाप्याः पुत्रादिवृद्धये ॥ तथा गौरी चण्डिकाद्या कुण्डचक्षररदाग्निधृक् ॥ १३ ॥ सैव रम्भा वने सिद्धाऽग्निहीना ललिता तथा ॥ स्कन्धमूर्द्धकरा वामे द्वितीये धृतदर्पणा ॥ १४ ॥ याम्ये फलाङ्गुलि-

हस्ता सौभाग्या तत्र चोर्ध्विका ॥ लक्ष्मीर्याम्यकराम्भोजा वामे श्रीफलसंयुता ॥ १५ ॥ पुस्ताक्षमालिकाहस्ता वीणाहस्ता सरस्वती ॥ कुम्भाब्जहस्ता श्वेताभा मकरोपरि जाह्नवी ॥ १६ ॥ कूर्म्मगा यमुना कुम्भक॥ श्यामा च पूज्यते ॥ सवीणस्तुम्बुरुः शुक्लः शूली मात्रग्रतो वृषे ॥ १७ ॥ गौरी चतुर्मुखी ब्राह्मी अक्षमालासुरान्विता ॥ कुण्डाक्षपात्रिणी वामे हंसगा शाङ्करी सिता ॥ १८ ॥ शरचापौ दक्षिणेऽस्या वामे चक्रं धनुर्वृषौ ॥ कौमारी शिखिगा रक्ता शक्तिह॥ द्विबाहुका ॥ १९ ॥ चक्रशङ्खधरा सव्ये वामे लक्ष्मीर्गदाब्जधृक् ॥ दण्डशङ्खासिगदया वाराही महिषस्थिता ॥२०॥ ऐन्द्री गजे वज्रहस्ता सहस्राक्षी तु सिद्धये ॥ चामुण्डा कोटराक्षी स्यान्निर्मांसा तु त्रिलोचना ॥ २१ ॥ निर्मांसा अस्थिसारा वा ऊर्ध्वकेशी कृशोदरी ॥ द्वीपिचर्मधरा वामे कपालं पट्टिशं करे ॥ २२ ॥ शूलं कर्त्री दक्षिणेऽस्याः शवारूढास्थिभूषणा ॥ विनायको नराकारो बृहत्कुक्षिर्गजाननः ॥ २३ ॥ बृहच्छुण्डो ह्युपवीती मुखं सप्तकलं भवेत् ॥ विस्ताराद्दैर्घ्यतश्चैवं शुण्डं षट्त्रिंशदङ्गुलम् ॥ २४ ॥ कला द्वादश नाडी तु ग्रीवा सार्द्धकलोच्छ्रिता ॥ षट्त्रिंशदङ्गुलं कण्ठं गुह्यमध्यर्द्धमङ्गुलम् ॥ २५ ॥ नाभिरूरू द्वादशं च जङ्घे पादे तु दक्षिणे ॥ स्वदन्तं परशुं वामे लड्डुकं चोत्पलं शये ॥ २६ ॥ सुमुखी च बिडालाक्षी पार्श्वे स्कन्दो मयूरगः ॥ स्वामी शाखो विशाखश्च द्विभुजो बालरूपधृक् ॥ २७ ॥ दक्षे शक्तिः कुक्कुटेऽथ एकवक्त्रोऽथ षण्मुखः ॥ षड्भुजो वा द्वादशभिर्ग्रामेऽरण्ये द्विबाहुकः ॥ २८ ॥ शक्तीषुपाशनिस्त्रिंशतोत्रदोस्तर्जनीयुतः ॥ शक्त्या दक्षिणहस्तेषु षट्सु वामे करे तथा ॥ २९ ॥ शिखिपिच्छं धनुः खेटं पताकाभयकुक्कुटे ॥ कपालकर्त्तरीशूलपाशभृद्याम्यसौम्ययोः ॥ ३० ॥ गजचर्मभृदूर्ध्वास्यपादा स्याद्रुद्रचर्चिका ॥ सैव चाष्टभुजा देवी शिरोडमरुकान्विता ॥ ३१ ॥ तेन सा रुद्रचामुण्डा नाटेश्वर्यथ नृत्यती ॥ इयमेव महालक्ष्मीरुपविष्टा चतुर्मुखी ॥ ३२ ॥ नृवाजिमहिषेभांश्च खादन्ती च करे स्थितान् ॥ दशबाहुस्त्रिनेत्रा च शस्त्रासिडमरुत्रिकम् ॥ ३३ ॥ बिभ्रती दक्षिणे हस्ते वामे घण्टां च खेटकम् ॥ खट्वाङ्गं च त्रिशूलं च सिद्धचामुण्डिकाह्वया ॥ ३४ ॥ सिद्धयोगेश्वरी देवी सर्वसिद्धिप्रदायिका ॥ एतद्रूपा भवेदन्या पाशाङ्कुशयुतारुणा ॥ ३५ ॥ भैरवी रूपविद्या तु भुजैर्द्वादशभिर्युता ॥ एताः श्मशानजा रौद्रा अम्बाष्टकमिदं

स्मृतम् ॥ ३६ ॥ क्षमा शिवावृता वृद्धा द्विभुजा विवृतानना ॥ दन्तुरा क्षेमकारी स्याद्भूमौ जानुकरा स्थिता ॥ ३७ ॥ यक्षिण्यस्तब्धदीर्घाक्ष्यः शाकिन्यो वक्रदृष्टयः ॥ पिङ्गाक्ष्यः स्युर्महारम्या रूपिण्योऽप्सरसः सदा ॥ ३८ ॥ साक्षमाली त्रिशूली च नन्दीशो द्वारपालकः ॥ महाकालोऽसिमुण्डी स्याच्छूलखेटकवांस्तथा ॥ ३९ ॥ कृशो भृङ्गी च नृत्यन्वै कूष्माण्डस्थूलखर्ववान् ॥ गजगोकर्णवक्त्राद्या वीरभद्रादयो गणाः ॥ ४० ॥ घण्टाकर्णोऽष्टदशदो पापरोगं विदारयन् ॥ वज्रासिदण्डचक्रेषुमुसलाङ्कुशमुद्गरान् ॥ ४१ ॥ दक्षिणे तर्जनीं खेटं शक्तिं मुण्डं च पाशकम् ॥ चापं घण्टां कुठारं च द्वाभ्यां चैव त्रिशूलकम् ॥ घण्टामालाकुलो देवो विस्फोटकविमर्दनः ॥ ४२ ॥ इत्यादिमहापुराणे आग्नेये देवीप्रतिमालक्षणं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

अथ सूर्य्यादिप्रतिमालक्षणम् ॥ श्रीभगवानुवाच ॥ ससप्ताश्वे सैकचक्रे रथे सूर्य्यो द्विपद्मधृक् ॥ मषीभाजनलेखन्यौ बिभ्रद्दण्डी तु दक्षिणे ॥ १ ॥ वामे तु पिङ्गलो द्वारि दण्डभृत्स खेर्गणः ॥ वालव्यजनधारिण्यौ पार्श्वे राज्ञी च निष्प्रभा ॥ २ ॥ अथवाऽश्वसमारूढः कार्य्य एकस्तु भास्करः ॥ वरदा द्व्यब्जिनः सर्व्वे दिक्पाः शस्त्रकराः क्रमात् ॥ ३ ॥ मुद्गरः शूलचक्राब्जभृतोऽग्न्यादिविदिक्स्थताः ॥ सूर्य्यार्य्यमादिरक्षोऽन्ताश्चतुर्हस्ता द्विषड्दले ॥ ४॥ वरुणः सूर्य्यनामा च सहस्रांशुस्तथा परः ॥ धाता तपनसञ्ज्ञश्च सविताथ गभस्तिकः ॥ ५ ॥ रविश्चैवाथ पर्जन्यस्त्वष्टा मित्रोऽथ विष्णुकः ॥ मेषादिराशिसंस्थाश्च मार्गादिकार्तिकान्तकाः ॥ ६ ॥ कृष्णो रक्तोः मनाग्रक्तः पीतः पाण्डुरकः सितः ॥ कपिलः पीतवर्णश्च शुकाभो धवलस्तथा ॥ ७ ॥ धूम्रो नीलः क्रमाद्वर्णाः शक्तयः केसराग्रगाः ॥ इडा सुषुम्णा विश्वार्चिरिन्दुसञ्ज्ञा प्रमर्दिनी ॥ ८ ॥ प्रहर्षिणी महाकाली कपिला च प्रबोधिनी ॥ नीलाम्बरघनान्तस्था अमृताख्या च शक्तयः ॥ ९ ॥ वरुणादेश्च तद्वर्णाः केसराग्रेषु विन्यसेत् ॥ तेजश्चण्डो महावक्त्रो द्विभुजः पद्मखड्गभृत् ॥ १० ॥ कुण्डिकाजप्यमालीन्दुः कुजः शक्त्यक्षमालिकः ॥ बुधश्चापाक्षपाणिः स्याज्जीवः कुण्ड्यक्षमालिकः ॥ ११॥ शुक्रः कुण्ड्यक्षमाली स्यात्किङ्किणीसूत्रवाञ्छनिः ॥ अर्द्धचन्द्रधरो राहुः केतुः खड्गी च दीपभृत् ॥ १२ ॥ अनन्तस्तक्षकः कर्कः पद्मो महाब्जः शङ्खकः ॥ कुलिकः सूत्रिणः सर्वे फणवक्त्रा महाप्रभाः ॥ १३ ॥ इन्द्रो वज्री गजारूढश्छागगोऽग्निश्च शक्तिमान् ॥





यमो दण्डी च महिषे नैर्ऋतः खड्गवान् करे ॥ १४ ॥ मकरे वरुणः पाशी वायुर्ध्वजधरो मृगे ॥ गदी कुबेरो मेषस्थ ईशानश्च जटी वृषे ॥ १५ ॥ द्विबाहवो लोकपाला विश्वकर्माक्षसूत्रभृत् ॥ हनूमान्वज्रहस्तः स्यात्पद्भ्यां सम्पीडिताश्रयः ॥ १६ ॥ वीणाहस्ताः किन्नराः स्युर्माला विद्याधराश्च खे ॥ दुर्बलाङ्गाः पिशाचाः स्युर्वेताला विकृताननाः ॥ क्षेत्रपालाः शूलवन्तः प्रेता महोदराः कृशाः ॥१७॥ इत्यादिमहापुराणे आग्नेये सूर्यादिप्रतिमालक्षणं नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥ अथ चतुःषष्टियोगिन्यादिल० ॥

श्रीभगवानुवाच ॥ योगिन्यष्टाष्टकं वक्ष्ये ऐन्द्रादीशानतः क्रमात् ॥ अक्षोभ्या रूक्षकर्णी च राक्षसी कृपणा क्षया ॥१॥ पिङ्गाक्षी चाक्षया क्षेमा इला नीलालया तथा ॥ लोलाऽलक्ता बलाकेशी लालसा विमला पुनः ॥ २ ॥ हुताशा च विशालाक्षी हुङ्कारा वडवामुखी ॥ महाक्रूरा क्रोधना तु भयङ्करी महानना ॥ ३ ॥ सर्वज्ञा तरला तारा ऋग्वेदा तु हयानना ॥ साराख्या रुद्रसंग्राही शम्बरा तालजङ्घिका ॥ ४ ॥ रक्ताक्षी सुप्रसिद्धा तु विद्युज्जिह्वा करङ्किणी ॥ मेघनादा प्रचण्डोग्रा कालकर्णी वरप्रदा ॥ ५ ॥ चन्द्रा चन्द्रावली चैव प्रपञ्चा प्रलयान्तिका ॥ शिशुवक्त्रा पिशाची च पिशिताशा च लोलुपा ॥ ६ ॥ धमनी तापनी चैव रागिणी विकृतानना ॥ वायुवेगा बृहत्कुक्षिर्विकृता विश्वरूपिका ॥ ७ ॥ यमजिह्वा जयन्ती च दुर्जया च जयन्तिका ॥ बिडाली रेवती चैव पूतना विजयान्तिका ॥ ८ ॥ अष्टहस्ताश्चतुर्हस्ता इच्छास्त्राः सर्वसिद्धिदाः ॥ भैरवश्चार्कहस्तः स्यात्कूर्परास्यो जटेन्दुभृत् ॥ ९ ॥ खड्गाङ्कुशकुठारेषुविश्वाभयभृदेकतः ॥ चापत्रिशूलखट्वाङ्गपाशकार्द्धवरोद्यतः ॥ १० ॥ गजचर्मधरो द्वाभ्यां कृत्तिवासोऽहिभूषितः ॥ प्रेताशनो मातृमध्ये पूज्यः पञ्चाननोऽथवा ॥ ११ ॥ अविलोमाग्निपर्यन्तं दीर्घाष्टकैकभेदितम् ॥ तत्षडङ्गानि जात्यन्तैरन्वितं च क्रमाद्यजेत् ॥ १२ ॥ मन्दिराग्निदलारूढं, सुवर्णरसकान्वितम् ॥ नादबिन्द्विन्दुसंयुक्तं मातृनाथाङ्गदीपितम् ॥ १३ ॥ वीरभद्रो वृषारूढो मात्रग्रे स चतुर्मुखः ॥ गौरी तु द्विभुजा त्र्यक्षा शूलिनी दर्पणान्विता ॥ १४ ॥ शूलं गलन्तिका कुण्डी वरदा च चतुर्भुजा ॥ अब्जस्था ललिता स्कन्दगणादर्शशलाकया ॥ १५ ॥ चण्डिका दशहस्ता स्यात्खड्गशूलारिशक्तिधृक् ॥ दक्षे वामे नागपाशं चर्माङ्कुशकुठारकम् ॥ धनुः सिंहे च महिषः शूलेन प्रहतोग्रतः ॥ १६ ॥ इत्यादिमहापुराणे आग्नेये चतुः

षष्टियोगिन्यादिलक्षणं नाम द्विपञ्चाशत्तमोऽध्यायः ॥५२॥ अथ लिङ्गादिलक्षणम् ॥ श्रीभगवानुवाच ॥ लिङ्गादिलक्षणं वक्ष्ये कम-
लोद्भव तच्छृणु ॥ दैर्घ्यार्द्धं वसुभिर्भक्त्वा त्यक्त्वा भागत्रयं ततः ॥ १ ॥ विष्कम्भं भूतभागैस्तु चतुरस्रं तु कारयेत् ॥ आयामं मूर्तिभि-
र्भक्त्वा एकद्वित्रिक्रमान्न्यसेत् ॥२॥ ब्रह्मविष्णुशिवांशेषु वर्द्धमानोऽयमुच्यते॥ चतुरस्रेऽस्य कर्णार्द्धं गुह्यकोणेषु लाञ्छयेत् ॥३॥ अष्टाग्रं
वैष्णवं भागं सिध्यत्येव न संशयः ॥ षोडशास्रं ततः कुर्य्याद्द्वात्रिंशास्रं ततः पुनः ॥४॥ चतुःषष्ट्यस्रकं कृत्वा वर्तुलं साधयेत्ततः ॥
कर्त्तयेदथ लिङ्गस्य शिरो वै देशिकोत्तमः ॥५॥ विस्तारमथ लिङ्गस्य अष्टधा संविभाजयेत् ॥ भागार्द्धार्द्धं तु सन्त्यज्य छत्राकारं
शिरो भवेत्॥६॥ त्रिषु भागेषु सदृश आयामो यस्य विस्तरः ॥ तद्द्विभागसमं लिङ्गं सर्वकामफलप्रदम् ॥७॥ दैर्घ्यस्य तु चतुर्थेन
विष्कम्भं देवपूजिते ॥ सर्वेषामेव लिङ्गानां लक्षणं शृणु साम्प्रतम् ॥ ८ ॥ मध्यसूत्रं समासाद्य ब्रह्मरुद्रान्तिकं बुधः ॥ षोडशां-
गुललिङ्गस्य षड्भागैर्भाजितो यथा ॥९॥ तद्द्वेयमनसूत्राभ्यां मानमन्तरमुच्यते ॥ यवाष्टमुत्तरे कार्यं शेषाणां यवहानितः ॥१०॥
अर्चाभागं त्रिधा कृत्वा त्वर्द्धमेकं परित्यजेत् ॥ अष्टधा तद्द्वयं कृत्वा ऊर्ध्वभागत्रयं त्यजेत् ॥ ११ ॥ ऊर्ध्वं च पञ्चमाद्भागाद्भ्राम्य
रेखां प्रलम्बयेत् ॥ भागमेकं परित्यज्य सङ्गमं कारयेत्तयोः ॥ १२ ॥ एतत्साधारणं प्रोक्तं लिङ्गानां लक्षणं मया ॥ सर्वसाधारणं
वक्ष्ये पिण्डिकां तान्निबोध मे ॥ १३ ॥ ब्रह्मभागप्रवेशं च ज्ञात्वा लिङ्गस्य चोच्छ्रयम् ॥ न्यसेद्ब्रह्मशिलां विद्वान्सम्यक्कर्मशिलो-
परि ॥ १४ ॥ तथा समुच्छ्रयं ज्ञात्वा पिण्डिकां प्रविभाजयेत् ॥ द्विभागमुच्छ्रितं पीठं विस्तारे लिङ्गसम्मितम् ॥ १५ ॥ त्रिभागं
मध्यतः खातं कृत्वा पीठं विभाजयेत् ॥ स्वमानार्द्धत्रिभागेण बाहुल्यं परिकल्पयेत् ॥ १६ ॥ बाहुल्यस्य त्रिभागेण मेखलामथ
कल्पयेत् ॥ खातं स्यान्मेखलातुल्यं क्रमान्निम्नं तु कारयेत् ॥ १७ ॥ मेखलाषोडशांशेन खातं वा तत्प्रमाणतः ॥ उच्छ्रायं तस्य
पीठस्य विकाराङ्गं तु कारयेत् ॥ १८ ॥ भूमौ प्रविष्टमेकं तु भागेनैकेन पिण्डिका ॥ कण्ठं भागैस्त्रिभिः कार्यं भागेनैकेन पट्टिका
॥ १९ ॥ द्व्यंशेन चोर्ध्वपट्टं तु एकांशाः शेषपट्टिकाः ॥ भागं भागं प्रविष्टं तु यावत्कण्ठं ततः पुनः ॥ २० ॥ निर्गमं भागमेकं
तु यावद्वै शेषपट्टिका ॥ प्रणवस्य त्रिभागेण निर्गमस्तु त्रिभागतः ॥ २१ ॥ मूलेऽङ्गुल्यग्रविस्तारमग्रे त्र्यंशेन चार्द्धतः ॥ ईषन्निम्नं

तु कुर्वीत खातं तच्चोत्तरेण वै ॥ पिण्डिकासहितं लिङ्गमेतत्साधारणं स्मृतम् ॥ २२ ॥ इत्यादिमहापुराणे आग्नेये लिङ्गादिलक्षणं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥ अथ नानालिङ्गमानादिलक्षणम् ॥ श्रीभगवानुवाच ॥ वक्ष्याम्यन्यप्रकारेण लिङ्गमानादिकं शृणु ॥ वक्ष्ये लवणजं लिङ्गं घृतजं बुद्धिवर्द्धनम् ॥ १ ॥ भूतये वस्त्रलिङ्गं तु लिङ्गं तात्कालिकं विदुः ॥ पक्वापक्वं मृन्मयं स्यादपक्वात्पक्वजं वरम् ॥२॥ ततो दारुमयं मुख्यं दारुजाच्छैलजं वरम् ॥ शैलाद्वरं तु मुक्ताजं ततो लौहं सुवर्णजम् ॥ ३ ॥ राजतं कीर्त्तितं ताम्रं पैत्तलं भुक्तिमुक्तिदम् ॥ ४ ॥ रङ्गजं रसलिंगं च भुक्तिमुक्तिप्रदं वरम् ॥ रसजं रसलोहादिरत्नगर्भं तु वर्धयेत् ॥ मानादिवेष्टं सिद्धादिस्थापितेऽथ स्वयंभुवि ॥ ५ ॥ बाणे च स्वेच्छया तेषां पीठप्रासादकल्पना ॥ पूजयेत्सूर्यबिंबस्थं दर्पणे प्रतिबिंबितम् ॥ ६ ॥ पूज्यो हरस्तु सर्वत्र लिङ्गे पूर्णार्चनं भवेत् ॥ हस्तोत्तरोच्छ्रितं शैलं दारुजं तद्वदेव हि ॥ ७॥ चलमंगुलमानेन द्वारगर्भकरैः स्थितम् ॥ अंगुलाद्गृहलिङ्गं स्याद्यावत्पञ्चदशांगुलम् ॥ ८ ॥ द्वारमानात्त्रिसंख्याकं नवधा गर्भमानतः ॥ नवधा गर्भमानेन लिङ्गं धाम्नि च पूजयेत् ॥ ९ ॥ एवं लिङ्गानि षट्त्रिंशज्ज्ञेयानि ज्येष्ठमानतः ॥ मध्यमानेन षट्त्रिंशत्षट्त्रिंशदधमेन च ॥ १० ॥ इत्थमैक्येन लिङ्गानां शतमष्टोत्तरं भवेत् ॥ एकांगुलादिपञ्चान्तं कनिष्ठञ्चलमुच्यते ॥ ११ ॥ षडादिदशपर्यंतं चललिंगञ्च मध्यमम् ॥ एकादशाङ्गुलादि स्याज्ज्येष्ठं पञ्चदशान्तकम् ॥ १२ ॥ षडंगुलं महारत्नै रत्नैरन्यैर्नवांगुलम् ॥ रविभिर्हेमभारोत्थं लिङ्गं शेषैस्त्रिपञ्चभिः ॥ १३ ॥ षोडशांशे च वेदांशे युगं लुप्त्वोर्ध्वदेशतः ॥ द्वात्रिंशत्षोडशांशाश्च कोणयोस्तु विलोपयेत् ॥१४॥ चतुर्निवेशनात्कंठो विंशतिस्त्रियुगैस्तथा ॥ पार्श्वाभ्यां तु विलुप्ताभ्यां वनालिङ्गं भवेद्वरम् ॥१५॥ ग्रामो युगतुनागांशैर्द्वारमानोनितं क्रमात् ॥ लिङ्गे द्वारोच्छ्रयादर्वाग्भवेत्पादोनितं क्रमात् ॥ १६ ॥ गर्भार्द्धेनाधमं लिङ्गं भूतांशैः स्यात्त्रिभिर्वरम् ॥ तयोर्मध्ये च सूत्राणि सप्त सम्पादयेत्समम् ॥ १७॥ एवं स्युर्नव सूत्राणि भूतसूत्रैश्च मध्यमम् ॥ ह्यन्तरो वामभागश्च लिङ्गानां दीर्घता तव ॥ १८ ॥ हस्ताद्विवर्द्धते हस्तो यावत्स्युर्नव पाणयः ॥ हीनमध्योत्तमं लिङ्गं त्रिविधं त्रिवियात्मकं ॥ १९ ॥ एकैकलिङ्गमध्येषु त्रीणि त्रीणि च पादशः ॥ लिंगानि घटयेद्धीमान्षट्सु चाष्टोत्तरेषु च ॥ २० ॥ स्थिरदीर्घप्रमाणैस्तु द्वारगर्भकरात्मिका ॥ भागेशं

चाप्यमीशं च दैवेशं तुल्यसंज्ञितम् ॥ २१ ॥ चत्वारि लिंगरूपाणि विष्कम्भेण तु लक्षयेत् ॥ दीर्घमायान्वितं कृत्वा लिङ्गं कुर्य्यात्रिरूपकम् ॥ २२ ॥ चतुरष्टाष्टवृत्तं च तत्त्वत्रयगुणात्मकम् ॥ लिङ्गानामीप्सितं दैर्घ्यं तेन कृत्वांगुलानि वै ॥ २३ ॥ ध्वजाद्यायैः सुरैर्भूतैः शिखिभिर्वा हरेत्कृतिम् ॥ तान्यङ्गुलानि यच्छेषं लक्षयेच्च शुभाशुभम् ॥ २४ ॥ ध्वजाद्या ध्वजसिंहेभवृषाः श्रेष्ठाः परे शुभाः ॥ स्वरेषु षड्जगान्धारपञ्चमाः शुभदायकाः ॥ २५ ॥ भूतेषु च शुभा भूः स्यादग्निश्चाहवनीयकः ॥ उक्तायामस्य चाद्धांशे नागांशैर्भाजिते क्रमात् ॥ २६ ॥ रसभूतांशषष्ठांशत्र्यंशाधिकशरैर्भवेत् ॥ आढचानाढचसुरेज्यार्कतुल्यानां चतुरस्रता ॥ २७ ॥ पञ्चमं वर्द्धमानाख्यं व्यासानाहप्रवृद्धितः ॥ द्विधा भेदा बहून्यत्र वक्ष्यन्ते विश्वकर्मतः ॥ २८ ॥ आढचादीनां त्रिधा स्थौल्याद्यवधूतं तदष्टधा ॥ त्रिधा हस्ताज्जिनाख्यं च युक्तं सर्वसमेन च ॥ २९ ॥ पञ्चविंशति लिङ्गानि नाद्ये देवार्चिते तथा ॥ पञ्चसप्तभिरेकत्वाज्जिनैर्भक्तैर्भवन्ति हि ॥ ३० ॥ चतुर्दशसहस्राणि चतुर्दशशतानि च ॥ एवमष्टांगुलविस्तारो नवैककरगर्भतः ॥ ३१ ॥ तेषां कोणार्द्धकोणस्थैश्छिन्त्यात्कोणानि सूत्रकैः ॥ विस्तारं मध्यतः कृत्वा स्थाप्यं वा मध्यतस्त्रयम् ॥ ३२ ॥ विभागादूर्ध्वमष्टास्रो द्व्यष्टास्रः स्याच्छिवांशकः ॥ पादाज्जान्वन्तको ब्रह्मा नाभ्यन्तो विष्णुरित्यतः ॥ ३३ ॥ मूर्द्धान्तो भूतभागेशो व्यक्तेऽव्यक्ते च तद्भति ॥ पञ्चलिङ्गव्यवस्थायां शिरो वर्तुलमुच्यते ॥ ३४ ॥ छत्राभं कुक्कुटाभं वा बालेन्दुप्रतिमाकृतिः ॥ एकैकस्य चतुर्भेदैः काम्यभेदात्फलं वदे ॥ ३५ ॥ लिङ्गमस्तकविस्तारं वसुभक्तं तु कारयेत् ॥ आद्यभागं चतुर्द्धा तु विस्तारोच्छ्रायतो भजेत् ॥ ३६ ॥ चत्वारि तत्र सूत्राणि भागभागानुपातनात् ॥ पुण्डरीकं तु भागेन विशालाख्यं विलोकनात् ॥ ३७ ॥ त्रिशातनात्तु श्रीवत्सं शत्रुकृद्वेदलोपनात् ॥ शिरः सर्वसमे श्रेष्ठं कुक्कुटाभं सुराह्वये ॥ ३८ ॥ चतुर्भागात्मके लिङ्गे त्रपुषं द्वयलोपनात् ॥ अनाद्यस्य शिरः प्रोक्तमर्द्धचन्द्रं शिरः शृणु ॥ ३९ ॥ अंशात्प्रान्ते युगांशैश्च द्व्येकहान्याऽमृताक्षकम् ॥ पूर्णबालेन्दुकुमुदं द्वित्रिवेदक्षयात्क्रमात् ॥ ४० ॥ चतुस्त्रिरेखं वदनं मुखलिङ्गमतः शृणु ॥ पूजाभागः प्रकर्तव्यो मूर्त्यग्निपदकल्पितः ॥ ४१ ॥ अर्कांशं पूर्ववत्त्यक्त्वा षट् स्थानानि विवर्त्तयेत् ॥ शिरोन्नतिः प्रकर्त्तव्या ललाट





नासिका ततः ॥ ४२ ॥ वदनं चिबुकं ग्रीवा युगभागैर्भुजाक्षिभिः ॥ कराभ्यां मुकुलीकृत्य प्रतिमायाः प्रमाणतः ॥ ४३ ॥
मुखं प्रति समः कार्यो विस्तारादष्टमांशतः ॥ चतुर्मुखं मया प्रोक्तं त्रिमुखं चोच्यते शृणु ॥ ४४ ॥ कर्णपादाधिकान्यस्य ललाटादीनि निर्दिशेत् ॥ भुजौ चतुर्भिर्भागैस्तु कर्त्तव्यौ पश्चिमोर्जितौ ॥ ४५ ॥ विस्तारादष्टमांशेन मुखानां प्रति निर्गमः ॥ एकवक्त्रं तथा कार्यं पूर्वस्यां सौम्यलोचनम् ॥ ४६ ॥ ललाटनासिकावक्त्रग्रीवायां च विवर्त्तयेत् ॥ भुजाश्च पञ्चमांशेन भुजहीनं विवर्त्तयेत् ॥ ४७ ॥ विस्तारस्य षडंशेन मुखैर्निर्गमनं हितम् ॥ सर्वेषां मुखलिङ्गानां त्रपुषं वाथ कुकुटम् ॥ ४८ ॥ इत्यादिमहापुराणे आग्नेये लिङ्गमानादिव्यक्ताव्यक्तादिलक्षणं नाम चतुःपञ्चाशत्तमोऽध्यायः ॥५४॥ अथ पिण्डिकालक्षणम् ॥ श्रीभगवानुवाच ॥ अतः परं प्रवक्ष्यामि प्रतिमानां तु पिण्डिकाम् ॥ दैर्घ्येण प्रतिमातुल्या तदर्धेन तु विस्तृता ॥ १ ॥ उच्छ्रितायामतोऽर्द्धेन सुविस्तारार्द्धभागतः ॥ तृतीयेन तु वा तुल्यां तत्रिभागेण मेखलाम् ॥ २ ॥ खातं च तत्प्रमाणं तु किञ्चिदुत्तरतो नतम् ॥ विस्तारस्य चतुर्थेन प्रणालस्य विनिर्गमम् ॥ ३ ॥ [ मम मूलस्य विस्तारमग्रे कुर्यात्तदर्द्धतः ॥ विस्तारस्य तृतीयेन तोयमार्गं तु कारयेत् ॥ ४ ॥ ] पिण्डिकार्द्धेन वा तुल्यं दैर्घ्यमीशस्य कीर्तितम् ॥ ऐशं वा तुल्यदीर्घं च ज्ञात्वा सूत्रं प्रकल्पयेत् ॥ ५ ॥ उच्छ्रायं पूर्ववत्कुर्याद्भागषोडशसंख्यया ॥ अधः षट्कं द्विभागं तु कण्ठे कुर्यात्रिभागकम् ॥ ६ ॥ शेषास्त्वेकैकशः कार्याः प्रतिष्ठानिर्गमास्तथा ॥ पट्टिका पिण्डिका चेयं सामान्यप्रतिमासु च ॥ ७ ॥ प्रासादद्वारमानेन प्रतिमाद्वारमुच्यते ॥ गजव्यालकसंयुक्ता प्रभा स्यात्प्रतिमासु च ॥ ८ ॥ पिण्डिकापि यथाशोभं कर्त्तव्या सततं हरेः ॥ सर्वेषामेव देवानां विष्णूक्तं मानमुच्यते ॥ देवीनामपि सर्वासां लक्ष्म्युक्तं मानमुच्यते ॥ ९ ॥ इत्यादिमहापुराणे आग्नेये पिण्डिकादिलक्षणं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ अथ दिक्पालयागकथनम् ॥ श्रीभगवानुवाच ॥ प्रतिष्ठापञ्चकं वक्ष्ये प्रतिमात्मा तु पूरुषः ॥ प्रकृतिः पिण्डिका लक्ष्मीः प्रतिष्ठा योगकस्तयोः ॥ १ ॥ इच्छाफलार्थिभिस्तस्मात्प्रतिष्ठा क्रियते नरैः ॥ गर्भसूत्रं तु निःसार्य्य प्रासादस्याग्रतो गुरुः ॥ २ ॥ अष्टषोडशविंशान्तं मण्डपं चाधमादिकम् ॥ स्नानार्थं कलशार्थं च यागद्रव्यार्थमर्द्धतः ॥ ३ ॥ त्रिभागेणार्द्धभागेन वेदिं कुर्याच्च

शोभनाम् ॥ कलशैर्वेदिकाभिश्च वितानाद्यैश्च भूषयेत् ॥ ४ ॥ पञ्चगव्येन सम्प्रोक्ष्य सर्वद्रव्याणि धारयेत् ॥ अलङ्कृतो गुरुर्विष्णुं ध्यात्वात्मानं प्रपूजयेत् ॥ ५ ॥ अङ्गुलीयप्रभृतिभिर्मूर्तिपान्वलयादिभिः ॥ कुण्डे कुण्डे स्थापयेच्च मूर्त्तिपांस्तन्त्रपारगान् ॥ ६ ॥ चतुष्कोणे चार्धकोणे वर्तुले पद्मसन्निभे ॥ पूर्वादौ तोरणार्थं तु पिप्पलोदुम्बरौ वटः ॥ ७ ॥ प्लक्षः सुशोभनं पूर्वं सुभद्रं दक्षतोरणम् ॥ सुकर्माणं सुहोत्रं च आप्ये सौम्ये समुच्छ्रयम् ॥ ८ ॥ पञ्चहस्तं तु संस्थाप्य स्योनापृथिवीति पूजयेत् ॥ तोरणस्तम्भमूले तु कलशान्मंगलाङ्कुरान् ॥ ९ ॥ प्रदद्यादुपरिष्टाच्च कुर्य्याच्चक्रं सुदर्शनम् ॥ पञ्चहस्तप्रमाणं तु ध्वजं कुर्य्याद्विचक्षणः ॥ १० ॥ वैपुल्यं चास्य कुर्वीत षोडशाङ्गुलसम्मितम् ॥ सप्तहस्तोच्छ्रितं चास्य कुर्य्याद्दण्डं सुरोत्तम ॥ ११ ॥ अरुणोऽग्निनिभश्चैव कृष्णः शुक्लोऽथ पीतकः ॥ रक्तवर्णस्तथा श्वेतश्चैवं वर्णादिकं क्रमात् ॥ १२ ॥ कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ॥ शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ॥ १३ ॥ पूज्याः कोटिगुणैर्युक्ताः पूर्वाद्या ध्वजदेवताः ॥ जलाढकसुपूरास्तु पक्वबिम्बोपमा घटाः ॥ १४ ॥ अष्टाविंशाधिकशतं कालमण्डनवर्जिताः ॥ सहिरण्या वस्त्रकण्ठाः सोदकास्तोरणाद्बहिः ॥ १५ ॥ घटाः स्थाप्याश्च पूर्वादौ वेदिकायाश्च कोणगाः ॥ चतुरः स्थापयेत्कुम्भानाजिघ्रेति च मन्त्रतः ॥ १६ ॥ कुम्भेष्वावाह्य शक्रादीन्पूर्वादौ पूजयेत्क्रमात् ॥ इन्द्रागच्छ देवराज वज्रहस्त गजस्थित ॥ १७ ॥ पूर्वद्वारं च मे रक्ष देवैः सह नमोऽस्तु ते ॥ त्रातारमिन्द्रमन्त्रेण अर्चयित्वा यजेद्बुधः ॥ १८ ॥ आगच्छाग्ने शक्तियुत छागस्थ बलसंयुत ॥ रक्षाग्नेयीं दिशं देवैः पूजां गृह्ण नमोऽस्तु ते ॥ १९ ॥ अग्निर्मूर्धेतिमन्त्रेण यजेद्वा अग्नये नमः ॥ महिषस्थ यमागच्छ दण्डहस्त महाबल ॥ २० ॥ रक्ष त्वं दक्षिणद्वारं वैवस्वत नमोऽस्तु ते ॥ वैवस्वतं सङ्गमनमित्यनेन यजेद्यमम् ॥ २१ ॥ नैर्ऋतागच्छ खड्गाढ्य बलवाहनसंयुत ॥ इदमर्घ्यमिदं पाद्यं रक्ष त्वं नैर्ऋतीं दिशम् ॥ २२ ॥ एष ते नैर्ऋतमन्त्रेण यजेदर्घ्यादिभिर्नरः ॥ मकरारूढ वरुण पाशहस्त महाबल ॥ २३ ॥ आगच्छ पश्चिमद्वारं रक्ष रक्ष नमोऽस्तु ते ॥ उरुं हि राजा वरुणं यजेदर्घ्यादिभिर्गुरुः ॥ २४ ॥ आगच्छ वायो सबल ध्वजहस्त सवाहन ॥ वायव्यं रक्ष देवैस्त्वं समरुद्भिर्नमोऽस्तु ते ॥ २५ ॥ वात इत्यादिभिश्चार्चेदोन्नमो वायवेऽपि वा ॥ आगच्छ सोम सबल गदाहस्त





सवाहन ॥ २६ ॥ रक्ष त्वमुत्तरद्वारं सकुबेर नमोस्तु ते ॥ सोमं राजानमिति वा यजेत्सोमाय वै नमः ॥ २७ ॥ आगच्छेशान
सबल शूलहस्त वृषस्थित ॥ यज्ञमण्डपस्यैशानीं दिशं रक्ष नमोऽस्तु ते ॥ २८ ॥ ईशानमस्येति यजेदीशानाय नमोपि वा ॥
ब्रह्मन्नागच्छ हंसस्थ स्रुक्स्रुवव्यग्रहस्तक ॥२९॥ सलोकोर्ध्वां दिशं रक्ष यज्ञस्याज नमोऽस्तु ते ॥ हिरण्यगर्भेति यजेद्ब्रह्मस्ते ब्रह्मणेऽपि
वा ॥ ३० ॥ अनन्तागच्छ चक्राढ्य कूर्मस्थाहिगणेश्वर ॥ अधोदिशं रक्ष रक्ष अनन्तेश नमोऽस्तु ते ॥ नमोऽस्तु सर्पेति यजेदन-
न्ताय नमोऽपि वा ॥ ३१ ॥ इत्यादिमहापुराणे आग्नेये दशदिक्पतियागो नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥ अथ कुम्भा-
धिवासविधिः ॥ श्रीभगवानुवाच ॥ भूमेः परिग्रहं कुर्यात्क्षिपेद्व्रीहींश्च सर्षपान् ॥ नारसिंहेन रक्षोघ्नान्प्रोक्षयेत्पञ्चगव्यतः ॥ १ ॥
भूमिं घटे तु सम्पूज्य सरत्ने साङ्गकं हरिम् ॥ अस्त्रमन्त्रेण करकं तत्र चाष्टशतं यजेत् ॥ २ ॥ अच्छिन्नधारया सिञ्चन्व्रीहीन्संस्कृत्य
धारयेत् ॥ प्रदक्षिणं परिभ्राम्य कलशं विकिरोपरि ॥ ३ ॥ सवस्त्रे कलशे भूयः पूजयेदच्युतं श्रियम् ॥ योगे योगेतिमन्त्रेण
न्यसेच्छय्यां तु मण्डले ॥ ४ ॥ कुशोपरि तूलिका च शय्यायां दिग्विदिक्षु च ॥ विद्याधिपान्यजेद्विष्णुं मधुवातं
त्रिविक्रमम् ॥ ५ ॥ वामनं दिक्षु वाय्वादौ श्रीधरं च हृषीकपम् ॥ पद्मनाभं दामोदरमैशान्यां स्नानमण्डपे ॥ ६ ॥
अभ्यर्च्य पश्चादैशान्यां चतुष्कुम्भे सवेदिके ॥ स्नानमण्डपके सर्व्वद्रव्याण्यानीय निक्षिपेत् ॥ ७ ॥ स्नानकुम्भेषु कुंभांस्तांश्चतु-
र्दिक्ष्वधिवासयेत् ॥ कलशाः स्थापनीयास्तु अभिषेकार्थमादरात् ॥ ८ ॥ वटोदुंबरकाश्वत्थांश्चम्पकाशोकश्रीद्रुमान् ॥
पलाशार्जुनप्लक्षांस्तु कदंबबकुलाम्रकान् ॥ ९ ॥ पल्लवांस्तु समानीय पूर्वकुंभे विनिक्षिपेत् ॥ पद्मकं रोचनां दूर्वां दर्भपिञ्जूलमेव
च ॥ १० ॥ जातीपुष्पं कुन्दपुष्पं चन्दनं रक्तचन्दनम् ॥ सिद्धार्थं तगरं चैव तण्डुलं दक्षिणे न्यसेत् ॥ ११ ॥ सुवर्णं रजतं चैव
कूलद्वयमृदं तथा ॥ नद्याः समुद्रगामिन्या विशेषाज्जाह्नवीमृदम् ॥ १२ ॥ गोमयं च यवाञ्शालींस्तिलांश्चैवापरे न्यसेत् ॥ विष्णु-
पर्णीं श्यामलतां भृङ्गराजं शतावरीम् ॥ १३ ॥ सहदेवीं वचां सैंहीं बलां व्याघ्रीं सलक्षणाम् ॥ ऐशान्यामपरे कुम्भे मङ्गलान्वि-
निवेशयेत ॥ १४ ॥ वल्मीकमृत्तिकां सप्तस्थानोत्थामपरे न्यसेत् ॥ जाह्नवीबालुकां तोयं विन्यसेदपरे घटे ॥ १५ ॥ वराहवृष-

नागेन्द्रविषाणोद्धृतमृत्तिकाम् ॥ मृत्तिकां पद्ममूलस्य कुशस्य त्वपरे न्यसेत् ॥ १६ ॥ तीर्थपर्वतमृद्भिश्च युक्तमप्यपरे न्यसेत् ॥ नागकेसरपुष्पं च काश्मीरमपरे न्यसेत् ॥ १७ ॥ चन्दनागुरुकर्पूरैः पुष्पं चैवापरे न्यसेत् ॥ वैदूर्यं विद्रुमं मुक्तां स्फटिकं वज्रमेव च ॥ १८ ॥ एतान्येकत्र निक्षिप्य स्थापयेद्देवसत्तमम् ॥ नदीनदतडागानां सलिलैरपरे न्यसेत् ॥ १९ ॥ एकाशीतिपदे चान्यान्मण्डपे कलशान्न्यसेत् ॥ गन्धोदकाद्यैः संपूर्णाञ्छ्रीसूक्तेनाभिमन्त्रयेत् ॥ २० ॥ यवान्सिद्धार्थकं गन्धं कुशाग्रं चाक्षतांस्तथा ॥ तिलान्फलं तथा पुष्पमर्घ्यार्थं पूर्वतो न्यसेत् ॥ २१ ॥ पद्मं श्यामलतां दूर्वां विष्णुपर्णीं कुशांस्तथा ॥ पाद्यार्थं दक्षिणे भागे मधुपर्कं तु पश्चिमे ॥ २२ ॥ कक्कोलकं लवङ्गं च तथा जातीफलं शुभम् ॥ उत्तरे ह्याचमनीयमग्नौ दूर्वाक्षतान्वितम् ॥ २३ ॥ पात्रं नीराजनार्थं च तथोद्वर्त्तनमानिले ॥ गन्धपुष्पान्वितं पात्रमैशान्यां पात्रके न्यसेत् ॥ २४ ॥ मुरामांसीं चामलकं सहदेवीं निशादिकम् ॥ पुष्टिदीपान्न्यसेदष्टौ न्यसेन्नीराजनाय च ॥ २५ ॥ शंखं चक्रं च श्रीवत्सं कुलिशं पङ्कजादिकम् ॥ हेमादिपात्रे कृत्वा तु नानावर्णादिपुष्पकम् ॥ २६ ॥ इत्यादिमहापुराणे आग्नेये कुम्भाधिवासो नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

अथ स्नपनादिविधिः ॥ श्रीभगवानुवाच ॥ ऐशान्यां जनयेत्कुण्डं गुरुर्वाह्निं च वैष्णवम् ॥ गायत्र्याष्टशतं हुत्वा सम्पातविधिना घटान् ॥ १ ॥ प्रोक्षयेत्कारुशालायां शिल्पिभिर्मूर्त्तिपैर्व्रजेत् ॥ तूर्य्यशब्दैः कौतुकं च बन्धयेद्दक्षिणे करे ॥ २ ॥ विष्णवे शिपिविष्टेति ऊर्णासूत्रेण सर्षपैः ॥ पट्टवस्त्रेण कर्तव्यं देशिकस्यापि कौतुकम् ॥ ३ ॥ मण्डपे प्रतिमां स्थाप्य सवस्त्रां पूजितां स्तुवन् ॥ नमस्तेऽर्च्ये सुरेशानि प्रणीते विश्वकर्मणा ॥ ४ ॥ प्रभाविताशेषजगद्धात्रि तुभ्यं नमो नमः ॥ त्वयि सम्पूजयामीशे नारायणमनामयम् ॥ ५ ॥ रहिता शिल्पिदोषैस्त्वमृद्धियुक्ता सदा भव ॥ एवं विज्ञाप्य प्रतिमां नयेत्तां स्नानमण्डपम् ॥ ६ ॥ शिल्पिनं तोषयेद्द्रव्यैर्गुरवे गां प्रदापयेत् ॥ चित्रं देवेतिमन्त्रेण नेत्रे चोन्मीलयेत्ततः ॥ ७ ॥ अग्निज्योंतीति दृष्टिं च दद्याद्वै भद्रपीठके ॥ ततः शुक्लानि पुष्पाणि घृतं सिद्धार्थकं तथा ॥ ८ ॥ दूर्वां कुशाग्रं देवस्य दद्याच्छिरसि देशिकः ॥ मधुवातेति मन्त्रेण नेत्रे चाभ्यञ्जयेद्गुरुः ॥ ९ ॥ हिरण्यगर्भमन्त्रेण इमं मेति च कीर्त्तयेत् ॥ घृतेनाभ्यञ्जयेत्पश्चात्पठन्घृतवतीं पुनः ॥ १० ॥ मसूरपिष्टेनोद्वर्त्य अतो





देवेति कीर्तयेत् ॥ क्षालयेदुष्णतोयेन सप्त तेऽग्नेति देशिकः ॥ ११ ॥ द्रुपदादिवेत्यनुलिम्पेदापो हिष्ठेति सेचयेत् ॥ नदीजैस्ती-
र्थजैः स्नानं पावमानीति रत्नजैः ॥ १२ ॥ समुद्रं गच्छ गच्छेति तीर्थमृत्कलशेन च ॥ शन्नो देवीः स्नापयेच्च गायत्र्याप्युष्णवारिणा
॥ १३ ॥ पञ्चमृद्भिर्हिरण्येति स्नापयेत्परमेश्वरम् ॥ सिकताद्भिरिमं मेति वल्मीकोत्थघटेन च ॥ १४ ॥ तद्विष्णोरिति ओषध्य-
द्भिर्या ओषधिमन्त्रतः ॥ यज्ञायज्ञेति काषायैः पञ्चभिर्गव्यकैस्ततः ॥ १५ ॥ पयः पृथिव्यां मन्त्रेण याः फलीति फलाम्बुभिः ॥
विश्वतश्चक्षुः सौम्येन पूर्वेण कलशेन च ॥ १६ ॥ सोमं राजानमित्येवं विष्णो रराटं दक्षतः ॥ हँसः शुचिः पश्चिमेन कुर्य्यादुद्वर्त्तनं
हरेः ॥ १७ ॥ मूर्द्धानमितिमन्त्रेण धात्रीमांस्युदकेन च ॥ मानस्तोकेति मन्त्रेण गन्धद्वारेति गन्धकैः ॥ १८ ॥ इदमापेति च घटै-
रेकाशीतिपदास्थितैः ॥ एह्येहि भगवन्विष्णो लोकानुग्रहकारक ॥ १९ ॥ यज्ञभागं गृहाणेमं वासुदेव नमोऽस्तु ते ॥ अनेनावाह्य
देवेशं कुर्यात्कौतुकमोचनम् ॥ २० ॥ मुञ्चामि त्वेतिमूक्तेन देशिकस्यापि मोचयेत् ॥ हिरण्मयेन पाद्यं दद्यादतो देवेति चार्घ्य-
कम् ॥ २१ ॥ मधुवाता मधुपर्कं मयि गृह्णामि चाचमेत् ॥ अक्षन्नमीमदन्तेति किरेद्दूर्वाक्षतं बुधः ॥ २२ ॥ काण्डान्निर्मन्थनं कुर्या-
द्गन्धं गन्धवतीति च ॥ उन्नयामीति माल्यं च इदं विष्णुः पवित्रकम् ॥ २३ ॥ बृहस्पते वस्त्रयुग्मं वेदाहमित्युत्तरीयकम् ॥ महा-
व्रतेन सकलान्पुष्पं चौषधयः क्षिपेत् ॥ २४ ॥ धूपं दद्याद्धूरसीति विभ्राड्मूक्तेन चाञ्जनम् ॥ युञ्जन्तीति च तिलकं दीर्घायुष्ट्वेति
माल्यकम् ॥ २५ ॥ इन्द्रच्छत्रेति छत्रं तु आदर्शं तु विराजतः ॥ चामरं तु विकर्णेन भूषां रथन्तरेण च ॥ २६ ॥ व्यजनं वायुदैव-
त्यैर्मुञ्चामित्वेति पुष्पकम् ॥ वेदाद्यैः संस्तुतिं कुर्य्याद्धरेः पुरुषमूक्ततः ॥ २७ ॥ सर्वमेतत्समं कुर्यात्पिण्डिकादौ हरादिके ॥ देव-
स्योत्थानसमये सौपर्णं मूक्तमुच्चरेत् ॥ २८ ॥ उत्तिष्ठेति समुत्थाप्य शय्याया मण्डपे नयेत् ॥ शाकुनेनैव मूक्तेन देवं ब्रह्मरथादिना
॥ २९ ॥ अतो देवेति मूक्तेन प्रतिमां पिण्डिकां तथा ॥ श्रीमूक्तेन च शय्यायां विष्णोस्तु सकलीकृतिः ॥ ३० ॥ मृगराजं वृषं नागं ॥ ३१ ॥
व्यजनं कलशं तथा ॥ वैजयन्तीं तथा भेरीं दीपमित्यष्टमङ्गलम् ॥ ३१ ॥ दर्शयेदश्वसूक्तेन पाददेशे त्रिपादिति ॥ उखां पिधानकं
पात्रमम्बिकां दर्विकां ददेत् ॥ ३२ ॥ मुसलोलूखलं दद्याच्छिलां सम्मार्जनीं तथा ॥ तथा भोजनभाण्डानि गृहोपकरणानि च ॥ ३३ ॥

शिरोदेशे च निद्राख्यं वस्त्ररत्नयुतं घटम् ॥ खण्डखाद्यैः पूरयित्वा स्नपनस्य विधिः स्मृतः ॥ ३४॥ इत्यादिमहापुराणे आग्नेये स्नपनादिविधानं नामाष्टपञ्चाशत्तमोऽध्यायः॥५८॥ अथाधिवासनकथनम् ॥ श्रीभगवानुवाच॥ हरेः सान्निध्यकरणमधिवासनमुच्यते ॥ सर्वज्ञं सर्वगं ध्यात्वा आत्मानं पुरुषोत्तमम् ॥ १॥ ओंकारेण समायोज्य चिच्छक्तिमाभिमानिनीम्॥ निःसार्य्यात्मैकतां कृत्वा स्वस्मिन्सर्वगते विभौ॥२॥ योजयेन्मरुता पृथ्वीं वह्निबीजेन दीपयेत ॥ संहरेद्वायुना चाग्निं वायुमाकाशतो नयेत् ॥३॥ अधिभूताधिदैवैस्तु साध्याख्यैर्विभवैः सह ॥ तन्मात्रपातकान्कृत्वा संहरेत्तत्क्रमाद्बुधः ॥ ४ ॥ आकाशं मनसाहृत्य मनोऽहङ्करणे कुरु ॥ अहङ्कारं च महति तं चाप्यव्याकृते नयेत् ॥ ५ ॥ अव्याकृतं ज्ञानरूपे वासुदेवः स ईरितः ॥ स तामव्याकृतां मायामवष्टभ्य सिसृक्षया ॥ ६ ॥ सङ्कर्षणं स शब्दात्मा स्पर्शाख्यमसृजत्प्रभुः॥ क्षोभ्य मायां स प्रद्युम्नं तेजोरूपं स चासृजत् ॥७॥ अनिरुद्ध रसमात्रं ब्रह्माणं गन्धरूपकम् ॥ अनिरुद्धः स च ब्रह्मा अप आदौससर्ज ह ॥८॥ तस्मिन्हिरण्मयं चाण्डं सोऽसृजत्पञ्चभूतवत् ॥ तस्मिन्संक्रामिते जीवे शक्तिरात्मोपसंहृता ॥९॥ प्राणो जीवेन संयुक्तो वृत्तिमानिति शब्द्यते ॥ जीवो व्याहृतिसञ्ज्ञस्तु प्राणेष्वाध्यात्मिकः स्मृतः॥ १०॥ प्राणैर्युक्ता ततो बुद्धिः सञ्जाता चाष्टमूर्तिका ॥ अहङ्कारस्ततो जज्ञे मनस्तस्मादजायत ॥११॥ अर्थाः प्रजज्ञिरे पञ्च संकल्पादियुतास्ततः ॥ शब्दः स्पर्शश्च रूपं च रसो गन्ध इति स्मृताः ॥ १२ ॥ ज्ञानशक्तियुतान्येतैरारब्धानीन्द्रियाणि तु ॥ त्वक्छ्रोत्रघ्राणचक्षूंषि जिह्वाबुद्धीन्द्रियाणि तु ॥१३॥ पादौ पायुस्तथा पाणी वागुपस्थश्च पञ्चमः ॥ कर्मेन्द्रियाणि चैतानि पञ्चभूतान्यतः शृणु ॥ १४॥ आकाशवायुतेजांसि सलिलं पृथिवी तथा ॥ स्थूलमेभिः शरीरं तु सर्वाधारं प्रजायते ॥१५॥ एतेषां वाचका मन्त्रा न्यासायोच्यन्त उत्तमाः ॥ जीवभूतं मकारं तु देवस्य व्यापकं न्यसेत् ॥ १६ ॥ प्राणतत्त्वं भकारं तु जीवोपाधिगतं न्यसेत् ॥ हृदयस्थं बकारं तु बुद्धितत्त्वं न्यसेद्बुधः ॥ १७ ॥ फकारमपि तत्रैव अहङ्कारमयं न्यसेत् ॥ मनस्तत्त्वं पकारं तु न्यसेत्सङ्कल्पसम्भवम् ॥१८॥ शब्दतन्मात्रतत्त्वं तु नकारं मस्तके न्यसेत् ॥ स्पर्शात्मकं धकारं तु वक्त्रदेशे तु विन्यसेत् ॥ १९ ॥ दकारं रूपतत्त्वं तु हृद्देशे विनिवेशयेत् ॥ थकारं वस्तिदेशे तु रसतन्मात्रकं न्यसेत् ॥ २० ॥ तकारं गन्धतन्मात्रं जङ्घयोर्विनिवेशयेत् ॥ णकारं श्रोत्रयोर्न्यस्य ढकारं विन्यसे-





त्वचि ॥ २१ ॥ डकारं नेत्रयुग्मे तु रसनायां ठकारकम् ॥ टकारं नासिकायां तु ञकारं वाचि विन्यसेत् ॥ २२ ॥ झकारं करयोर्न्यस्य पाणितत्त्वं विचक्षणः ॥ जकारं पादयोर्न्यस्य छं पायौ चमुपस्थके ॥ २३ ॥ विन्यसेत्पृथिवीतत्त्वं ङकारं पादयुग्मके ॥ वस्तौ घकारं गंतत्त्वं तैजसं हृदि विन्यसेत् ॥ २४ ॥ खकारं वायुतत्त्वं च नासिकायां निवेशयेत् ॥ ककारं विन्यसेन्नित्यं खतत्त्वं मस्तके बुधः ॥ २५ ॥ हृत्पुण्डरीके विन्यस्य यकारं सूर्य्यदैवतम् ॥ द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः ॥ २६ ॥ कलाषोडशसंयुक्तं सकारं तत्र विन्यसेत् ॥ तन्मध्ये चिन्तयेन्मन्त्री बिन्दुवह्नेस्तु मण्डलम् ॥२७॥ हकारं विन्यसेत्तत्र प्रणवेन सुरोत्तम ॥ ओं आं परमेष्ठ्यात्मने आं नमः पुरुषात्मने ॥ २८ ॥ ओं वां नमो निवृत्त्यात्मने नां च विश्वात्मने नमः ॥ ओं वं नमः सर्वात्मने इत्युक्ताः पञ्च शक्तयः ॥ २९ ॥ स्थाने तु प्रथमा योज्या द्वितीया आसने मता ॥ तृतीया शयने तद्वच्चतुर्थी यानकर्म्मणि ॥३०॥ प्रत्यर्चायां पञ्चमी स्यात्पञ्चोपनिषदः स्मृताः ॥ हुंकारं विन्यसेन्मध्ये ध्यात्वा मन्त्रमयं हरिम् ॥ ३१ ॥ यां मूर्त्तिं स्थापयेत्तस्या मूलमन्त्रं न्यसेत्ततः ॥ ओं नमो भगवते वासुदेवाय मूलकम् ॥ ३२ ॥ शिरोघ्राणललाटेषु सुखे कण्ठे हृदि क्रमात् ॥ भुजयोर्जङ्घयोरङ्घ्र्योः केशवं शिरसि न्यसेत् ॥ ३३ ॥ नारायणं न्यसेद्वक्त्रे ग्रीवायां माधवं न्यसेत् ॥ गोविन्दं भुजयोर्न्यस्य विष्णुं च हृदये न्यसेत् ॥ ३४ ॥ मधुसूदनकं पृष्ठे वामनं जठरे न्यसेत् ॥ कट्यां त्रिविक्रमं न्यस्य जङ्घायां श्रीधरं न्यसेत् ॥ ३५ ॥ हृषीकेशं दक्षिणायां पद्मनाभं तु गुल्फके ॥ दामोदरं पादयोश्च हृदयादि षडङ्गकम् ॥ ३६ ॥ एतत्साधारणं प्रोक्तमादिमूर्त्तेस्तु सत्तम ॥ अथवा यस्य देवस्य प्रारब्धं स्थापनं भवेत् ॥ ३७ ॥ तस्यैव मूलमन्त्रेण सजीवकरणं भवेत् ॥ यस्या मूर्त्तेस्तु यन्नाम तस्याद्यं चाक्षरं च यत् ॥ ३८ ॥ तत्स्वरैर्द्वादशैर्भेद्य ह्यङ्गानि परिकल्पयेत् ॥ हृदयादीनि देवेश मूलं च दशमाक्षरम् ॥ ३९ ॥ यथा देवे तथा देहे तत्त्वानि विनियोजयेत् ॥ चक्राब्जमण्डले विष्णुं यजेद्गन्धादिना तथा ॥ ४० ॥ पूर्ववच्चासनं ध्यायेत्सगात्रं सपरिच्छदम् ॥ ॥ ४० ॥
शुभं चक्रं द्वादशारं ह्युपरिष्टाद्विचिन्तयेत् ॥ ४१ ॥ त्रिनाभि चक्रं द्विनेमि स्वरैस्तच्च समन्वितम् ॥ पृष्ठदेशे ततः प्राज्ञः प्रकृत्यादीन्निवेशयेत् ॥ ४२ ॥ पूजयेदारकाग्रेषु सूर्यं द्वादशधा पुनः ॥ कलाषोडशसंयुक्तं सोमं तत्र विचिन्तयेत् ॥ ४३ ॥ सबलं त्रितये

नाभौ चिन्तयेद्देशिकोत्तमः ॥ पद्मं च द्वादशदलं पद्ममध्ये विचिन्तयेत्॥४४॥ तन्मध्ये पौरुषीं शक्तिं ध्यात्वाभ्यर्च्य च देशिकः॥ प्रतिमायां हरिं न्यस्य तत्र तं पूजयेत्सुरान् ॥ ४५ ॥ गन्धपुष्पादिभिः सम्यक् साङ्गं सावरणं क्रमात् ॥ द्वादशाक्षरबीजैस्तु केशवादीन्समर्च्चयेत् ॥ ४६ ॥ द्वादशारे मण्डले तु लोकपालादिकं क्रमात् ॥ प्रतिमामर्च्चयेत्पश्चाद्गन्धपुष्पादिभिर्द्विजः ॥ ४७ ॥ पौरुषेण तु सूक्तेन श्रियाः सूक्तेन पिण्डिकाम् ॥ जननादिक्रमात्पश्चाज्जनयेद्वैष्णवानलम् ॥ ४८ ॥ हुत्वाग्निं वैष्णवैर्मन्त्रैः कुर्य्याच्छान्त्युदकं बुधः ॥ तत्सिक्त्वा प्रतिमामूर्ध्नि वह्निप्रणयनं चरेत् ॥ ४९ ॥ दक्षिणेऽग्निं हुतमिति कुण्डेऽग्निं प्रणयेद्बुधः ॥ अग्निमग्नीति पूर्वे तु कुण्डेऽग्निं प्रणयेद्बुधः ॥ ५० ॥ उत्तरे प्रणयेदग्निमग्निमग्नी हवामहे ॥ अग्निप्रणयने मन्त्रस्त्वमग्ने ह्यग्रिरुच्यते ॥ ५१ ॥ पलाशसमिधां तत्र अष्टोत्तरसहस्रकम् ॥ कुण्डे कुण्डे होमयेच्च व्रीहीन्वेदादिकैस्तथा ॥ ५२ ॥ प्राज्यांस्तिलान्व्याहृतिभिर्मूलमन्त्रेण वै घृतम् ॥ कुर्य्यात्ततः शान्तिहोमं मधुरत्रितयेन च ॥ ५३ ॥ द्वादशार्णैः स्पृशेत्पादौ नाभिं हृन्मस्तकं ततः ॥ घृतं दधि पयो हुत्वा स्पृशेन्मूर्द्धन्यथो बुधः ॥ ५४ ॥ स्पृष्ट्वा शिरोनाभिपादांश्चतस्रः स्थापयेन्नदीः ॥ गङ्गां च यमुना गोदा क्रमान्नाम्ना सरस्वती ॥ ५५ ॥ दुहेत्तु विष्णुगायत्र्या गायत्र्या श्रपयेच्चरुम् ॥ होमयेच्च बलिं दद्यादुत्तरे भोजयेद्द्विजान् ॥ ५६ ॥ सामाधिपानां तुष्ट्यर्थं हेम गां गुरवे ददेत् ॥ दिक्पतिभ्यो बलिं दत्त्वा रात्रौ कुर्य्याच्च जागरम् ॥ ब्रह्मगीतादिशब्देन सर्वभागधिवासनात् ॥ ५७ ॥ इत्यादिमहापुराणे आग्नेयेऽधिवासनं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ अथ वासुदेवप्रतिष्ठादिविधिः ॥ श्रीभगवानुवाच ॥ पिण्डिकास्थापनार्थं तु गर्भागारं तु सप्तधा ॥ विभजेद्ब्रह्मभागे तु प्रतिमां स्थापयेद्बुधः ॥ १ ॥ देवमानुषपैशाचभागेषु न कदाचन ॥ ब्रह्मभागं परित्यज्य किञ्चिदाश्रित्य चाण्डज ॥ २ ॥ देवमानुषभागाभ्यां स्थाप्यां यत्नात्तु पिण्डिका ॥ नपुंसकशिलायां तु रत्नन्यासं समाचरेत् ॥ ३ ॥ नारसिंहेन हुत्वाथ रत्नन्यासं च तेन वै ॥ व्रीहीन्रत्नानि धातूंश्च लोहादींश्चन्दनादिकान् ॥ ४ ॥ पूर्वादिनवगर्त्तेषु न्यसेन्मध्ये यथारुचि ॥ अथ चेन्द्रादिमन्त्रैश्च गर्त्तां गुग्गुलुनावृतः ॥ ५ ॥ रत्नन्यासविधिं कृत्वा प्रतिमामालभेद्गुरुः ॥ सशलाकैर्दर्भपुञ्जैः सहदेवैः समन्वितैः ॥ ६ ॥ सबाह्यान्तैश्च संस्कृत्य





पञ्चगव्येन शोधयेत् ॥ प्रोक्षयेद्दर्भतोयेन नदीतीर्थोदकेन च ॥ ७ ॥ होमार्थे स्थण्डिलं कुर्य्यात्सिकताभिः समन्ततः ॥ सार्द्धह-
स्तप्रमाणं तु चतुरस्रं सुशोभनम् ॥ ८ ॥ अष्टदिक्षु यथान्यासं कलशानपि विन्यसेत् ॥ पूर्वोद्यानष्टवर्णेन अग्निमानीय संस्कृ-
तम् ॥ ९ ॥ त्वमग्नेद्युभिरिति च गायत्र्या समिधो हुनेत् ॥ अष्टार्णेनाष्टशतकमाज्यं पूर्णं प्रदापयेत् ॥ १० ॥ शान्त्युदकमा-
म्रपत्रैर्मूलेन शतमन्त्रितम् ॥ सिञ्चेद्देवस्य तन्मूर्ध्नि श्रीश्चते ह्यनया ऋचा ॥ ११ ॥ ब्रह्मयानेन चोद्धृत्य उत्तिष्ठ ब्रह्मणस्पते ॥ तद्वि-
ष्णोरितिमंत्रेण प्रासादाभिमुखं नयेत् ॥ १२ ॥ शिबिकायां हरिं स्थाप्य भ्रामयीत पुरादिकम् ॥ गीतवेदादिशब्दैश्च प्रासाद-
द्वारि धारयेत् ॥ १३ ॥ स्त्रीभिर्विप्रैर्मंगलाष्टघटैः संस्नापयेद्धरिम् ॥ ततो गन्धादिनाभ्यर्च्य मूलमन्त्रेण देशिकः ॥ १४ ॥ अतो
देवेति वस्त्राद्यमर्घागार्घ्यं निवेद्य च ॥ स्थिरे लग्ने पिण्डिकायां देवस्य त्वेति धारयेत् ॥ १५ ॥ ॐ त्रैलोक्यविक्रान्ताय नम-
स्तेऽस्तु त्रिविक्रम ॥ संस्थाप्य पिण्डिकायां तु स्थिरं कुर्य्याद्विचक्षणः ॥ १६ ॥ ध्रुवा द्यौरिति मन्त्रेण विश्वतश्चक्षुरित्यपि ॥
पञ्चगव्येन संस्नाप्य क्षाल्य गन्धोदकेन च ॥ १७ ॥ पूजयेत्सकलीकृत्य सांगं सावरणं हरिम् ॥ ध्यायेत्खं तस्य मूर्तिं तु पृथिवी
तस्य पीठिका ॥ १८ ॥ कल्पयेद्विग्रहं तस्य तैजसैः परमाणुभिः ॥ जीवमावाहयिष्यामि पञ्चविंशतितत्त्वगम् ॥ १९ ॥ चैतन्यं
परमानन्दं जाग्रत्स्वप्नविवर्जितम् ॥ देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितम् ॥ २० ॥ ब्रह्मादिस्तम्बपर्य्यन्तं हृदयेषु व्यवस्थितम् ॥
हृदयात्प्रतिमाबिम्बे स्थिरो भव परेश्वर ॥ २१ ॥ सजीवं कुरु बिम्बं त्वं सबाह्याभ्यन्तरस्थितः ॥ अंगुष्ठमात्रः पुरुषो देहोपा-
धिषु संस्थितः ॥ २२ ॥ ज्योतिर्ज्ञानं परं ब्रह्म एकमेवाद्वितीयकम् ॥ सजीवीकरणं कृत्वा प्रणवेन निबोधयेत् ॥ २३ ॥ सान्नि-
ध्यकरणं नाम हृदयं स्पृश्य वै जपेत् ॥ सूक्तं तु पौरुषं ध्यायन्निदं गुह्यमनुं जपेत् ॥ २४ ॥ नमस्तेऽस्तु सुरेशाय सन्तोषविभ-
वात्मने ॥ ज्ञानविज्ञानरूपाय ब्रह्मतेजोऽनुयायिने ॥ २५ ॥ गुणातिक्रान्तदेशाय पुरुषाय महात्मने ॥ अक्षयाय पुराणाय विष्णो
सन्निहितो भव ॥ २६ ॥ यच्च ते परमं तत्त्वं यच्च ज्ञानमयं वपुः ॥ तत्सर्वमेकतो लीनमस्मिन्देहे विबुध्यताम् ॥ २७ ॥ आत्मानं
सन्निधीकृत्य ब्रह्मादिपरिवारकान् ॥ स्वनाम्ना स्थापयेदन्यानायुधादीन्स्वमुद्रया ॥ २८ ॥ यात्रावर्षादिकं दृष्ट्वा ज्ञेयः संनिहितो

हरिः ॥ नत्वा स्तुत्वा स्तवाद्यैश्च जप्त्वा चाष्टाक्षरादिकम् ॥ २९ ॥ चण्डप्रचण्डौ द्वारस्थौ निर्गत्याभ्यर्चयेद्गुरुः ॥ अथ मण्डपमासाद्य गरुडं स्थाप्य पूजयेत् ॥ ३० ॥ दिगीशान्दिशि देवांश्च स्थाप्य सम्पूज्य देशिकः ॥ विष्वक्सेनं तु संस्थाप्य शङ्खचक्रादि पूजयेत् ॥ ३१ ॥ सर्वपार्षदकेभ्यश्च बलिं भूतेभ्य अर्पयेत् ॥ ग्रामवस्त्रसुवर्णादि गुरवे दक्षिणां ददेत् ॥ ३२ ॥ यागोपयोगिद्रव्याद्यमाचार्याय नरोऽर्पयेत् ॥ आचार्यदक्षिणार्द्धं तु ऋत्विग्भ्यो दक्षिणां ददेत् ॥ ३३ ॥ अन्येभ्यो दक्षिणां दद्याद्भोजयेद्ब्राह्मणांस्ततः ॥ अवारितान्फलान्दद्याद्यजमानाय वै गुरुः ॥ ३४ ॥ विष्णुं नयेत्प्रतिष्ठाता चात्मना सकलं कुलम् ॥ सर्वेषामेव देवानामेष साधारणो विधिः ॥ मूलमन्त्राः पृथक् तेषां शेषं कार्यं समानकम् ॥ ३५ ॥ इत्यादिमहापुराणे आग्नेये वासुदेवप्रतिष्ठादिविधिर्नाम षष्टितमोऽध्यायः ॥ ६० ॥ अथ द्वारप्रतिष्ठाध्वजारोहणादिविधिः ॥ श्रीभगवानुवाच ॥ वक्ष्ये चावभृथस्नानं विष्णोर्नत्वेति होमयेत् ॥ एकाशीतिपदे कुम्भान्स्थाप्य संस्थापयेद्धरिम् ॥ १ ॥ पूजयेद्गन्धपुष्पाद्यैर्बलिं दत्त्वा गुरुं यजेत् ॥ द्वारप्रतिष्ठां वक्ष्यामि द्वाराधो हेम वै ददेत् ॥ २ ॥ अष्टभिः कलशैः स्थाप्य शाखोदुम्बरको गुरुः ॥ गन्धादिभिः समभ्यर्च्य मन्त्रैर्वेदादिभिर्गुरुः ॥ ३ ॥ कुण्डेषु होमयेद्वह्निं समिद्व्रीहितिलादिभिः ॥ दत्त्वा शय्यादिकं चाधो दद्यादाधारशक्तिकाम् ॥ ४ ॥ शाखयोर्विन्यसेन्मूले देवौ चण्डप्रचण्डकौ ॥ ऊर्ध्वोदुम्बरके देवीं लक्ष्मीं सुरगणार्चिताम् ॥ ५ ॥ न्यस्याभ्यर्च्य यथान्यायं श्रीसूक्तेन चतुर्मुखम् ॥ हुत्वा तु श्रीफलादीनि आचार्यादेस्तु दक्षिणाम् ॥ ६ ॥ प्रतिष्ठासिद्धद्वारस्य तथाचार्यः स्थापयेद्धरिम् ॥ प्रासादस्य प्रतिष्ठां तु हृत्प्रतिष्ठेति तां शृणु ॥ ७ ॥ समाप्तौ शुकनासाया वेद्याः प्राग्गर्भमस्तके ॥ सौवर्णं राजतं कुम्भमथवा शुल्कनिर्मितम् ॥ ८ ॥ अष्टरत्नौषधीधातुबीजलोहान्वितं शुभम् ॥ सवस्त्रं पूरितं चाद्भिर्मंडले चाधिवासयेत् ॥ ९ ॥ सपल्लवं नृसिंहेन हुत्वा सम्पातासिक्तम् ॥ नारायणाख्यतत्त्वेन प्राणभूतं न्यसेत्ततः ॥ १० ॥ वैराजभूतं तं ध्यायेत्प्रासादस्य सुरेश्वर ॥ ततः पुरुषवत्सर्वं प्रासादं चिन्तयेद्बुधः ॥ ११ ॥ अधो दत्त्वा सुवर्णं तु तदुद्भूतं घटं न्यसेत् ॥ गुरवे दक्षिणां दद्याद्ब्राह्मणादेश्च भोजनम् ॥ १२ ॥ ततः पश्चाद्वेदिबन्धं तदूर्ध्वं कण्ठबन्धनम् ॥ कण्ठोपरिष्टात्कर्तव्यं विमलामलसारकम् ॥ १३ ॥





तदूर्ध्वं वृकलं कुर्याच्चक्रं चाद्यं सुदर्शनम् ॥ मूर्तिं श्रीवासुदेवस्य महत्तुतां निवेदयेत् ॥ १४ ॥ कलशं वाथ कुर्वीत तदूर्ध्वं चक्र-
मुत्तमम् ॥ वेद्याश्च परितः स्थाप्या अष्टौ विघ्नेश्वरास्त्वज ॥ १५ ॥ चत्वारो वा चतुर्दिक्षु स्थापनीया गरुत्मतः ॥ ध्वजारोहं च
वक्ष्यामि येन भूतादि नश्यति ॥ १६ ॥ प्रासादबिम्बद्रव्याणां यावन्तः परमाणवः ॥ तावद्वर्षसहस्राणि तत्कर्ता विष्णुलोक-
भाक् ॥ १७ ॥ कुम्भाण्डवेदिबिम्बानां भ्रमणाद्वायुनानघ ॥ कंठस्यावेष्टनाज्ज्ञेयं फलं कोटिगुणं ध्वजात् ॥ १८ ॥ पताकां प्रकृतिं
विद्धि दंडं पुरुषरूपिणम् ॥ प्रासादं वासुदेवस्य मूर्तिभेदं निबोध मे ॥ १९ ॥ धारणाद्धरणीं विद्धि आकाशं सुषिरात्मकम् ॥
तेजस्तत्पावकं विद्धि वायुं स्पर्शगतं तथा ॥ २० ॥ पाषाणादिष्वेव जलं पार्थिवं पृथिवीगुणम् ॥ प्रतिशब्दोद्भवं
शब्दं स्पर्शं स्यात्कर्कशादिकम् ॥ २१ ॥ शुक्लादिकं भवेद्रूपं रसमन्नादिदर्शनम् ॥ धूपादिगन्धं गंधं तु वाग्भेर्यादिषु
संस्थिता ॥ २२ ॥ शुकनासाश्रिता नासा बाहू तद्रथकौ स्मृतौ ॥ शिरस्त्वंडं निगदितं कलशो मूर्द्धजाः स्मृताः
॥ २३ ॥ कंठं कंठमिति ज्ञेयं स्कन्धो वेदो निगद्यते ॥ पायूपस्थे प्रणाले तु त्वक्सुधा परिकीर्त्तिता ॥ २४ ॥
मुखं द्वारं भवेदस्य प्रतिमा जीव उच्यते ॥ तच्छक्तिं पिण्डिकां विद्धि प्रकृतिं च तदाकृतिम् ॥ २५ ॥ निश्चलत्वं च गर्भोऽस्या
अधिष्ठाता तु केशवः ॥ एवमेष हरिः साक्षात्प्रासादत्वेन संस्थितः ॥ २६ ॥ जङ्घा त्वस्य शिवो ज्ञेयः स्कन्धे धाता व्यवस्थितः ॥
ऊर्ध्वभागे स्थितो विष्णुरेवं तस्य स्थितस्य हि ॥ २७ ॥ प्रासादस्य प्रतिष्ठां तु ध्वजरूपेण मे शृणु ॥ ध्वजं कृत्वा सुरैर्दैत्या जिताः
शस्त्रादिचिह्नितम् ॥ २८ ॥ अण्डोर्द्ध्वं कलशं न्यस्य तदूर्ध्वं विन्यसेद्ध्वजम् ॥ बिम्बार्द्धमानं दण्डस्य त्रिभागेनाथ कारयेत् ॥ २९ ॥
अष्टारं द्वादशारं वा मध्ये मूर्तिमतान्वितम् ॥ नारसिंहेन तार्क्ष्येण ध्वजदण्डस्तु निर्व्रणः ॥ ३० ॥ प्रासादस्य तु विस्तारो मानं
दण्डस्य कीर्त्तितम् ॥ शिखरार्द्धेन वा कुर्यात्तृतीयार्द्धेन वा पुनः ॥ ३१ ॥ द्वारस्य दैर्घ्याद्द्विगुणं दण्डं वा परिकल्पयेत् ॥ ध्वज-
यष्टिर्देवगृहे ऐशान्यां वायवेऽथवा ॥ ३२ ॥ क्षौमाद्यैश्च ध्वजं कुर्याद्विचित्रं वैकवर्णकम् ॥ घण्टाचामरकिङ्किण्या भूषितं
पापनाशनम् ॥ ३३ ॥ दण्डाग्राद्धरणिं यावद्धस्तैकं विस्तरेण तु ॥ महाध्वजः सर्वदः स्यात्तुर्यांशाद्धीनतोऽर्चितः ॥ ३४ ॥

ध्वजे चार्द्धेन विज्ञेया पताका मानवर्जिता ॥ विस्तारेण ध्वजः कार्य्यो विंशदङ्गुलसन्निभः ॥ ३५ ॥ अधिवासविधानेन चक्रं दण्डं ध्वजं तथा ॥ देववत्सकलं कृत्वा मण्डपस्नपनादिकम् ॥ ३६ ॥ नेत्रोन्मीलनकं त्यक्त्वा पूर्वोक्तं सर्वमाचरेत् ॥ अधिवासयेच्च विधिना शय्यायां स्थाप्य देशिकः ॥ ३७ ॥ ततः सहस्रशीर्षेति सूक्तं चक्रे न्यसे‌‌द्बुधः ॥ तथा सौदर्शनं मन्त्रं मनस्तत्त्वं निवेशयेत् ॥ ३८ ॥ मनोरूपेण तस्यैव सजीवकरणं स्मृतम् ॥ अरेषु मूर्त्तयो न्यस्याः केशवाद्याः सुरोत्तम ॥ ३९ ॥ नाभ्यब्जप्रतिनेमीषु न्यसेत्तत्त्वानि देशिकः ॥ नृसिंहं विश्वरूपं वा अब्जमध्ये निवेशयेत् ॥ ४० ॥ सकलं विन्यसेद्दण्डे सूत्रात्मानं सजीवकम् ॥ निष्कलं परमात्मानं ध्वजे ध्यायन्न्यसेद्धरिम् ॥ ४१ ॥ तच्छक्तिं व्यापिनीं ध्यायेद्ध्वजरूपां बलाबलाम् ॥ मण्डपे स्थाप्य चाभ्यर्च्य होमं कुण्डेषु कारयेत् ॥ ४२ ॥ कलशे स्वर्णशकलं न्यस्य रत्नानि पञ्च च ॥ स्थापयेच्चक्रमन्त्रेण स्वर्णचक्रमधस्ततः ॥ ४३ ॥ पारदेन तु संप्लाव्य नेत्रपट्टेन छादयेत् ॥ ततो निवेशयेच्चक्रं तन्मध्ये नृहरिं स्मरेत् ॥ ४४ ॥ ॐ क्षौं नृसिंहाय नमः पूजयेत्स्थापयेद्धरिम् ॥ ततो ध्वजं गृहीत्वा तु यजमानः सबान्धवः ॥ ४५ ॥ दधिभक्तयुते पात्रे ध्वजस्याग्रं निवेशयेत् ॥ ध्रुवाद्येन फडन्तेन ध्वजं मन्त्रेण पूजयेत् ॥ ४६ ॥ शिरस्याधाय तत्पात्रं नारायणमनुस्मरन् ॥ प्रदक्षिणं तु कुर्वीत तुर्य्यमङ्गलनिःस्वनैः ॥ ४७ ॥ ततो निवेशयेद्दण्डं मन्त्रेणाष्टाक्षरेण तु ॥ मुञ्चामि त्वेतिसूक्तेन ध्वजं मुञ्चेद्विचक्षणः ॥ ४८ ॥ पात्रं ध्वजं कुञ्जरादि दद्यादाचार्यके द्विजः ॥ एष साधारणः प्रोक्तो ध्वजस्यारोहणे विधिः ॥ ४९ ॥ यस्य देवस्य यच्चिह्नं तन्मन्त्रेण स्थिरं चरेत् ॥ स्वर्गच्छेद्ध्वजदानात्तु भुवि राजा बली भवेत् ॥ ५० ॥ इत्यादिमहापुराणे आग्नेये द्वारप्रतिष्ठाध्वजारोहणादिविधिर्नामैकषष्टितमोऽध्यायः ॥ ६१ ॥ अथ लक्ष्मीप्रतिष्ठाविधिः ॥ श्रीभगवानुवाच ॥ समुदायेन देवादेः प्रतिष्ठां प्रवदामि ते ॥ लक्ष्म्याः प्रतिष्ठां प्रथमं तथा देवीगणस्य च ॥ १ ॥ पूर्ववत्सकलं कुर्यान्मण्डपस्नपनादिकम् ॥ भद्रपीठे श्रियं न्यस्य स्थापयेदष्ट वै घटान् ॥ २ ॥ घृतेनाभ्यज्य मूलेन स्नापयेत्पञ्चगव्यकैः ॥ हिरण्यवर्णां हरिणीं नेत्रे चोन्मीलयेच्छ्रियाः ॥ ३ ॥ तन्म आवह इत्येवं प्रदद्यान्मधुरत्रयम् ॥ अश्वपूर्वेति पूर्वेण तां कुम्भेनाभिषेचयेत् ॥ ४ ॥





कांसोऽस्मितेति याम्येन पश्चिमेनाभिषेचयेत् ॥ चन्द्रां प्रभासामुत्तरायांदित्यवर्णेति चोत्तरात् ॥ ५ ॥ उपैतु मेति चाग्नेयात्क्षु-
त्पिपासेति नैर्ऋताद् ॥ गन्धद्वारेति वायव्यां मनसः काममाकूतिम् ॥ ६ ॥ ईशानकलशेनैव शिरः सौवर्णकर्दमात् ॥ एकाशी-
तिघटैः स्नानं मन्त्रेणापः सृजन्त्विति ॥ ७ ॥ आर्द्रां पुष्करिणीं गन्धैरार्द्रामित्यादिपुष्पकैः ॥ ताम्म आवह मन्त्रेण य आनन्द
ऋचाखिलम् ॥ ८ ॥ श्रायन्ती येन शय्यायां श्रीसूक्तेन च सन्निधिम् ॥ लक्ष्मीबीजेन चिच्छक्तिं विन्यस्याभ्यर्चयेत्पुनः ॥
॥ ९ ॥ श्रीसूक्तेन मण्डपेऽथ कुण्डेष्वब्जानि होमयेत् ॥ करवीराणि वा हुत्वा सहस्रं शतमेव वा ॥ १० ॥ गृहोपकरणान्तादि
श्रीसूक्तेनैव चार्पयेत् ॥ ततः प्रासादसंस्कारं सर्वं कृत्वा तु पूर्ववत् ॥ ११ ॥ मन्त्रेण पिण्डिकां कृत्वा प्रतिष्ठानं ततः श्रियः ॥
श्रीसूक्तेन च सान्निध्यं पूर्ववत्प्रत्यृचं जपेत् ॥ १२ ॥ चिच्छक्तिं बोधयित्वा तु मूलात्सान्निध्यकं चरेत् ॥ भूस्वर्णवस्त्रगोऽन्नादि
गुरवे ब्रह्मणेऽर्पयेत् ॥ एवं देव्योऽखिलाः स्थाप्य राज्यस्वर्गादिभाग्भवेत् ॥ १३ ॥ इत्यादिमहापुराणे आग्नेये लक्ष्मीस्थापनं
नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥ अथ सुदर्शनचक्रादिप्रतिष्ठाकथनम् ॥ श्रीभगवानुवाच ॥ एवं तार्क्ष्यस्य चक्रस्य ब्रह्मणो
नृहरेस्तथा ॥ प्रतिष्ठा विष्णुवत्कार्या स्वस्वमन्त्रेण तां शृणु ॥ १ ॥ सुदर्शन महाचक्र शान्त दुष्टभयङ्कर ॥ छिन्धि छिन्धि भिन्धि
भिन्धि विदारय विदारय ॥ परमन्त्रान्ग्रस ग्रस भक्षय भक्षय भूतान् त्रासय त्रासय हुं फट् सुदर्शनाय नमः ॥ अभ्यर्च्य चक्रं
चानेन रणे दारयते रिपून् ॥ २ ॥ ॐ क्षौं नरसिंह उग्ररूप ज्वल ज्वल प्रज्वल प्रज्वल स्वाहा ॥ नरसिंहस्य मन्त्रोऽयं पाताला-
ख्यस्य वच्मि ते ॥ ॐ क्षौं नमो भगवते नरसिंहाय प्रदीप्तसूर्यकोटिसहस्रसमतेजसे वज्रनखदंष्ट्रायुधाय स्फुटविकटाविकीर्णके-
सरसटाप्रक्षुभितमहार्णवाम्भोदुन्दुभिनिर्घोषाय सर्वमन्त्रोत्तारणाय एह्येहि भगवन्नरसिंह पुरुष परापर ब्रह्म सत्येन स्फुर स्फुर
विजृम्भ विजृम्भ आक्रम आक्रम गर्ज गर्ज मुञ्च मुञ्च सिंहनादान् विदारय विदारय विद्रावय विद्रावय आविश आविश
सर्वमन्त्ररूपाणि सर्वमन्त्रजातीश्च हन हन छिन्द छिन्द सङ्क्षिप सङ्क्षिप सर सर दारय दारय स्फुट स्फुट स्फोटय स्फोटय ज्वाला-
मालासङ्घातमय सर्वतोऽनन्तज्वालावज्राशनिचक्रेण सर्वपातालान् उत्सादय उत्सादय सर्वतोऽनन्तज्वाल वज्रशरपञ्जरेण

सर्वपातालान् परिवारय परिवारय सर्वपातालासुरवासिनां हृदयान्याकर्षय आकर्षय शीघ्रं दह दह पच पच मथ मथ शोषय शोषय निकृन्तय निकृन्तय तावद्यावन्मे वशमागताः पातालेभ्यः फट् असुरेभ्यः फट् मन्त्ररूपेभ्यः फट् मन्त्रजातिभ्यः फट् संशयान्मां भगवन्नरसिंहरूप विष्णो सर्वापद्भ्यः सर्वमन्त्ररूपेभ्यो रक्ष रक्ष हुं फट् नमो नमस्ते ॥ नरसिंहस्य विधेयं हरिरूपार्थासिद्धिदा ॥ ३ ॥ त्रैलोक्यमोहनैर्मन्त्रैः स्थाप्यस्त्रैलोक्यमोहनः ॥ गदी दक्षे शान्तिकरो द्विभुजो वा चतुर्भुजः ॥ ४ ॥ वामोर्द्ध्वे कारयेच्चक्रं पाञ्चजन्यमथो ह्यधः ॥ श्रीपुष्टिसंयुतं कुर्य्याद्बलेन सह भद्रया ॥ ५ ॥ प्रासादे स्थापयेद्विष्णुं गृहे वा मण्डपेऽपि वा ॥ वामनं चैव वैकुण्ठं हयास्यमनिरुद्धकम् ॥ ६ ॥ स्थापयेज्जलशय्यास्थं मत्स्यादींश्चावतारकान् ॥ सङ्कर्षणं विश्वरूपं लिङ्गं वै रुद्रमूर्तिकम् ॥ ७ ॥ अर्द्धनारीश्वरं तद्वद्धरिशङ्करमातृकाः ॥ भैरवं च तथा सूर्यं ग्रहांस्तद्वद्विनायकम् ॥ ८ ॥ गौरीमिन्द्रादिभिः सेव्यां चित्रजां च बलाबलाम् ॥ पुस्तकानां प्रतिष्ठां च वक्ष्ये लिखनतद्विधिम् ॥ ॥ ९ ॥ स्वस्तिके मण्डलेऽभ्यर्च्य शरपत्रासने स्थिरम् ॥ लेख्यं च लिखितं पुस्तं गुरुर्विद्यां हरिं यजेत् ॥ १० ॥ यजमानो गुरुं विद्यां हरिं लिपिकृतं नरम् ॥ प्राङ्मुखः पद्मिनीं ध्यायेल्लिखित्वा श्लोकपञ्चकम् ॥ ११ ॥ रौप्यस्थमप्या हैम्या च लेखन्या नागराक्षरम् ॥ ब्राह्मणान्भोजयेच्छक्त्या शक्त्या दद्याच्च दक्षिणाम् ॥ १२ ॥ गुरुं विद्यां हरिं प्राच्यं पुराणादि लिखेन्नरः ॥ पूर्ववन्मण्डलाद्यैश्च ऐशान्यां भद्रपीठके ॥ १३ ॥ दर्पणे पुस्तकं दृष्ट्वा सेचयेत्पूर्ववद्घटे ॥ नेत्रोन्मीलनकं कृत्वा शय्यायां तु न्यसेन्नरः ॥ १४ ॥ न्यसेत्तु पौरुषं सूक्तं वेदाद्यं तत्र पुस्तके ॥ कृत्वा सजीवीकरणं प्राच्यं हुत्वा चरुं ततः ॥ १५ ॥ सम्प्राच्यं दक्षिणाभिस्तु गुर्वादीन्भोजयेद्द्विजान् ॥ रथेन हस्तिना वापि भ्रामयेत्पुस्तकं नरैः ॥१६॥ गृहे देवालयादौ तु पुस्तकं स्थाप्य पूजयेत् ॥ वस्त्रादिवेष्टितं पाठादादावन्ते समर्चयेत् ॥ १७ ॥ जगच्छान्तिं चावधार्य्य पुस्तकं वाचयेन्नरः ॥ अध्यायमेकं कुम्भाद्भिर्यजमानादि सेचयेत् ॥ १८ ॥ द्विजाय पुस्तकं दत्त्वा फलस्यान्तो न विद्यते ॥ त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ॥ १९ ॥ विद्यादानफलं दत्त्वा मष्याक्तं पत्रसञ्चयम् ॥ यावत्तु पत्रसंख्यानमक्षराणां तथाऽनघ ॥ २० ॥ तावद्वर्षसहस्राणि विष्णुलोके







मदीयते ॥ पञ्चरात्रं पुराणादि भारतादि ददन्नरः ॥ कुलैकविंशमुद्धृत्य परे तत्त्वे तु लीयते ॥ २१ ॥ इत्यादिमहापुराणे आग्नेये
देवादिप्रतिष्ठाकथनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ अथ कूपादिप्रतिष्ठाकथनम् ॥ श्रीभगवानुवाच ॥ कूपवापीतडागानां
प्रतिष्ठां वच्मि तां शृणु ॥ जलरूपेण हि हरिः सोमो वरुण उत्तमः ॥ १ ॥ अग्नीषोममयं विश्वं विष्णुरापस्तु कारणम् ॥ हैमं
रौप्यं रत्नजं वा वरुणं कारयेन्नरः ॥ २ ॥ द्विभुजं हंसपृष्ठस्थं दक्षिणेनाभयप्रदम् ॥ वामेन नागपाशं तु नदीनागादिसंयुतम् ॥
॥ ३ ॥ यागमण्डपमध्ये स्याद्वेदिका कुण्डमण्डिता ॥ तोरणं वारुणं कुम्भं न्यसेच्च करकान्वितम् ॥ ४ ॥ भद्रके चार्द्धचन्द्रे वा
स्वस्तिके द्वारि कुम्भकान् ॥ अग्न्याधानं चाप्यकुण्डे कृत्वा पूर्णां प्रदापयेत् ॥ ५ ॥ वरुणं स्नानपीठे तु ये ते शतेति संस्पृशेत् ॥
घृतेनाभ्यञ्जयेत्पश्चान्मूलमन्त्रेण देशिकः ॥ ६ ॥ शन्नो देवीति प्रक्षाल्य शुद्धवत्या शिवोदकैः ॥ अधिवासयेदष्टकुम्भान्सामुद्रं
पूर्वकुम्भके ॥ ७ ॥ गाङ्गेमग्नौ वर्षतोयं दक्षे रक्षस्तु नैर्ऋरम् ॥ नदीतोयं पश्चिमे तु वायव्ये तु नदोदकम् ॥ ८ ॥ औद्भिज्जं चोत्तरे
स्थाप्यमैशान्यां तीर्थसम्भवम् ॥ अलाभे तु नदीतोयं यासां राजेति मन्त्रयेत् ॥ ९ ॥ देवं निमार्ज्य निर्मथ्य दुर्मित्रियेति विच-
क्षणः ॥ नेत्रे चोन्मीलयेच्चित्रं तच्चक्षुर्मधुरत्रयैः ॥ १० ॥ ज्योतिः सम्पूरयेद्धैम्यां गुरवे गामथार्प्पयेत् ॥ समुद्रज्येष्ठेत्याभिषिञ्चेद्वरुणं
पूर्वकुम्भतः ॥ ११ ॥ समुद्रं गच्छ गाङ्गेयात्सोमो धेन्विति वर्षकात् ॥ देवीरापो निर्झराद्भिर्नदाद्भिः पञ्चनद्यतः ॥ १२ ॥ उद्भिद-
द्यश्चोद्भिदेन पावमान्याऽथ तीर्थकैः ॥ आपो हि ष्ठा पञ्चगव्याद्धिरण्यवर्णेति स्वर्णजात् ॥ १३ ॥ आपो अस्मेति वर्षोत्थैर्व्याहृत्या
कूपसम्भवैः ॥ वरुणं च तडागोत्थैर्वरुणाद्भिस्तु वश्यतः ॥ १४ ॥ आपो देवीति गिरिजैरेकाशीतिघटैस्ततः ॥ स्नापयेद्वरुणस्येति
त्वन्नो वरुण चार्घकम् ॥ १५ ॥ व्याहृत्या मधुपर्कं तु बृहस्पतेति वस्त्रकम् ॥ वरुणेति पवित्रं तु प्रणवेनोत्तरीयकम् ॥ १६ ॥
यद्वारण्येन पुष्पादि प्रदद्याद्वरुणाय तु ॥ चामरं दर्पणं छत्रं व्यजनं वैजयन्तिकाम् ॥ १७ ॥ मूलेनोत्तिष्ठेत्युत्थाप्य तां रात्रिमधि-
वासयेद् ॥ वरुणं चेति सान्निध्यं यद्वारण्येन पूजयेत् ॥ १८ ॥ सजीवीकरणं मूलात्पुनर्गन्धादिना यजेत् ॥ मण्डपे पूर्ववत्प्राच्यं
कुण्डेषु समिदादिकम् ॥ १९ ॥ वेदादिमन्त्रैर्गगाद्याश्चतस्रो धेनवो दुहेद् ॥ दिक्ष्वथो वै यवचरुं ततः संस्थाप्य होमयेत् ॥ २० ॥

व्याहृत्या वाथ गायत्र्या मूलेनामन्त्रयेत्तथा ॥ सूर्याय प्रजापतये द्यौः स्वाहा चान्तरिक्षकः ॥ २१ ॥ तस्यै पृथिव्यै देहधृत्यै इह स्वधृतये ततः ॥ इह रत्यै चेह रमत्या उग्रो भीमश्च रौद्रकः ॥ २२ ॥ विष्णुश्च वरुणो धाता रायस्पोषो महेन्द्रकः ॥ अग्निर्यमो नैर्ऋतोऽथ वरुणो वायुरेव च ॥ २३ ॥ कुबेर ईशोऽनन्तोऽथ ब्रह्मा राजा जलेश्वरः ॥ तस्मै स्वाहेदं विष्णुश्च तद्विप्रासेति होमयेत् ॥ २४ ॥ सोमो धेन्विति षट् हुत्वा इमं मेति च होमयेत् ॥ आपोहिष्ठेति तिसृभिरिमा रुद्रेति होमयेत् ॥ २५ ॥ दशादिक्षु बलिं दद्याद्गन्धपुष्पादिनाऽर्चयेत् ॥ प्रतिमां तु समुत्थाप्य मण्डले विन्यसेद्बुधः॥२६॥पूजयेद्गन्धपुष्पाद्यैर्हेमपुष्पादिभिः क्रमात् ॥ जलाशयांस्तु दिग्भागे वितस्तिद्वयसम्मितान् ॥२७॥ कृत्वाऽष्टौ स्थण्डिलान्रम्यान्सैकतान्देशिकोत्तमः ॥ वरुणस्येति मन्त्रेण साज्यमष्टशतं ततः ॥ २८ ॥ चरुं यवमयं हुत्वा शान्तितोयं समाचरेत् ॥ सेचयेन्मूर्ध्नि देवं तु सजीवकरणं चरेत् ॥२९॥ ध्यायेत्तु वरुणं युक्तं गौर्या नदनदीगणैः ॥ ओं वरुणाय नमोऽभ्यर्च्य ततः सान्निध्यमाचरेत् ॥३०॥ उत्थाप्य नागपृष्ठाद्यैर्भ्रामयेत्तैः समङ्गलैः ॥ आपोहिष्ठेति च क्षिपेत्त्रिमध्वाक्ते घटे जले ॥ ३१ ॥ जलाशये मध्यगतं सुगुप्तं विनिवेशयेत् ॥ स्नात्वा ध्यायेच्च वरुणं सृष्टिं ब्रह्माण्डसञ्ज्ञिकाम् ॥ ३२ ॥ अग्निबीजेन सन्दग्ध्य तद्भस्म प्लावयेद्धराम् ॥ सर्वमापोमयं लोकं ध्यायेत्तत्र जलेश्वरम् ॥ ३३ ॥ तोयमध्यस्थितं देवं ततो यूपं निवेशयेत् ॥ चतुरस्रमथाष्टास्रं वर्त्तुलं वा प्रवर्तितम् ॥ ३४ ॥ आराध्य देवतालिङ्गं दशहस्तं तु कूपके ॥ यूपं यज्ञीयवृक्षोत्थं मूले हैमं फलं न्यसेत् ॥३५॥ वाप्यां पञ्चदशकरं पुष्करिण्यां तु विंशकम् ॥तडागे पञ्चविंशाख्यं जलमध्ये निवेशयेत् ॥ ३६ ॥ यागमण्डपाङ्गणे वा यूपव्रस्केति मन्त्रतः ॥ स्थाप्य तद्वेष्टयेद्वस्त्रैर्यूपोपरि पताकिकाम् ॥ ३७ ॥ तदभ्यर्च्य च गन्धाद्यैर्जगच्छान्ति समाचरेत् ॥ दक्षिणां गुरवे दद्याद्भूगोहेमाम्बुपात्रकम् ॥३८॥ द्विजेभ्यो दक्षिणा देया आगतान्भोजयेत्तथा ॥ आब्रह्मस्तम्बपर्य्यन्ता ये केचित्सलिलार्थिनः ॥ ३९ ॥ ते तृप्तिमुपगच्छन्तु तडागस्थेन वारिणा ॥ तोयमुत्सर्जयेदेवं पञ्चगव्यं विनिक्षिपेत् ॥ ४० ॥ आपोहिष्ठेति तिसृभिः शान्तितोयं द्विजैः कृतम् ॥ तीर्थतोयं क्षिपेत्पुण्यं गोकुलं चार्पयेद्द्विजान् ॥ ४१ ॥ अनिवारितमन्नाद्यं सर्वजन्यं च कारयेत् ॥ अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ॥ ४२ ॥ एकाहं स्थापये-





तोयं तत्पुण्यमयुतायुतम् ॥ विमाने मोदते स्वर्गे नरकं न स गच्छति ॥ ४३ ॥ गवादि पिबते यस्मात्तस्मात्कर्तुर्न पातकम् ॥
तोयदानात्सर्वदानफलं प्राप्य दिवं व्रजेत् ॥ ४४॥ इत्यादिमहापुराणे आग्नेये कूपवापीतडागादिप्रतिष्ठाकथनं नाम चतुष्षष्टितमो-
ऽध्यायः ॥ ६४ ॥ अथ सभादिस्थापनकथनम् ॥ श्रीभगवानुवाच ॥ सभादिस्थापनं वक्ष्ये तथैतेषां प्रवर्त्तनम् ॥ भूमौ परी-
क्षितायां च वास्तुयागं समाचरेत् ॥ १ ॥ स्वेच्छया तु सभां कृत्वा स्वेच्छया स्थापयेत्सुरान् ॥ चतुष्पथे च ग्रामादौ न शून्ये
कारयेत्सभाम् ॥ २ ॥ निर्मलः कुलमुद्धृत्य कर्त्ता स्वर्गे विमोदते ॥ अनेन विधिना कुर्यात्सप्तभौमं हरेर्गृहम् ॥ ३ ॥ यथा राज्ञां
तथाऽन्येषां पूर्वाद्याश्च ध्वजादयः ॥ कोणभुजान्वर्जयित्वा चतुःशालं तु वर्त्तयेत् ॥ ४ ॥ त्रिशालं वा द्विशालं वा एकशालमथापि
वा ॥ व्ययाधिकं न कुर्वीत व्ययदोषकरं हि तत् ॥ ५ ॥ आयाधिके भवेत्पीडा तस्मात्कुर्य्यात्समं द्वयम् ॥ करराशिं समस्तं तु
कुर्य्याद्वसुगुणं गुरुः ॥ ६ ॥ सप्तार्चिषा हते भागे गर्गविद्याविचक्षणः ॥ अष्टधा भाजिते तस्मिन्यच्छेषं स व्ययो मतः ॥ ७ ॥
अथवा करराशिं तु हन्यात्सप्तार्चिषा बुधः ॥ वसुभिः संहते भागे ध्वजादि परिकल्पयेत् ॥ ८ ॥ ध्वजो धूम्रस्तथा सिंहः श्वा वृष-
स्तु खरो गजः ॥ ध्वांक्षश्चेति क्रमेणैवमायाष्टकमुदाहृतम् ॥ ९ ॥ त्रिशालकत्रयं शस्तमुदक्पूर्वविवर्जितम् ॥ याम्यां परगृहोपेतं
द्विशालं लभ्यते सदा ॥१०॥ याम्ये शालैकशालं तु प्रत्यक्शालमथापि वा ॥ एकशालद्वयं शस्तं शेषास्त्वन्ये भयावहाः ॥ ११॥
चतुःशालं सदा शस्तं सर्व्वदोषविवर्जितम् ॥ एकभौमादि कुर्वीत भवनं सप्तभौमकम् ॥ १२ ॥ द्वारवेध्यादिरहितं पूरणेन विव-
र्जितम् ॥ देवगृहं देवतायाः प्रतिष्ठाविधिना सदा ॥ १३ ॥ संस्थाप्य मनुजानां च समुदायोक्तकर्मणा ॥ प्रातः सर्वौषधीस्नानं
कृत्वा शुचिरतन्द्रितः ॥ १४ ॥ मधुरैस्तु द्विजान्भोज्य पूर्णकुम्भादिशोभितम् ॥ सतोरणं स्वस्ति वाच्य द्विजान्मोपुष्पह-
स्तकः ॥ १५ ॥ गृही गृहं प्रविशेच्च देवज्ञान्प्राच्र्य संविशेत् ॥ गृहे पुष्टिकरं मन्त्रं पठेच्चेमं समाहितः ॥ १६ ॥ ओं वन्दे नन्दय ॥४५॥
वासिष्ठे वसुभिः प्रजया सह ॥ जये भार्गवदायादे प्रजानां विजयावहे ॥ १७ ॥ पूर्णेऽङ्गिरसदायादे पूर्णकामं कुरुष्व माम् ॥
भद्रे काश्यपदायादे कुरु भद्रां मतिं मम ॥ १८ ॥ सर्वबीजौषधीयुक्तं सर्वरत्नौषधीवृते ॥ रुचिरे नन्दने नन्दे वासिष्ठे रम्यता-

मिह ॥ १९ ॥ प्रजापतिसुते देवि चतुरस्रे महीयसि ॥ सुभगे सुव्रते देवि गृहे काश्यपि रम्यताम् ॥ २० ॥ पूजिते परमाचार्य्यैर्गन्धमाल्यैरलंकृते ॥ भवभूतिकरे देवि गृहे भार्गवि रम्यताम् ॥ २१ ॥ अव्यक्ते व्याकृते पूर्णे मुनेरङ्गिरसः सुते ॥ इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहम् ॥ २२ ॥ देशस्वामिपुरस्वामिगृहस्वामिपरिग्रहे ॥ मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव ॥ २३ ॥ इत्यादिमहापुराणे आग्नेये सभागृहस्थापनं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥ अथ साधारणप्रतिष्ठाविधानम् ॥ श्रीभगवानुवाच ॥ समुदायप्रतिष्ठां च वक्ष्ये सा वासुदेववत् ॥ आदित्या वसवो रुद्राः साध्या विश्वेऽश्विनौ तथा ॥ १ ॥ ऋषयश्च तथा सर्वे वक्ष्ये तेषां विशेषकम् ॥ यस्य देवस्य यन्नाम तस्याद्यं गृह्य चाक्षरम् ॥ २ ॥ मात्राभिर्भेदयित्वा तु दीर्घाण्यङ्गानि भेदयेत् ॥ प्रथमं कल्पयेद्बीजं सबिन्दुं प्रणवं नतिम् ॥ ३ ॥ सर्वेषां मूलमन्त्रेण पूजनं स्थापनं तथा ॥ नियमव्रतकृच्छ्राणां मठसङ्क्रमवेश्मनाम् ॥ ४ ॥ मासोपवासद्वादश्यामित्यादिस्थापनं वदे ॥ शिलां पूर्णघटं कांस्यं सम्भारं स्थापयेत्ततः ॥ ५ ॥ ब्रह्मकूर्चं समाहृत्य श्रपेद्यवमयं चरुम् ॥ क्षीरेण कपिलायास्तु तद्विष्णोरिति साधकः ॥६ ॥ प्रणवेनाभिघार्य्यैव दर्व्या सङ्घट्टयेत्ततः ॥ साधयित्वाऽवतार्य्याथ विष्णुमभ्यर्च्य होमयेत् ॥ ७ ॥ व्याहृत्या चैव गायत्र्या तद्विप्रासेति होमयेत् ॥ विश्वतश्चक्षुर्वेदाद्यैर्भूरग्नये तथैव च ॥ ८ ॥ सूर्य्याय प्रजापतये अन्तरिक्षाय होमयेत् ॥ द्यौः स्वाहा ब्रह्मणे स्वाहा पृथिवी महाराजकः ॥ ९ ॥ तस्मै सामं च राजानमिन्द्राद्यैर्होममाचरेत् ॥ एवं हुत्वा चरोर्भागान्दद्याद्दिग्बलिमादरात् ॥ १० ॥ समिधोऽष्टशतं हुत्वा पालाशांश्चाज्यहोमकम् ॥ कुर्य्यात्पुरुषसूक्तेन इरावती तिलाष्टकम् ॥ ११ ॥ हुत्वा तु ब्रह्मविष्ण्वीशदेवानामनुयायिनाम् ॥ ग्रहाणामाहुतीर्हुत्वा लोकेशानामथो पुनः ॥ १२ ॥ पर्वतानां नदीनां च समुद्राणां तथाऽऽहुतीः ॥ हुत्वा च व्याहृतीर्दद्यात्स्रुवपूर्णाहुतित्रयम् ॥ १३॥ वोपडन्तेन मन्त्रेण वैष्णवेन पितामह ॥ पञ्चगव्यं चरुं प्राश्य दत्त्वाऽचार्य्याय दक्षिणाम् ॥ १४ ॥ तिलपात्रं हेमयुक्तं सवस्त्रं गामलंकृताम् ॥ प्रीयतां भगवान्विष्णुरित्युत्सृजेद्व्रतं बुधः ॥ १५ ॥ मासोपवासादेरन्यां प्रतिष्ठां वच्मि पूर्वतः ॥ यज्ञेनाऽऽराध्य देवेशं श्रपयेद्वैष्णवं चरुम् ॥ १६ ॥ तिलतण्डुलनीवारैः श्यामाकैरथवा यवैः ॥ आज्येनाघार्य्य चोतार्य्य होमयेन्मूर्त्तिमन्त्रकैः ॥ १७ ॥

विष्ण्वादीनां मासपानां तदन्ते होमयेत्पुनः ॥ ओं श्रीविष्णवे स्वाहा ॥ ओं विष्णवे विभूषणाय स्वाहा ॥ ओं विष्णवे शिपिविष्टाय स्वाहा ॥ ओं नरसिंहाय स्वाहा ॥ ओं पुरुषोत्तमाय स्वाहा ॥ द्वादशाश्वत्थसमिधो होमयेद्घृतसंप्लुताः ॥ १८ ॥ विष्णोरराटमन्त्रेण ततो द्वादश चाहुतीः ॥ इदं विष्णुरिरावती चरोर्द्वादश चाहुतीः ॥ १९ ॥ हुत्वा चाज्याहुतीस्तद्वत्ताद्विप्रासेति होमयेत् ॥ शेषहोमं ततः कृत्वा दद्यात्पूर्णाहुतित्रयम् ॥ २० ॥ युञ्जते त्वनुवाकं तु जप्त्वा प्राश्नीत वै चरुम् ॥ प्रणवेन स्वशब्दान्ते कृत्वा पात्रे तु पैप्पले ॥ २१ ॥ ततो मासाधिपानां तु विप्रान्द्वादश भोजयेत् ॥ त्रयोदशो गुरुस्तत्र तेभ्यो दद्यात्त्रयोदश ॥ २२ ॥ कुम्भान्स्वाद्वम्बुसंयुक्तान्सच्छत्रोपानहान्वितान् ॥ सवस्त्रहेममाल्याढ्यांश्चान्नपूर्वैं त्रयोदश ॥ २३ ॥ गावः प्रीतिं समायान्तु प्रचरन्तु प्रहर्षिताः ॥ इति गोपथमुत्सृज्य यूपं तत्र निवेशयेत् ॥ २४ ॥ दशहस्तं प्रपाऽऽराममठसंक्रमणादिषु ॥ गृहे च होममेवं तु कृत्वा सर्वं यथाविधि ॥ २५ ॥ पूर्वोक्तेन विधानेन प्रविशेच्च गृहं गृही ॥ अनिवारितमन्नाद्यं सर्वेष्वेतेषु कारयेत् ॥ २६ ॥ द्विजेभ्यो दक्षिणा देया यथाशक्ति विचक्षणैः ॥ आरामं कारयेद्यस्तु नन्दने स चिरं वसेत् ॥ २७ ॥ मठप्रदानात्स्वर्लोके शक्रलोके वसेत्ततः ॥ प्रपादानाद्वारुणेन संक्रमेण वसेद्दिवि ॥ २८ ॥ इष्टकासेतुकारी च गोलोके मार्गकृद्वसाम् ॥ नियमव्रतकृद्विष्णुः कृच्छ्रकृत्सर्वपापहा ॥ २९ ॥ गृहं दत्त्वा वसेत्स्वर्गे यावदाभूतसंप्लवम् ॥ समुदायप्रतिष्ठेष्टा शिवादीनां गृहात्मनाम् ॥ ३० ॥ इत्यादिमहापुराणे आग्नेये साधारणप्रतिष्ठाकथनं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥ अथ जीर्णोद्धारविधानम् ॥ श्रीभगवानुवाच ॥ जीर्णोद्धारविधिं वक्ष्ये भूषितां स्नपयेद्गुरुः ॥ अचलां विन्यसेद्गेहे अतिजीर्णां परित्यजेत् ॥ १ ॥ व्यङ्गां भग्नां च च शैलाढ्यां न्यसेदन्यां च पूर्ववत् ॥ संहारविधिना तत्र तत्त्वान्संहृत्य देशिकः ॥ २ ॥ सहस्रं नारसिंहेन हुत्वा तामुद्धरेद्गुरुः ॥ दारवीं दाहयेद्वह्नौ शैलजां प्रक्षिपेज्जले ॥ ३ ॥ धातुजां रत्नजां वापि अगाधे वा जलेऽम्बुधौ ॥ यानमारोप्य जीर्णाङ्गं छाद्य वस्त्रादिना नयेत् ॥ ४ ॥ वादित्रैः प्रक्षिपेत्तोये गुरवे दक्षिणां ददेत् ॥ यत्प्रमाणा च यद्द्रव्या तन्मानां स्थापयेद्दिने ॥ कूपवापीतडागादेर्जीर्णोद्धारे महाफलम् ॥ ५ ॥ इत्यादिमहापुराणे आग्नेये जीर्णोद्धारविधानकथनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

अथ यात्रोत्सवविधिकथनम् ॥ श्रीभगवानुवाच ॥ वक्ष्ये विधिं चोत्सवस्य स्थापिते तु सुरे चरेत् ॥ तस्मिन्नब्दे चैकरात्रं त्रिरात्रं चाष्टरात्रकम् ॥ १ ॥ उत्सवेन विना यस्मात्स्थापनं निष्फलं भवेत् ॥ अयने विषुवे चापि शयनोपवने गृहे ॥ २ ॥ कारकस्यानुकूले वा यात्रां देवस्य कारयेत् ॥ मङ्गलाङ्कुररोपैस्तु गीतनृत्यादिवाद्यकैः ॥ ३ ॥ शरावघटिकापालीस्त्वङ्कुरारोहणे हिताः ॥ यवाञ्छालींस्तिलान्मुद्गान्गोधूमान्सितसर्षपान् ॥ ४ ॥ कुलत्थमाषनिष्पावान्क्षालयित्वा तु वापयेत् ॥ पूर्वादौ च बलिं दद्याद्भ्रमन्दीपैः पुरं निशि ॥५॥ इन्द्रादेः कुमुदादेश्च सर्वभूतेभ्य एव च ॥ अनुगच्छन्ति ते तत्र प्रतिरूपधराः पुनः ॥६॥ पदे पदेऽश्वमेधस्य फलं तेषां न संशयः ॥ आगत्य देवतागारं देवं विज्ञापयेद्गुरुः ॥ ७ ॥ तीर्थयात्रा तु या देव श्वः कर्त्तव्या सुरोत्तम ॥ तस्यारम्भमनुज्ञातुमर्हसे देव सर्वथा ॥ ८ ॥ देवमेवं तु विज्ञाप्य ततः कर्म्म समारभेत् ॥ प्ररोहघटिकाभ्यां तु वेदिकां भूषितां व्रजेत् ॥ ९ ॥ चतुःस्तम्भां तु तन्मध्ये स्वस्तिके प्रतिमां न्यसेत् ॥ काम्यार्थां लेख्यचित्रेषु स्थाप्य तत्राधिवासयेत् ॥ १० ॥ वैष्णवैः सह कुर्वीत घृताभ्यङ्गं तु मूलतः ॥ घृतधाराभिषेकं वा सकलां शर्वरीं बुधः ॥ ११ ॥ दर्पणं दर्श्य नीराजं गीतवाद्यैश्च मंगलम् ॥ व्यजनं पूजनं दीपं गन्धपुष्पादिभिर्यजेत् ॥ १२ ॥ हरिद्रामुद्गकाश्मीरशुक्लचूर्णादि मूर्द्धनि ॥ प्रतिमायाश्च भक्तानां सर्वतीर्थफलं धृते ॥ १३ ॥ स्नापयित्वा समभ्यर्च्य यात्राबिम्बं रथे स्थितम् ॥ नयेद्गुरुर्गीतनादैश्छत्राद्ये राष्ट्रपालिकाम् ॥ १४ ॥ निम्नगा योजनादर्वाक् तत्र वेदीं तु कारयेत् ॥ वाहनादवतार्य्यैनां तस्यां वेद्यां निवेशयेत् ॥ १५ ॥ चरुं वै श्रपयेत्तत्र पायसं होमयेत्ततः ॥ अब्लिङ्गैर्वैदिकैर्मन्त्रैस्तीर्थानावाहयेत्ततः ॥ १६ ॥ आपो हिष्ठोपनिषदैः पूजयेदर्घ्यमुख्यकैः ॥ पुनर्देवं समादाय तोये कुर्य्यादघमर्षणम् ॥ १७ ॥ स्नायान्महाजनैर्विप्रैर्वेद्यामुत्तार्य्य तं न्यसेत् ॥ पूजयित्वा तदह्ना च प्रासादं तु नयेत्ततः ॥ पूजयेत्स्नापकस्थं तु गुरुः स्याद्भुक्तिमुक्तिकृत् ॥ १८ ॥ इत्यादिमहापुराणे आग्नेये देवयात्रोत्सवकथनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ अथ स्नानविधानम् ॥ अग्निरुवाच ॥ ब्रह्मन् शृणु प्रवक्ष्यामि स्नपनोत्सवविस्तरम् ॥ प्रासादस्याग्रतः कुंभान्मण्डपे मण्डले न्यसेत् ॥ १ ॥ कुर्याद्ध्यानार्चनं होमं हरेरादौ च कर्मसु ॥ सहस्रं वा शतं वापि होमयेत्पूर्णया सह ॥ २ ॥ स्नानद्रव्याण्यथाहृत्य कलशांश्चापि





विन्यसेत् ॥ अधिवास्य सूत्रकण्ठान्धारयेन्मण्डले घटान् ॥ ३ ॥ चतुरस्रं पुरं कृत्वा रुद्रैस्तं प्रविभाजयेत् ॥ मध्येन तु चरुं स्थाप्य पार्श्वे पंक्तिं प्रमार्जयेत् ॥ ४ ॥ शालिचूर्णादिनापूर्य पूर्वादिनवकेषु च ॥ कुंभमुद्रां ततो बद्धा घटं तत्रानयेद्बुधः ॥ ५ ॥ पुण्डरीकाक्षमंत्रेण दर्भास्तांस्तु विसर्जयेत् ॥ अद्भिः पूर्णं सर्वरत्नयुक्तं मध्ये न्यसेद्घटम् ॥ ६ ॥ यवव्रीहितिलांश्चैव नीवारश्यामकान् क्रमात् ॥ कुलित्थमुद्गसिद्धार्थान्मुक्ताऽन्यानष्टदिक्षु च ॥ ७ ॥ ऐन्द्रे तु नवके मध्ये घृतपूर्णं घटं न्यसेत् ॥ पलाशाश्वत्थन्यग्रोधबिल्वोदुंबरक्षीरिणाम् ॥ ८ ॥ जंबूशमीकपित्थानां त्वक्कषायैर्घटाष्टकम् ॥ आग्नेयनवके मध्ये मधुपूर्णं घटं न्यसेत् ॥ ९॥ गोशृङ्गनगगङ्गाम्बुगजेन्द्रदर्शनेषु च ॥ तीर्थक्षेत्रखलेष्वष्टौ मृत्तिकाः स्युर्घटाष्टके ॥ १० ॥ याम्ये तु नवके मध्ये तिलतैलघटं न्यसेत् ॥ नारङ्गमथ जम्बीरं खर्जूरं मृद्विकां क्रमात् ॥ ११ ॥ नारिकेलं न्यसेत्पूगं दाडिमं पनसं फलम् ॥ नैर्ऋते नवके मध्ये क्षीरपूर्णं घटं न्यसेत् ॥ १२ ॥ कुंकुमं नागपुष्पं च चंपकं मालतीं क्रमात् ॥ मल्लिकामथ पुन्नागं करवीरं महोत्पलम् ॥ १३॥ पुष्पाणि चान्ये नवके मध्ये वै नारिकेलकम् ॥ नादेयमथ सामुद्रं सारसं कौपमेव च ॥ १४॥ वर्षजं हिमतोयं च नैर्झरं गाङ्गमेव च ॥ उदकान्यथ वायव्ये नवके कदलीफलम् ॥ १५॥ सहदेवीं कुमारीं च सिंहीं व्याघ्रीं तथाऽमृताम् ॥ विष्णुपर्णीं शतशिवां वचां दिव्यौषधीर्न्यसेत् ॥ १६॥ पूर्वादौ सौम्यनवके मध्ये दधिघटं न्यसेत् ॥ पत्रमेलां त्वचं कुष्ठं बालकं चन्दनद्वयम् ॥ १७॥ लतां कस्तूरिकां चैव कृष्णागरुमनुक्रमात्॥ सिद्धद्रव्याणि पूर्वादौ शान्तितोयमथैकतः॥ १८॥ चन्द्रतारं क्रमाच्छुक्लं गिरिसारं त्रपुं न्यसेत् ॥ घनसारं तथा शीर्षं पूर्वादौ रत्नमेव च ॥ १९॥ घृतेनाभ्यज्य चोद्वर्त्य स्नपयेन्मूलमन्त्रतः ॥ गन्धाद्यैः पूजयेद्ब्रह्मो हुत्वा पूर्णाहुतिं चरेत् ॥ २०॥ बलिं च सर्वभूतेभ्यो भोजयेद्दत्तदक्षिणः ॥ देवैश्च मुनिभिर्भूपैर्देवं संस्थाप्य चेश्वराः ॥ २१॥ बभूवुः स्थापयित्वेत्थं स्नपनोत्सवकं चरेत् ॥ अष्टोत्तरसहस्रेण घटानां सर्वभाग्भवेत् ॥ २२ ॥ यज्ञावभृथस्नानेन पूर्णसंस्नापनं कृतम् ॥ गौरीलक्ष्मीविवाहादि चोत्सवं स्नानपूर्वकम् ॥ २३ ॥ इत्यादिमहापुराणे आग्नेये यज्ञावभृथस्नानं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ अथ वृक्षादिप्रतिष्ठाकथनम् ॥ श्रीभगवानुवाच ॥ प्रतिष्ठां पादपानां च वक्ष्येऽहं भुक्तिमुक्तिदाम् ॥ सर्वौषध्युदकैर्लिप्तान्पिष्टातकविभूषितान् ॥ १ ॥ वृक्षान्माल्यैरलङ्कृत्य

वासोभिरभिवेष्टयेत् ॥ सूच्या सौवर्णया कार्य्यं सर्वेषां कर्णवेधनम् ॥२॥ हेमशलाकयाऽञ्जनं च वेद्यां तु फलसप्तकम् ॥ अधिवासयेच्च प्रत्येकं घटान्बलिनिवेदनम् ॥३॥ इन्द्रादेरधिवासोऽथ होमः कार्य्यो वनस्पतेः ॥ वृक्षमध्यादुत्सृजेद्गां ततोऽभिषेकमंत्रतः ॥४॥ ऋग्यजुःसाममन्त्रैश्च वारुणैर्मंगलारवैः ॥ वृक्षवेदिककुम्भैश्च स्नपनं द्विजपुंगवाः ॥ ५ ॥ तरूणां यजमानस्य कुर्युश्च यजमानकः॥ भूषितो दक्षिणां दद्याद्गोभूभूषणवस्त्रकम् ॥ ६ ॥ क्षीरेण भोजनं दद्याद्यावद्दिनचतुष्टयम् ॥ होमस्तिलाद्यैः कार्य्यस्तु पलाशसमिधैस्तथा ॥ ७ ॥ आचार्य्ये द्विगुणं दद्यात्पूर्ववन्मण्डपादिकम् ॥ पापनाशः परा सिद्धिर्वृक्षारामप्रतिष्ठया ॥८॥ स्कन्दायेशो यथा प्राह प्रतिष्ठाद्यं तथा शृणु ॥ सूर्य्येशगणशक्त्यादेः परिवारस्य वै हरेः ॥ ९ ॥ इत्यादिमहापुराणे आग्नेये पादपारामप्रतिष्ठाकथनं नाम सप्ततितमोऽध्यायः ॥ ७० ॥ अथ गणेशपूजाविधिः ॥ ईश्वर उवाच ॥ गणपूजां प्रवक्ष्यामि निर्विघ्नामखिलार्थदाम् ॥ गणाय स्वाहा हृदयमेकदंष्ट्राय वै शिरः ॥ १ ॥ गजकर्णिने च शिखा गजवक्त्राय वर्म च ॥ महोदराय स्वदन्तहस्तायाक्षि तथाऽस्त्रकम् ॥ २ ॥ गणो गुरुः पादुका च शक्त्यनन्तौ च धर्मकः ॥ मुख्यास्थिमण्डलं चाधश्चोर्ध्वच्छदनमर्चयेत् ॥ ३ ॥ पद्मकर्णिकबीजं च ज्वलिनीं नन्दयाऽर्चयेत् ॥ सूर्य्येशा कामरूपा च उदया कामवर्तिनी ॥ ४ ॥ सत्या च विघ्ननाशा च आसनं गन्धमृत्तिका ॥ यं शोषो रं च दहनं प्लवो लं वं तथाऽमृतम् ॥ ५ ॥ लम्बोदराय विद्महे महोदराय धीमहि तन्नो दन्तिः प्रचोदयात् ॥ गणपतिर्गणाधिपो गणेशो गणनायकः ॥ गणक्रीडो वक्रतुण्ड एकदंष्ट्रो महोदरः ॥६ ॥ गजवक्त्रो लम्बकुक्षिर्विकटो विघ्ननाशनः ॥ धूम्रवर्णो महेन्द्राद्याः पूज्या गणपतेः स्मृताः ॥ ७ ॥ इत्यादिमहापुराणे आग्नेये विनायकपूजाकथनं नामैकसप्ततितमोऽध्यायः ॥७१॥ अथ स्नानविशेषादिकथनम् ॥ ईश्वर उवाच ॥ वक्ष्यामि स्कन्द नित्यर्थि स्नानं पूजां प्रतिष्ठया ॥ खात्वाऽसिना समुद्धृत्य मृदमष्टाङ्गुलां ततः ॥ १ ॥ सर्वात्मना समुद्धृत्य पुनस्तेनैव पूरयेत् ॥ शिरसा पयसस्तीरे निधायास्त्रेण शोधयेत् ॥ २ ॥ तृणानि शिखयोद्धृत्य वर्म्मणा विभजेत्त्रिधा ॥ एकया नाभिपादान्तं प्रक्षाल्य पुनरन्यया ॥ ३ ॥ अस्त्राभिलब्धयालभ्य दीप्तया सर्वविग्रहम् ॥ निरुध्याक्षाणि पाणिभ्यां प्राणान्संयम्य वारिणि ॥ ४ ॥ निमज्यासीत हृद्यस्त्रं स्मरन्कालानलप्रभम् ॥ मलस्नानं





विधायेत्थं समुत्थाय जलान्तरात् ॥ ५ ॥ अथ सन्ध्यामुपास्याथ विधिस्नानं समाचरेत् ॥ सारस्वतादितीर्थानामेकमङ्कुशमुद्रया
॥ ६ ॥ हृदाकृष्य तथा स्थाप्य पुनः संहारमुद्रया ॥ शेषं मृद्भागमादाय प्रविश्यानाभि वारिणि ॥ ७॥ वामपाणितले कुर्याद्भागत्र-
यमुदङ्मुखः ॥ अङ्गैर्दक्षिणमेकाद्यं पूर्वमन्त्रेण सप्तधा ॥ ८ ॥ शिवेन दशधा सौम्यं जपेद्भागत्रयं क्रमात् ॥ सर्वादिक्षु क्षिपेत्पूर्वं हुंफ-
डन्तशरात्मना ॥ ९ ॥ कुर्याच्छिवेन सौम्येन शिवतीर्थं भुजक्रमात् ॥ सर्वाङ्गमङ्गजप्तेन मूर्द्धादिचरणावधि ॥ १० ॥ दक्षिणेन
समालभ्य पठन्नङ्गचतुष्टयम् ॥ पिधाय खानि सर्वाणि सम्मुखीकरणेन च ॥ ११॥ शिवं स्मरन्निमज्जेत हरिं गङ्गेति वा स्मरन् ॥ वौष-
डन्तषडङ्गेन के कुर्यादभिषेचनम् ॥१२॥ कुम्भपात्रेण रक्षार्थं पूर्वादौ निक्षिपेज्जलम् ॥ स्नात्वा राजोपचारेण सुगन्धामलकादिभिः
॥१३॥ स्नात्वा चोत्तीर्य तत्तीर्थं संहारिण्योपसंहरेत् ॥ अथातो विधिशुद्धेन संहितामन्त्रितेन च॥ १४॥ निवृत्त्यादिविशुद्धेन भस्मना
स्नानमाचरेत् ॥ शिरस्तः पादपर्यन्तं हुंफडन्तशरात्मना ॥ १५ ॥ तेन कृत्वा मलस्नानं विधिस्नानं समाचरेत् ॥ ते पतत्पुरुषा घोर
गुह्यकाजातसञ्चरैः ॥ १६ ॥ क्रमेणोद्धूनयेन्मूर्ध्नि वक्त्रहृद्गुह्यविग्रहान् ॥ सन्ध्यात्रये निशीथे च वर्षापूर्वावसानयोः ॥ १७ ॥ सुप्त्वा
भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम् ॥ स्त्रियं नपुंसकं शूद्रं बिडालशशमूषिकम् ॥ १८ ॥ स्नानमाग्नेयकं स्पृष्ट्वाशुचावुद्धू-
लकं चरेत् ॥ सूर्य्यांशुवर्षसम्पर्कैः प्राङ्मुखेनोर्ध्वबाहुना ॥ १९ ॥ माहेन्द्रं स्नानमैशेन कार्यं सप्तपदावधि ॥ गोसङ्घमध्यगः
कुर्यात्खुरोत्खातकरेणुभिः ॥ २० ॥ पावनं नवमन्त्रेण स्नानं तद्धर्मणाऽथवा ॥ सद्योजातादिभिर्मन्त्रैरम्भोभिरभिषेचनम् ॥ २१ ॥
मन्त्रस्नानं भवेदेवं वारुणाग्नेययोरपि ॥ मनसा मूलमन्त्रेण प्राणायामपुरःसरम् ॥२२॥ कुर्वीत मानसं स्नानं सर्वत्र विहितं च यत् ॥
वैष्णवादौ च तन्मन्त्रैरेवं स्नानादि कारयेत् ॥२३॥ सन्ध्याविधिं प्रवक्ष्यामि मन्त्रैर्भिन्नैः समं गुह ॥ संवीक्ष्य त्रिः पिबेदम्बु ब्रह्मती-
र्थेन शङ्करैः ॥ २४ ॥ स्वधान्तैरात्मतत्त्वाद्यैस्ततः खानि स्पृशेन्मृदा ॥ शकलीकरणं कृत्वा प्राणायामेन संस्थितः ॥ २५ ॥ त्रिः
समावर्तयेन्मन्त्री मनसा शिवसंहिताम् ॥ आचम्य न्यस्य सन्ध्यां च ब्राह्मीं प्रातः स्मरेन्नरः ॥ २६ ॥ हंसपद्मासनां रक्तां चतुर्वक्त्रां
चतुर्भुजाम् ॥ प्रस्कन्दमालिनीं दक्षे वामे दण्डं कमण्डलुम् ॥ २७॥ तार्क्ष्ये पद्मासनां ध्यायेन्मध्याह्ने वैष्णवीं सिताम् ॥ शङ्खचक-

धरां वामे दक्षिणे सगदाभयाम् ॥ २८ ॥ रौद्रीं ध्यायेद्वृषाब्जस्थां त्रिनेत्रां शशिभूषिताम् ॥ त्रिशूलाक्षधरां दक्षे वामे साभयशक्तिकाम् ॥ २९ ॥ साक्षिणीं कर्मणां सन्ध्यामात्मानं तत्प्रभानुगम् ॥ चतुर्थी ज्ञानिनः सन्ध्या निशीथादौ विभाव्यते ॥ ३० ॥ हृद्बिन्दुब्रह्मरन्ध्रेषु अरूपा तु परे स्थिता ॥ शिवबोधपरा या तु सा सन्ध्या परमोच्यते ॥ ३१ ॥ पैत्र्यं मूले प्रदेशिन्या कनिष्ठाया प्रजापतेः ॥ ब्राह्ममङ्गुष्ठमूलस्थं तीर्थं दैवं कराग्रतः ॥३२॥ सव्यपाणितले वह्नेस्तीर्थं सोमस्य वामतः ॥ ऋषीणां तु समग्रेषु अङ्गुलीपर्वसन्धिषु ॥३३॥ ततः शिवात्मकैर्मन्त्रैः कृत्वा तीर्थं शिवात्मकम् ॥ मार्जनं संहितामन्त्रैस्तत्तोयेन समाचरेत् ॥ ३४ ॥ वामपाणिपतत्तोये योजनं सव्यपाणिना ॥ उत्तमाङ्गे क्रमान्मन्त्रैर्मार्जनं समुदाहृतम् ॥३५॥ नीत्वा तदुपनासाग्रं दक्षपाणिपुटस्थितम् ॥ बोधरूपं सितं तोयं वाममाकृष्य स्तम्भयेत् ॥ ३६ ॥ तत्पापं कज्जलाभासं पिङ्गयारिच्य मुष्टिना ॥ क्षिपेद्वज्रशिलायां तु तद्भवेदघमर्षणम् ॥ ३७ ॥ स्वाहान्तशिवमन्त्रेण कुशपुष्पाक्षतान्वितम् ॥ शिवायार्घ्याञ्जलिं दत्त्वा गायत्रीं शक्तितो जपेत् ॥ ३८ ॥ तर्पणं सम्प्रवक्ष्यामि देवतीर्थेन मन्त्रकात् ॥ तर्पयेद्वै शिवायेति स्वाहान्यान्स्वाहया युतान् ॥ ३९ ॥ ह्रां हृदयाय ह्रीं शिरसे ह्रूं शिखायै ह्रैं कवचाय ॥ अस्त्रायाष्टौ देवगणान्हृदादित्येभ्य एव च ॥ ४० ॥ ह्रां वसुभ्योऽथ रुद्रेभ्यो विश्वेभ्यश्चैव मरुद्भ्यः ॥ भृगुभ्यो ह्रामङ्गिरोभ्य ऋषीन्कण्ठोपवीत्यथ ॥ ४१ ॥ अत्रयेऽथ वसिष्ठाय नमश्चाथ पुलस्तये ॥ क्रतवे भारद्वाजाय विश्वामित्राय वै नमः ॥ ४२ ॥ प्रचेतसे मनुष्यांश्च सनकाय वषट् तथा ॥ ह्रां सनन्दाय वषट् सनातनाय वै वषट् ॥ ४३ ॥ सनत्कुमाराय वषट् कपिलाय तथा वषट् ॥ पञ्चशिखाय ऋभवे संलग्नकरमूलतः ॥ ४४ ॥ सर्वेभ्यो भूतेभ्यो वषड्भूतान्देवपितॄनथ ॥ दक्षस्कन्धोपवीती च कुशमूलाग्रतस्तिलैः ॥ ४५ ॥ कव्यवाहानलायाथ सोमाय च यमाय च ॥ अर्यम्णे चाग्निसोमाय बर्हिषद्भ्यः स्वधायुतान् ॥ ४६ ॥ आज्यपाय च सोमाय विशेषसुरवत्पितॄन् ॥ ओं ह्रामीशानाय पित्रे स्वधा वदेत्पितामहे ॥ ४७ ॥ शान्तप्रपितामहाय तथा प्रेतपितॄंस्तथा ॥ पितृभ्यः पितामहेभ्यः स्वधाऽथ प्रपितामहे ॥ ४८ ॥ वृद्धप्रपितामहेभ्यो मातृभ्यश्च स्वधा तथा ॥ ह्रां मातामहेभ्यः स्वधा ह्रां प्रमातामहेभ्यश्च ॥ ४९ ॥ वृद्धप्रमातामहेभ्यः सर्वेभ्यः पितृभ्य-





स्तथा ॥ सर्वेभ्यः स्वधा ज्ञातिभ्यः सर्वाचार्येभ्य एव च ॥ दिशां दिक्पतिसिद्धानां मातॄणां ग्रहरक्षसाम् ॥ ५० ॥ इत्यादिमहा-
पुराणे आग्नेये स्नानतर्पणादिविधिर्नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ अथ सूर्यपूजाविधिः ॥ ईश्वर उवाच ॥ वक्ष्ये सूर्य्यार्चनं
स्कन्द कराङ्गन्यासपूर्वकम् ॥ अहं तेजोमयः सूर्य इति ध्यात्वाऽर्घ्यमर्चयेत् ॥ १ ॥ पूरयेद्रक्तवर्णेन ललाटाकृष्टबिन्दुना ॥ तं
सम्पूज्य रवेरङ्गैः कृत्वा रक्षावगुण्ठनम् ॥ २ ॥ सम्प्रोक्ष्य तज्जलैर्द्रव्यं पूर्वस्यां भानुमर्चयेत् ॥ ओं अं हृद्बीजादि सर्वत्र पूजनं
दण्डिपिङ्गलौ ॥ ३ ॥ द्वारि दक्षे वामपार्श्वे ईशाने अं गणाय च ॥ अग्नौ गुरुं पीठमध्ये प्रभूतं चासनं यजेत् ॥ ४ ॥ अग्न्यादौ
विमलं सारमाराध्यं परमं सुखम् ॥ सितरक्तपीतनीलवर्णान्सिंहनिभान्यजेत् ॥ ५ ॥ पद्ममध्ये रां च दीप्तां रीं सूक्ष्मां रुं जयां
क्रमात् ॥ रूं भद्रां रें विभूतींश्च विमलां रैममोघया ॥ ६ ॥ रों रौं च विद्युतां शक्तिं पूर्वाद्याः सर्वतोमुखाः ॥ रं मध्ये अर्कासनं
स्यात्सूर्य्यमूर्त्तिं षडक्षरम् ॥ ७ ॥ ओं हं खं खोलकायेति यजेदावाह्य भास्करम् ॥ ललाटाकृष्टमञ्जल्यां ध्यात्वा रक्तं न्यसेद्रविम्
॥ ८ ॥ ह्रां ह्रीं सः सूर्य्याय नमो मुद्रयावाहनादिकम् ॥ विधाय प्रीतये बिम्बमुद्रां गन्धादिकं ददेत् ॥ ९ ॥ पद्ममुद्रां बिल्वमुद्रां
प्रदर्श्याग्नौ हृदीरितम् ॥ ओं आं हृदयाय नमः अर्काय शिरसे तथा ॥ १० ॥ भूर्भुवः स्वः सुरेशाय शिखायै नैर्ऋते यजेत् ॥
हुं कवचाय वायव्ये ह्रां नेत्रायेति मध्यतः ॥ ११ ॥ वः अस्त्रायेति पूर्वादौ ततो मुद्राः प्रदर्शयेत् ॥ धेनुमुद्रा हृदादीनां गोवि-
षाणा च नेत्रयोः ॥ १२ ॥ अस्त्रस्य त्रासनी योज्या ग्रहाणां च नमस्क्रिया ॥ सीं सोमं बुं बुधं बृं च जीवं भं भार्गवं यजेत् ॥ १३ ॥
दले पूर्वादिकेऽग्न्यादौ अं भौमं शं शनैश्चरम् ॥ रं राहुं कें केतवे च गन्धाद्यैश्च खपोल्कया ॥ १४ ॥ मूलं जप्त्वार्घ्यपात्राम्बु दत्त्वा
सूर्य्याय संस्तुतिः ॥ नत्वा पराङ्मुखं चार्क क्षमस्वेति ततो वदेत् ॥ १५ ॥ शराणुना फडन्तेन समाहृत्याणुसंहतिम् ॥ हृत्पद्मे
शिवसूर्येति संहारिण्योपसंस्कृतिम् ॥ १६ ॥ योजयेत्तेजश्चण्डाय रविनिर्म्माल्यमर्प्पयेत् ॥ अभ्यर्च्येश जपाद्ध्यानाद्धोमा-
त्सर्वं रवेर्भवेत् ॥ १७ ॥ इत्यादिमहापुराणे आग्नेये सूर्य्यपूजाविधिकथनं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ शिवपूजाविधिः ॥
ईश्वर उवाच ॥ शिवपूजां प्रवक्ष्यामि आचम्य प्रणवार्घ्यवान् ॥ द्वारमस्त्राम्बुना प्रोक्ष्य होमादिद्वारपान्यजेत् ॥ १ ॥ गणं

सरस्वतीं लक्ष्मीं मूर्ध्वोदुम्बरके यजेत् ॥ नन्दिगङ्गे दक्षिणेऽथ स्थिते वामगते यजेत् ॥ २ ॥ महाकालं च यमुनां दिव्यदृष्टि-
निपातितः ॥ उत्सार्य दिव्यान्विघ्नांश्च पुष्पक्षेपान्तारिक्षगान् ॥ ३ ॥ दक्षपार्ष्णित्रिभिर्घातैर्भूमिष्ठान्यागमन्दिरम् ॥ देहलीं लंघये-
द्वामशाखामाश्रित्य वै विशेत् ॥ ४ ॥ प्रविश्य दक्षपादेन विन्यस्यास्त्रमुदुम्बरे ॥ ओं हां वास्त्वधिपतये ब्रह्मणे मध्यतो यजेत्
॥ ५ ॥ निरीक्षणादिभिः शस्त्रैः शुद्धानादाय गड्डुकान् ॥ लब्धानुज्ञः शिवान्मौनी गङ्गादिकमनुव्रजेत् ॥ ६ ॥ पवित्राङ्गः प्रजप्तेन
वस्त्रपूतेन वारिणा ॥ पूरयेदम्बुधौ तांस्तान्गायत्र्या हृदयेन वा ॥ ७ ॥ गन्धकाक्षतपुष्पादिसर्व्वद्रव्यसमुच्चयम् ॥ सन्निधीकृत्य
पूजार्थं भूतशुद्ध्यादि कारयेत् ॥ ८ ॥ देवदक्षे ततो न्यस्य सौम्यास्यश्च शरीरतः ॥ संहारमुद्रयादाय मूर्ध्नि मन्त्रेण धारयेत् ॥ ९ ॥
भोग्यकर्म्मोपभोगार्थं पाणिकच्छुपिकाख्यया ॥ हृदम्बुजे निजात्मानं द्वादशान्तपदेऽथवा ॥ १० ॥ शोधयेत्पञ्चभूतानि सञ्चिन्त्य
सुषिरं तनौ ॥ चरणाङ्गुष्ठयोर्युग्मान्सुषिरान्तर्बहिः स्मरेत् ॥११॥ शक्तिं हृद्व्यापिनीं पश्चाद्धूङ्कारे पावकप्रभे ॥ रन्ध्रमध्यास्थिते कृत्वा
प्राणरोधं हि चिन्तकः ॥१२॥ निवेशयेद्रेचकान्ते फडन्तेनाथ तेन च ॥ हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रे विभिद्य च ॥ १३ ॥ ग्रन्थीन्नि-
र्भिद्य हूङ्कारं मूर्ध्नि विन्यस्य जीवनम् ॥ सम्पुटं हृदयेनाथ पूरकाहितचेतनम् ॥ १४ ॥ हूं शिखोपरि विन्यस्य शुद्धं बिन्द्वात्मकं
स्मरेत् ॥ कृत्वाथ कुम्भकं शम्भावेकोद्घातेन योजयेत् ॥१५॥ रेचकेन बीजवृत्त्या शिवे लीनोऽथ शोधयेत् ॥ प्रतिलोमं स्वदेहे
तु बिन्द्वन्तं तत्र बिन्दुकम् ॥ १६ ॥ लयं नीत्वा महीवातौ जलवह्नी परस्परम् ॥ द्वौ द्वौ साध्यौ तथाकाशमविरोधेन तच्छृणु ॥१७॥
पार्थिवं मण्डलं पीतं कठिनं वज्रलाञ्छितम् ॥ ह्रौमित्यात्मीयबीजेन तन्निवृत्तिकलामयम् ॥ १८ ॥ पादादारभ्य मूर्द्धान्त विचिन्त्य
चतुरस्रकम् ॥ उद्घातपञ्चकेनैव वायुभूतं विचिन्तयेत् ॥ १९ ॥ अर्द्धचन्द्रं द्रवं सोम्यं शुभ्रमम्भोजलाञ्छितम् ॥ ह्रीमित्यनेन बीजेन
प्रतिष्ठारूपतां गतम् ॥ २० ॥ संयुक्तं राममंत्रेण पुरुषान्तमकारणम् ॥ अर्घ्यं चतुर्भिरुद्घातैर्वाह्निभूतं विशोधयेत् ॥ २१ ॥ आग्नेयं
मण्डलं त्र्यस्रं रक्तं स्वस्तिकलाञ्छितम् ॥ हूमित्यनेन बीजेन विद्यारूपं विभावयेत् ॥ २२ ॥ घोराणुत्रिभिरुद्घातैर्जलभूतं
विशोधयेत ॥ षडस्रं मण्डलं वायोर्बिन्दुभिः षड्भिरङ्कितम् ॥ २३ ॥ कृष्णं होमिति बीजेन जातं शान्तिकलामयम् ॥ सञ्चि-





स्यौद्घातयुग्मेन पृथ्वीभूतं विशोधयेत् ॥२४॥ नभो बिन्दुमयं वृत्तं बिन्दुशक्तिविभूषितम् ॥ व्योमाकारं सुवृत्तं च शुद्धस्फटिकनि-
र्मलम् ॥ २५ ॥ हौंकारेण फडन्तेन शान्त्यतीतकलामयम् ॥ ध्यात्वैकोद्घातयोगेन सुविशुद्धं विभावयेत् ॥ २६ ॥ आप्याय-
येत्ततः सर्वं मूलेनामृतवर्षिणा ॥ आधाराख्यमनन्तं च धर्मज्ञानादिपङ्कजम् ॥ २७ ॥ हृदासनमिदं ध्यात्वा मूर्त्तिमावाह-
येत्ततः ॥ सृष्ट्वा शिवमयं तस्यामात्मानं द्वादशान्ततः ॥ २८ ॥ अथ तां शक्तिमन्त्रेण वौषडन्तेन सर्वतः ॥ दिव्यामृतेन संप्लाव्य
कुर्वीत सकलीकृतम् ॥ २९ ॥ हृदयादिकरान्तेषु कनिष्ठाद्यङ्गुलीषु च ॥ हृदादिमन्त्राविन्यासः सकलीकरणं मतम्
॥ ३० ॥ अस्त्रेण रक्ष प्राकारं तन्मंत्रेणाथ तद्बहिः ॥ शक्तिजालमधश्चोर्ध्वं महामुद्रां प्रदर्शयेत् ॥ ३१ ॥ आपादमस्तकं याव-
द्भावपुष्पैः शिवं हृदि ॥ पद्मे यजेत्पूरकेण आकृष्टामृतसद्धृतैः ॥ ३२ ॥ शिवमन्त्रैर्नाभिकुण्डे तर्पयेत शिवानलम् ॥
ललाटे बिन्दुरूपं च चिन्तयेच्छुभविग्रहम् ॥ ३३ ॥ एकं स्वर्णादिपात्राणां पात्रमस्त्राम्बुशोधितम् ॥ बिन्दुप्रसूतपी-
यूषरूपतोयाक्षतादिना ॥ ३४ ॥ हृदापूर्य्य षडङ्गेन पूजयित्वाऽभिमन्त्रयेत् ॥ संरक्ष्य हेतिमन्त्रेण कवचेन विगुण्ठयेत्
॥ ३५ ॥ रचयित्वाऽर्घ्यमष्टाङ्गं सेचयेद्धेनुमुद्रया ॥ अभिषिञ्चेदथात्मानं मूर्ध्नि तत्तोयबिन्दुना ॥ ३६ ॥ तत्रस्थं यागसम्भारं
प्रोक्षयेदस्त्रवारिणा ॥ अभिमन्त्र्य हृदा पिण्डैस्तनुत्राणेन वेष्टयेत् ॥ ३७ ॥ दर्शयित्वाऽमृतां मुद्रां पुष्पं दत्त्वा निजासने ॥
विधाय तिलकं मूर्ध्नि पुष्पं मूलेन योजयेत् ॥ ३८ ॥ स्नाने देवार्चने होमे भोजने यागयोगयोः ॥ आवश्यके जपे धीरः सदा
वाचंयमो भवेत् ॥ ३९ ॥ नादान्तोच्चारणान्मन्त्रं शोधयित्वा सुसंस्कृतम् ॥ पूजनेऽभ्यर्च्य गायत्र्या सामान्यार्घ्यमुपाहरेत् ॥४०॥
ब्रह्मपञ्चकमावर्त्य माल्यमादाय लिङ्गतः ॥ ऐशान्यां दिशि चण्डाय हृदयेन निवेदयेत् ॥ ४१ ॥ प्रक्षाल्य पिण्डिका लिङ्गे
अस्त्रतोये ततो हृदा ॥ अर्घ्यपात्राम्बुना सिञ्चेदिति लिङ्गविशोधनम् ॥ ४२ ॥ आत्मद्रव्यमन्त्रलिङ्गशुद्धो सर्वान्सुरान् यजेत् ॥ 
वायव्ये गणपतये हां गुरुभ्योऽर्चयेच्छिवे ॥ ४३ ॥ आधारशक्तिमङ्कुरनिभां कूर्म्मोशिलास्थिताम् ॥ यजेद्ब्रह्मशिलारूढं शिवस्या-
नन्तमासनम् ॥ ४४ ॥ विचित्रकेशप्रख्यानमन्योन्यं पृष्ठदर्शिनः ॥ कृतत्रेतादिरूपेण शिवस्यासनपादुकाम् ॥ ४५ ॥ धर्म्मं

ज्ञान च वैराग्ययमैश्वर्य्यं चाग्निदिङ्मुखान् ॥ कर्पूरकुङ्कुमस्वर्णकज्जलाभान्यजेत्क्रमात् ॥ ४६ ॥ पद्मं च कर्णिकामध्ये पूर्वादौ मध्यतो नव ॥ वरदाभयहस्ताश्च शक्तयो धृतचामराः ॥ ४७ ॥ वामा ज्येष्ठा च रौद्री च काली कलविकारणी ॥ बलविकारणी पूज्या बलप्रथमनी क्रमात् ॥ ४८ ॥ ह्रां सर्वभूतदमनी केसराग्रे मनोन्मनी ॥ क्षित्यादिशुद्धविद्यां तु तत्त्वव्यापकमासनम् ॥४९॥ न्यसेत्सिंहासने देवं शुक्लं पञ्चमुखं विभुम् ॥ दशबाहुं च खण्डेन्दुं दधानं दक्षिणैः करैः ॥ ५० ॥ शक्त्यृष्टिशूलखड्गाङ्गवरदं वामकैः करैः ॥ डमरुं बीजपूरं च नीलाब्जं सूत्रमुत्पलम् ॥ ५१ ॥ द्वात्रिंशल्लक्षणोपेतां शैवीं मूर्त्तिं तु मध्यतः ॥ ह्रां हं ह्रां शिवमूर्त्तये स्वप्रकाशं शिवं स्मरन् ॥ ५२ ॥ ब्रह्मादिकारणत्यागान्मन्त्रं नीत्वा शिवास्पदम् ॥ ततो ललाटमध्यस्थं स्फुरत्तारापतिप्रभम् ॥ ५३ ॥ षडङ्गेन समाकीर्णं बिन्दुरूपं परं शिवम् ॥ पुष्पाञ्जलिगतं ध्यात्वा लक्ष्मीमूर्त्तौ निवेशयेत् ॥ ५४ ॥ ॐ ह्रां ह्रौं शिवाय नमः आवाहन्या हृदा ततः ॥ आवाह्य स्थाप्य स्थापन्या सन्निधायान्तिकं शिवम् ॥५५॥ निरोधयेन्निष्ठुरया कालकान्त्या फडन्ततः ॥ विघ्नानुत्सार्य्य विष्टयाथ लिङ्गमुद्रां नमस्कृतिम् ॥ ५६ ॥ हृदावगुण्ठयेत्पश्चादावाहः सन्मुखी ततः ॥ निवेशनं स्थापनं स्यात्सन्निधानं तवास्मि भोः ॥ ५७ ॥ आकर्म्मकाण्डपर्य्यन्तं सान्निध्यो परिक्षयः ॥ स्वभक्तेश्च प्रकाशो यस्तद्भवेदवगुण्ठनम् ॥ ५८ ॥ सकलीकरणं कृत्वा मन्त्रैः षड्भिरथैकताम् ॥ अङ्गानामङ्गिना सार्द्धं विदध्यादमृतीकृतम् ॥ ५९ ॥ चिच्छक्तिर्हृदयं शम्भोः शिव ऐश्वर्य्यमष्टधा ॥ शिखा वशित्वं चाभेद्य तेजः कवचमैश्वरम् ॥ ६० ॥ प्रतापो दुःसहश्चास्त्रमन्तरायापहारकम् ॥ नमः स्वधा च स्वाहा च वौषट् चेति यथाक्रमम् ॥ ६१ ॥ हृत्पुरःसरमुच्चार्य्य पाद्यादीनि निवेदयेत् ॥ पाद्यं पादाम्बुजद्वन्द्वे वक्त्रेष्वाचमनीयकम् ॥ ६२ ॥ अर्घ्यं शिरसि देवस्य दूर्वापुष्पाक्षतानि च ॥ एवं संस्कृत्य संस्कारैर्दशभिः परमेश्वरम् ॥ ६३ ॥ यजेत्पञ्चोपचारेण विधिना कुसुमादिभिः ॥ अभ्युक्ष्योद्वर्त्य निर्मज्य राजिकालवणादिभिः ॥ ६४ ॥ अर्घ्योदबिन्दुपुष्पाद्यैर्गन्धकैः स्नापयेच्छनैः ॥ पयोदधिघृतक्षौद्रशर्करायैरनुक्रमात् ॥ ६५ ॥ ईशादिमन्त्रितैर्द्रव्यैरर्च्य तेषां विपर्य्ययः ॥ तोयधूपान्तरैः सर्वैर्मूलेन स्नपयेच्छिवम् ॥ ६६ ॥ विरूक्ष्य यवचूर्णेन यथेष्टं शीतलैर्जलैः ॥ स्वशक्त्या गन्धतोयेन संस्नाप्य शुचिवाससा ॥ ६७ ॥





निर्म्माल्यार्घ्यं प्रदद्याच्च नोपरि भ्रामयेत्करम् ॥ न शून्यमस्तकं लिङ्गं पुष्पैः कुर्य्यात्ततो ददेत् ॥ ६८ ॥ चन्दनाद्यैः समालभ्य
पुष्पैः प्राच्यं शिवाणुना ॥ धूपभाजनमस्त्रेण प्रोक्ष्याभ्यर्च्य शिवाणुना ॥ ६९ ॥ अस्त्रेण पूजितां घण्टां चादाय गुग्गुलं ददेत् ॥
दद्याचमनं पश्चात्स्वधान्तं हृदयाणुना ॥ ७० ॥ आरार्तिकं समुत्तार्य्य तथैवाचामयेत्पुनः ॥ प्रणम्यादाय देवाज्ञां भोगाङ्गानि
प्रपूजयेत् ॥ ७१ ॥ हृदग्नौ चन्द्रभं चैशे शिवं चामीकरप्रभम् ॥ शिखां रक्तां च नैर्ऋत्ये कृष्णं वर्म्म च वायवे ॥ ७२ ॥ चतुर्वक्त्रं
चतुर्बाहुं दलस्थान्पूजयेदिमान् ॥ दंष्ट्राकरालमप्यस्त्रं पूर्वादौ वज्रसन्निभम् ॥७३॥ मूले हौं शिवाय नमः ॐ हां हूँ हीं हौं शिरश्च ॥
हूं शिखायै हैं वर्म्म इश्चास्त्रं परिवारयुताय च ॥ ७४ ॥ शिवाय दद्यात्पाद्यं च आचामं चार्घ्यमेव च ॥ गन्धं पुष्पं धूपदीपौ नैवे-
द्याचमनीयकम् ॥ ७५ ॥ करोद्वर्त्तनताम्बूलं मुखवासं च दर्पणम् ॥ शिरस्यारोप्य देवस्य दूर्वाक्षतपवित्रकम् ॥ ७६ ॥ मूलम-
ष्टशतं जप्त्वा हृदयेनाभिमन्त्रितम् ॥ चर्म्मणा वेष्टितं खड्गं रक्षितं कुशपुष्पकैः ॥ ७७ ॥ अक्षतैर्मुद्रया युक्तं शिवमुद्भवसञ्ज्ञया ॥
गुह्यातिगुह्यगुप्त्यर्थं गृहाणास्मत्कृतं जपम् ॥ ७८ ॥ सिद्धिर्भवतु मे येन त्वत्प्रसादात्त्वयि स्थिते ॥ भोगी श्लोकं पठित्वाद्यं दक्ष-
हस्तेन शंभवे ॥ ७९ ॥ मूलाणुनार्घ्यतोयेन वरहस्ते निवेदयेत् ॥ यत्किञ्चित्कुर्म्महे देव सदा सुकृतदुष्कृतम् ॥ ८० ॥ तन्मे
शिवपदस्थस्य हूं क्षः क्षेपय शंकर ॥ शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत् ॥ ८१ ॥ शिवो जयति सर्वत्र यः शिवः
सोऽहमेव च ॥ श्लोकद्वयमधीत्यैवं जपं देवाय चार्प्पयेत् ॥ ८२ ॥ शिवाङ्गानां दशांशं च दत्त्वार्घ्यं स्तुतिमाचरेत् ॥ प्रदक्षिणी-
कृत्य नमेत्साष्टाङ्गं चाष्टमूर्त्तये ॥ नत्वा ध्यानादिभिश्चैव यजेच्चित्रेऽनलादिषु ॥ ८३ ॥ इत्यादिमहापुराणे आग्नेये शिवपूजा-
विधिर्नाम चतुःसप्ततितमोऽध्यायः ॥७४॥ अथाग्निस्थापनादिविधिः ॥ ईश्वर उवाच ॥ अर्घपात्रकरो यायादग्न्यागारं सुसंवृतः ॥
यागोपकरणं सर्वं दिव्यदृष्ट्या च कल्पयेत् ॥ १ ॥ उदङ्मुखः कुण्डमीक्षेत्प्रोक्षणं ताडनं कुशैः ॥ विदध्यादस्त्रमन्त्रेण वर्म्मणा-
भ्युक्षणं मतम् ॥ २ ॥ खड्गेन खातमुद्धारं पूरणं समतामपि ॥ कुर्वीत वर्मणा सेकं कुट्टनं तु शरात्मना ॥ ३ ॥ सम्मार्जनं समा- ॥ ५१ ॥
लेपं कलारूपप्रकल्पनम् ॥ त्रिसूत्रीपरिधानं च वर्म्मणाभ्यर्चनं सदा ॥ ४ ॥ रेखात्रयमुदक्कुर्य्यादेकां पूर्वांननामधः ॥

कुशेन च शिवास्त्रेण यद्वा तासां विपर्य्ययः ॥ ५ ॥ वज्रीकरणमन्त्रेण हृदा दर्भैश्चतुष्पथम् ॥ अक्षपात्रं तनुत्रेण
विन्यसेद्विष्टरं हृदा ॥ ६ ॥ हृदा वागीश्वरीं तत्र ईशमावाह्य पूजयेत् ॥ वह्निं सदाश्रयानीतं शुद्धपात्रोपरि स्थितम्
॥ ७ ॥ क्रव्यादांशं परित्यज्य वीक्षणादिविशोधितम् ॥ औदर्यं चैन्दवं भौतमेकीकृत्यानलत्रयम् ॥ ८ ॥ ॐ हूं वह्नि-
चैतन्याय वह्निबीजेन विन्यसेत् ॥ संहितामन्त्रितं वह्निं धेनुमुद्रामृतीकृतम् ॥ ९ ॥ रक्षितं हेतिमन्त्रेण कवचेनावगुण्ठि-
तम् ॥ पूजितं त्रिः परिभ्राम्य कुण्डस्योर्ध्वं प्रदक्षिणम् ॥ १० ॥ शिवबीजमिति ध्यात्वा वागीशागर्भगोचरे ॥ वागीश्वरेण देवेन
क्षिप्यमाणं विभावयेत् ॥ ११ ॥ भूमिष्ठजानुको मन्त्री हृदात्मसम्मुखं क्षिपेत् ॥ ततोऽन्तःस्थितबीजस्य नाभिदेशे समूहनम्
॥ १२ ॥ सम्भृतिं परिधानस्य शौचमाचमनं हृदा ॥ गर्भाग्ने पूजनं कृत्वा तद्रक्षार्थं शराणुना ॥ १३ ॥ बध्नीयाद्दर्भजं देव्याः
कङ्कणं पाणिपल्लवे ॥ गर्भाधानाय संपूज्य सद्योजातेन पावकम् ॥ १४ ॥ ततो हृदयमन्त्रेण जुहुयादाहुतित्रयम् ॥ पुंसवनाय
वामेन तृतीये मासि पूजयेत् ॥ १५ ॥ आहुतित्रितयं दद्याच्छिरसांबुकणान्वितम् ॥ सीमन्तोन्नयनं षष्ठे मासि संपूज्य रूपिणा
॥ १६ ॥ जुहुयादाहुतीस्तिस्रः शिखया शिखयैव तु ॥ वक्त्राङ्गकल्पनां कुर्याद्वक्त्रोद्घाटननिष्कृती ॥ १७ ॥ जातकर्मनृकर्मभ्यां
दशमे मासि पूर्ववत् ॥ वह्निं सन्धुक्ष्य दर्भाद्यैः स्नानं गर्भमलापहम् ॥१८॥ सुवर्णबन्धनं देव्या कृतं ध्यात्वा हृदार्चयेत् ॥ सद्यः-
सूतकनाशाय प्रोक्षयेदस्त्रवारिणा ॥ १९ ॥ कुंभं तु बहिरस्त्रेण ताडयेद्वर्मणोक्षिपेत् ॥ अस्त्रेणोत्तरपूर्व्वाग्रान्मेखलासु बहिः कुशान्
॥ २० ॥ आस्थाप्य स्थापयेत्तेषु हृदा परिधिविस्तरम् ॥ वक्त्राणामस्त्रमन्त्रेण ततो नालापनुत्तये ॥ २१ ॥ समिधः पञ्च होतव्याः
प्रान्ते मूले घृतप्लुताः ॥ ब्रह्माणं शङ्करं विष्णुमनन्तं च हृदार्चयेत् ॥२२॥ दूर्वाक्षतैस्तत्पर्य्यन्तं परिधिस्थाननुक्रमात् ॥ इन्द्रादीशा-
नपर्यन्तान्विष्टरस्थाननुक्रमात् ॥ २३ ॥ अग्नेरभिमुखीभूतान्निजादिक्षु हृदार्चयेत् ॥ निवार्य विघ्नसङ्घातं बालकं पालयेत्यथ
॥ २४ ॥ शैवीमाज्ञामिमां तेषां श्रावयेत्तदनन्तरम् ॥ गृहीत्वा स्रुक्स्रुवावूर्ध्ववदनाधोमुखैः क्रमात् ॥ २५ ॥ प्रताप्याग्नौ त्रिधा
दर्भमूलमध्याग्रकैः स्पृशेत् ॥ कुशस्पृष्टप्रदेशे तु आत्मविद्याशिवात्मकम् ॥२६॥ क्रमात्तत्त्वत्रयं न्यस्य हां हीं हूं स्वधैः क्रमात्॥

स्रुचि शक्तिं स्रुव शंभु विनस्य हृदयाणुना ॥ २७ ॥ त्रिसूत्रीवेष्टितग्रीवो पूजितो कुसुमादिभिः ॥ कुशानामुपरिष्टात्तौ स्थापयित्वा
स्वदक्षिणे ॥ २८ ॥ गव्यमाज्यं समादाय वीक्षणादिविशोधितम् ॥ स्वकां ब्रह्ममयीं मूर्तिं सञ्चिन्त्यादाय तद्घृतम् ॥ २९ ॥ कुण्ड-
स्योर्ध्वं हृदावर्त्य भ्रामयित्वाग्निगोचरे ॥ पुनर्विष्णुमयीं ध्यात्वा घृतमीशानगोचरे ॥ ३० ॥ धृत्वादाय कुशाग्रेण स्वाहान्तं शिर-
साणुना ॥ जुहुयाद्विष्णवे बिन्दुं रुद्ररूपमनन्तरम् ॥३१॥ भावयन्निजमात्मानं नाभौ धृत्वा प्लवेत्ततः ॥ प्रादेशमात्रदर्भाभ्यामङ्गु-
ष्ठानामिकाग्रकैः ॥ ३२ ॥ धृताभ्यां संमुखं वह्नेरस्त्रेण प्लवमाचरेत् ॥ हृदात्मसंमुखं तद्वत्कुर्यात्संप्लवनं ततः ॥३३॥ हृदालब्धदग्ध-
दर्भं शस्त्रक्षेपात्पवित्रयेत् ॥ दीप्तेनापरदर्भेण निवाह्यानेन दीपयेत् ॥३४॥ अस्त्रमन्त्रेण निर्दग्धं वह्नौ दर्भं पुनः क्षिपेत् ॥ क्षिप्त्वा घृते
कृतग्रन्थिकुशं प्रादेशसम्मितम् ॥ ३५ ॥ पक्षद्वयमिडादीनां त्रयं चाज्ये विभावयेत् ॥ क्रमाद्भागत्रयादाज्यं स्रुवेणादाय होमयेत्
॥ ३६ ॥ स्वेत्यग्नौ हा घृते भागं शेषमाज्यं क्षिपेत्क्रमात् ॥ ओं हाम् अग्नये स्वाहा । ओं हाम् सोमाय स्वाहा । ओं हाम् अग्नी-
षोमाभ्यां स्वाहा ॥ उद्घाटनाय नेत्राणामग्नेर्नेत्रत्रये मुखे ॥ ३७ ॥ स्रुवेण घृतपूर्णेन चतुर्थीमाहुतिं यजेत् ॥ ओं हां अग्नये स्विष्टकृते
स्वाहा ॥ अभिमन्त्र्य षडंगेन बोधयेद्धेनुमुद्रया ॥३८॥ अवगुंठ्य तनुत्रेण रक्षेदाज्यं शराणुना ॥ हृदाज्यबिन्दुविक्षेपात्कुर्यादभ्युक्ष्य
शोधनम् ॥३९॥ वक्त्राभिघारसन्धानं वक्त्रैकीकरणं तथा ॥ ओं हां सद्योजाताय स्वाहा । ओं हां वामदेवाय स्वाहा । ओं हाम् अघोराय
स्वाहा । ओं तत्पुरुषाय स्वाहा । ओं हाम् ईशानाय स्वाहा ॥ इत्येकैकघृताहुत्या कुर्याद्वक्त्राभिघारकम् ॥४०॥ ओं हां सद्योजात-
वामदेवाभ्यां स्वाहा । ओं हां वामदेवाघोराभ्यां स्वाहा । ॐ हाम् अघोरतत्पुरुषाभ्यां स्वाहा । ॐ हां तत्पुरुषेशानाभ्यां स्वाहा ॥
इति वक्त्रानुसन्धानं मन्त्रैरेभिः क्रमाच्चरेत् ॥ अग्नितो गतया वायुं निर्ऋतो दिशि वान्तया ॥ ४१ ॥ वक्त्राणामेकतां कुर्यात्स्रुवेण
घृतधारया । ओं हां सद्योजातवामदेवाघोरतत्पुरुषेशानेभ्यः स्वाहा ॥ इतीष्टवक्त्रे वक्त्राणामन्तर्भावस्तदाकृतिः ॥ ४२ ॥ ईशेन
वह्निमभ्यर्च्य दत्त्वास्त्रेणाहुतित्रयम् ॥ कुर्यात्सर्वात्मना नाम शिवाग्निस्त्वं हुताशन ॥ ४३ ॥ हृदार्चितौ विसृष्टाग्नौ पितरौ
विधिपूरणीम् ॥ मूलेन वौषडन्तेन दद्यात्पूर्णां यथाविधि ॥ ४४ ॥ ततो हृदंबुजे साङ्गंससेनं भासुरं परम् ॥ यजेत्पूर्ववदावाह्य

प्राथ्यांह्नां तर्प्पयेच्छिवम् ॥४५॥ यागाग्निशिवयोः कृत्वा नाडीसन्धानमात्मना ॥ शक्त्या मूलाणुना होमं कुर्यादङ्गैर्दशांशतः ॥४६॥ घृतस्य कार्षिको होमः क्षीरस्य मधुनस्तथा ॥ शुक्तिमात्राहुतिर्दध्नः प्रसृतिः पायसस्य तु ॥ ४७॥ यथावत्सर्वभक्षाणां लाजानां मुष्टिसंमितम् ॥ खण्डत्रयं तु मूलानां फलानां स्वप्रमाणतः ॥ ४८ ॥ ग्रासार्द्धमात्रमन्नानां सूक्ष्माणि पञ्च होमयेत् ॥ इक्षोरापर्व्विकं मानं लतानामङ्गुलद्वयम् ॥ ४९ ॥ पुष्पं पत्रं स्वमानेन समिधां तु दशाङ्गुलम् ॥ चन्द्रचन्दनकाश्मीरकस्तूरीयक्षकर्दमान् ॥ ५० ॥ कलायसम्मितानेतान्गुग्गुलुं बदरास्थिवत् ॥ कन्दानामष्टमं भागं जुहुयाद्विधिवत्परम् ॥५१॥ होमं निर्वर्त्तयेदेवं ब्रह्मबीजपदैस्ततः ॥ वृतेन स्रुचि पूर्णायां निधायाधोमुखं स्रुवम् ॥ ५२ ॥ स्रुगग्रे पुष्पमारोप्य पश्चाद्वामेन पाणिना ॥ पुनः सव्येन तौ धृत्वा शङ्खसन्निभमुद्रया ॥ ५३ ॥ समुन्नतोऽर्ध्वकायश्च समपादः समुत्थितः ॥ नाभौ तन्मूलमाधाय स्रुगग्रन्यस्तलोचनः ॥ ५४ ॥ ब्रह्मादिकारणात्यागाद्विनिःसृत्य सुषुम्णया ॥ वामस्तनान्तमानीय तयोर्मूलमतन्द्रितः ॥५५॥ मूलमन्त्रमविस्पष्टं वौषडन्तं समुच्चरेत् ॥ तदग्नौ जुहुयादाज्यं यवसम्मितधारया ॥ ५६ ॥ आचामं चन्दनं दत्त्वा ताम्बूलप्रभृतीनपि ॥ भक्त्या तद्भूतिमावन्द्य विदध्यात्प्रणार्तिं पराम् ॥ ५७ ॥ ततो वह्निं समभ्यर्च्यर्च्य फडन्तास्त्रेण संवरान् ॥ संहारमुद्रयाहृत्य क्षमस्वेत्यभिधाय च ॥ ५८ ॥ भासुरान्परिधींस्तांश्च पूरकेण हृदाऽणुना ॥ श्रद्धया परमात्मीये स्थापयेत हृदम्बुजे ॥ ५९ ॥ सर्वपाकाग्रमादाय कृत्वा मण्डलकद्वयम् ॥ अन्तर्बहिर्बलिं दद्यादाग्नेय्यां कुण्डसन्निधौ ॥ ॥ ६० ॥ ओं हां रुद्रेभ्यः स्वाहा पूर्वे मातृभ्यो दक्षिणे तथा ॥ वारुणे हां गणेभ्यश्च स्वाहा तेभ्यस्त्वयं बलिः ॥ ६१ ॥ उत्तरे हां च यक्षेभ्य ईशाने हां ग्रहेभ्य उ ॥ अग्नौ हामसुरेभ्यश्च रक्षोभ्यो नैर्ऋते बलिः ॥ ६२ ॥ वायव्ये हां च नागेभ्यो नक्षत्रेभ्यश्च मध्यतः ॥ हां राशिभ्यः स्वाहा वह्नौ विश्वेभ्यो नैर्ऋते तथा ॥ ६३ ॥ वारुण्यां क्षेत्रपालाय अन्तर्बलिरुदाहृतः ॥ द्वितीये मण्डले बाह्य इन्द्रायाग्नियमाय च ॥ ६४ ॥ नैर्ऋताय जलेशाय वायवे धनरक्षिणे ॥ ईशानाय च पूर्व्वादौ हीशाने ब्रह्मणे नमः ॥ ६५ ॥ नैर्ऋते विष्णवे स्वाहा वायसादेर्बहिर्बलिः ॥ बलिद्वयगतान्मन्त्रान्संहारमुद्रयाऽऽत्मनि ॥ ६६ ॥ इत्यादिमहापुराणे आग्नेये शिवपूजाङ्गहेमविधिनिरूपणं नाम पंचसप्ततितमोऽध्यायः ॥ ७५ ॥ अथ चण्डपूजा-

विधिः ॥ ईश्वर उवाच ॥ ततः शिवान्तिकं गत्वा पूजाहोमादिकं मम ॥ गृहाण भगवन् पुण्यफलमित्यभिधाय च ॥ १ ॥
अर्घ्योदकेन देवाय मुद्रयोद्भवसंज्ञया ॥ हृद्बीजपूर्वमूलेन स्थिरचित्तो निवेदयेत् ॥ २ ॥ ततः पूर्ववदभ्यर्च्य स्तुत्वा स्तोत्रैः प्रणम्य
च ॥ अर्घ्यं पराङ्मुखं दत्त्वा क्षमस्वेत्यभिधाय च ॥ ३ ॥ नाराचमुद्रयाऽस्त्रेण फडन्तेनात्मसञ्चयम् ॥ संहृत्य दिव्यया लिङ्गं
मूर्त्तिमन्त्रेण योजयेत् ॥ ४ ॥ स्थण्डिले त्वर्चिते देवे मन्त्रसङ्घातमात्मनि ॥ नियोज्य विधिनोक्तेन विदध्याच्चण्डपूजनम् ॥ ५ ॥
ओं चण्डेशानाय नमो मध्यश्चण्डमूर्तये ॥ ओं धूलिचण्डेश्वराय हूं फट स्वाहा तमाह्वयेत् ॥ ६ ॥ चण्डहृदयाय हूं फट् ओं
चण्डशिरसे तथा ॥ ओं चण्डशिखायै हूं फट् चण्डायुः कवचाय च ॥ ७ ॥ चण्डास्त्राय तथा हूं फट चण्डं रुद्राग्निजं स्मरेत् ॥
शूलटङ्कधरं कृष्णं साक्षसूत्रकमण्डलुम् ॥ ८ ॥ टङ्कारेऽर्द्धचन्द्रे वा चतुर्वक्त्रं प्रपूजयेत् ॥ यथाशक्ति जपं कुर्य्यादङ्गानां तु
दशांशतः ॥ ९ ॥ गोभूहिरण्यवस्त्रादिमणिहेमादिभूषणम् ॥ विहाय शेषनिर्माल्यं चण्डेशाय निवेदयेत् ॥ १० ॥ लेह्यचोष्या-
द्यन्नवरं ताम्बूलं स्रग्विलेपनम् ॥ निर्माल्यं भोजनं तुभ्यं प्रदत्तं तु शिवाज्ञया ॥ ११॥ सर्वमेतत्क्रियाकाण्डं मया चण्ड तवाज्ञया ॥
न्यूनाधिकं कृतं मोहात्परिपूर्णं सदाऽस्तु मे ॥ १२ ॥ इति विज्ञाप्य देवेशं दत्त्वाऽर्घ्यं तस्य संस्मरन् ॥ संहारमूर्त्तिमन्त्रेण शनैः
संहारमुद्रया ॥ १३ ॥ पूरकान्वितमूलेन मन्त्रानात्मनि योजयेत् ॥ निर्माल्यापनयस्थानं लिम्पेद्गोमयवारिणा ॥ प्रोक्ष्यार्घ्यादि
विसृज्याथ स्वाचान्तोऽन्यत्समाचरेत् ॥ १४ ॥ इत्यादि महापुराणे आग्नेये चण्डपूजाविधानं नाम षट्सप्ततितमोऽ-
ध्यायः ॥ ७६ ॥ अथ कपिलापूजादिविधानम् ॥ ईश्वर उवाच ॥ कपिलापूजनं वक्ष्ये एभिर्मन्त्रैर्यजेच्च गाम् ॥ ॐ कपिले
नन्दे नमः ॐ कपिले भद्रिके नमः ॥ १ ॥ ॐ कपिले सुशीले नमः कपिले सुरभि प्रभे ॥ ॐ कपिले सुमनसे
नमः ॐ भुक्तिमुक्तिप्रदे नमः ॥ २ ॥ सौरभेयि जगन्मातर्देवानाममृतप्रदे ॥ गृहाण वरदे ग्रासमीप्सितार्थं च देहि मे ॥ ३ ॥ ॥ ५१ ॥
वन्दिताऽसि वसिष्ठेन विश्वामित्रेण धीमता ॥ कपिले हर मे पापं यन्मया दुष्कृतं कृतम् ॥ ४ ॥ गावो ममाग्रतो नित्यं गावः
पृष्ठत एव च ॥ गावो मे हृदये चापि गवां मध्ये वसाम्यहम् ॥ ५ ॥ दत्तं गृह्णन्तु मे ग्रासं जग्ध्वा स्यां निर्मलः शिवः ॥ प्रार्थ

विद्यापुस्तकानि गुरुपादौ नमेन्नरः ॥ ६ ॥ यजेत्स्नात्वा तु मध्याह्ने अष्टपुष्पिकया शिवम् ॥ पीठमूर्त्तिशिवाङ्गानां पूजा स्यादष्टपुष्पिका ॥ ७ ॥ मध्याह्ने भोजनागारे सुलिप्ते पाकमानयेत् ॥ ततो मृत्युञ्जयेनैव वौषडन्तेन सप्तधा ॥ ८ ॥ जप्तैः सदर्भशङ्खस्थैः सिञ्चेत्तं वारिन्बिदुभिः ॥ सर्वपाकाग्रमुद्धृत्य शिवाय विनिवेदयेत् ॥ ९ ॥ अथार्द्धं चुल्लिकाहोमे विधानायोपकल्पयेत् ॥ विशोध्य विधिना चुल्लीं तद्वार्ह्निं पूरकाहुतिम् ॥ १० ॥ हुत्वा नाभ्यग्निना चैकं ततो रेचकवायुना ॥ वह्निबीजं समादाय कादिस्थानगतिक्रमात् ॥ ११ ॥ शिवाग्निस्त्वमिति ध्यात्वा चुल्लिकाग्नौ निवेशयेत् ॥ ॐ हाम् अग्नये नमो वै हां सोमाय वै नमः ॥ १२ ॥ सूर्य्याय बृहस्पतये प्रजानां पतये नमः ॥ सर्वेभ्यश्चैव देवेभ्यः सर्वविश्वेभ्य एव च ॥ १३ ॥ हामग्नये स्विष्टकृते पूर्वादावर्चयेदिमान् ॥ स्वाहान्तामाहुतिं दत्वा क्षमयित्वा विसर्जयेत् ॥ १४ ॥ चुल्ह्या दक्षिणबाहौ च यजेद्धर्माय वै नमः ॥ वामबाहावधर्माय काञ्जिकादिकभाण्डके ॥ १५ ॥ रसपरिवर्त्तमानाय वरुणाय जलाग्रये ॥ विघ्नराजो गृहद्वारे पेषण्यां सुभगे नमः ॥ १६ ॥ ॐ रौद्रिके नमो गिरिके नमश्चोलूखले यजेत् ॥ बलप्रियायायुधाय नमस्ते मुसले यजेत् ॥ १७ ॥ सम्मार्ज्जन्यां देवतोक्ते कामाय शयनीयके ॥ मध्यस्तम्भे च स्कन्दाय दत्वा वास्तुबलिं ततः ॥ १८ ॥ भुञ्जीत पात्रे सौवर्णे पद्मिन्यादिदलादिके ॥ आचार्य्यः साधकः पुत्रः समयी मौनमास्थितः ॥ १९ ॥ वटाश्वत्थार्कवाताविसर्ज्जभल्लातकांस्त्यजेत् ॥ आपोशानं पुरादाय प्राणाद्यैः प्रणवान्वितैः ॥ २० ॥ स्वाहान्तेनाहुतीः पञ्च दत्वादीप्योदरानलम् ॥ नागः कूर्म्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥ २१ ॥ एतेभ्य उपवायुभ्यः स्वाहापोशानवारिणा ॥ भक्तादिकं निवेद्याथ पिबेच्छेषोदकं नरः ॥ २२ ॥ अमृतोपस्तरणमसि प्राणाहुतीस्ततो ददेत् ॥ प्राणाय स्वाहाऽपानाय समानाय ततस्तथा ॥ २३ ॥ उदानाय च व्यानाय भुक्त्वा चुल्लकमाचरेत् ॥ अमृतापिधानमसीति शरीरेऽन्नादिवायवः ॥ २४ ॥ इत्यादिमहापुराणे आग्नेये कपिलापूजादिविधानं नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ अथ पवित्राधिवासनम् ॥ ईश्वर उवाच ॥ पवित्रारोहणं वक्ष्ये क्रियार्च्चादिषु पूरणम् ॥ नित्यं तन्नित्यमुद्दिष्टं नैमित्तिकमथापरम् ॥ १ ॥ आषाढादिचतुर्दश्यामथ श्रावणभाद्रयोः ॥ सितासितासु कर्त्तव्यं चतुर्दश्यष्टमीषु तत् ॥ २ ॥

कुर्य्याद्वा कार्त्तिकीं यावत्तिथौ प्रतिपदादिके ॥ वह्निब्रह्माम्बिकेभास्यनागस्कन्दार्कशूलिनाम् ॥ ३ ॥ दुर्गायमेन्द्रगो-
विन्दस्मरशम्भुसुधाभुजाम् ॥ सौवर्णं राजतं ताम्रं कृतादिषु यथाक्रमम् ॥ ४ ॥ कलौ कार्प्पासजं वापि पट्टपद्मादिसूत्रकम् ॥
प्रणवश्चन्द्रमा वह्निर्ब्रह्मा नागो ग्रहो हरिः ॥ ५ ॥ सर्वेशः सर्वदेवाः स्युः क्रमेण नवतन्तुषु ॥ अष्टोत्तरशतान्यर्द्धं तदर्धं चोत्तमा-
दिकम् ॥ ६ ॥ एकाशीत्याऽथवा सूत्रैस्त्रिंशताऽप्यष्टयुक्तया ॥ पञ्चाशता वा कर्त्तव्यं तुल्यग्रन्थ्यन्तरालकम् ॥ ७ ॥ द्वादशाङ्गुल-
मानानि व्यासादष्टाङ्गुलानि च ॥ लिङ्गविस्तारमानानि चतुरङ्गुलकानि वा ॥ ८ ॥ तथैव पिण्डिकास्पर्शं चतुर्थं सर्वदैवतम् ॥
गङ्गावतारकं कार्य्यं सुजातेन सुधौतकम् ॥ ९ ॥ ग्रन्थिं कुर्य्याच्च वामेन अघोरेणाथ शोधयेत् ॥ रञ्जयेत्पुरुषेणैव रक्तचन्दनकु-
ङ्कुमैः ॥ १० ॥ कस्तूरीरोचनाचन्द्रैर्हरिद्रागैरिकादिभिः ॥ ग्रन्थयो दश कर्त्तव्या अथवा तन्तुसङ्ख्यया ॥ ११ ॥ अन्तरं वा
यथाशोभमेकद्विचतुरङ्गुलम् ॥ प्रकृतिः पौरुषी वीरा चतुर्थी त्वपराजिता ॥ १२ ॥ जयाऽन्या विजया षष्ठी अजिता च सदा-
शिवा ॥ मनोन्मनी सर्वमुखी ग्रन्थयोऽभ्यधिकाः शुभाः ॥ १३ ॥ कार्य्या वा चन्द्रवह्न्यर्कपवित्रं शिववद्धृदि ॥ एकैकं निज-
मूर्त्तौ वा पुस्तके गुरुके गणे ॥ १४ ॥ स्यादेकैकं तथा द्वारादिक्पालकलशादिषु ॥ हस्तादिनवहस्तान्तं लिङ्गानां स्यात्पवित्रकम्
॥१५॥ अष्टाविंशतितो वृद्धं दशभिर्दशभिः क्रमात् ॥ द्व्यङ्गुलाभ्यन्तरास्तत्र क्रमादेकाङ्गुलान्तराः ॥१६॥ ग्रन्थयो मानमप्येषां
लिङ्गविस्तारसम्मितम् ॥ सप्तम्यां वा त्रयोदश्यां कृतनित्यक्रियः शुचिः॥१७॥ भूषयेत्पुष्पवस्त्राद्यैः सायाह्ने यागमन्दिरम् ॥ कृत्वा
नैमित्तिकीं सन्ध्यां विशेषेण च तर्प्पणम् ॥ १८ ॥ परिगृहीते भूभागे पवित्रे सूर्य्यमर्च्चयेत् ॥ आचम्य सकलीकृत्य प्रणवार्घ्य-
करो गुरुः ॥ १९ ॥ द्वाराण्यस्त्रेण सम्प्रोक्ष्य पूर्वादिक्रमतोऽर्च्चयेत् ॥ हां शान्तिकलाद्वाराय तथा विद्याकलात्मने ॥ २० ॥ निवृत्ति-
कलाद्वाराय प्रतिष्ठाख्यकलात्मने ॥ तच्छाखयोः प्रतिद्वारं द्वौ द्वौ द्वाराधिपौ यजेत् ॥ २१ ॥ नन्दिने महाकालाय भृङ्गिणेऽथ
गणाय च ॥ वृषभाय च स्कन्दाय देव्यै चण्डाय च क्रमात् ॥ २२ ॥ नित्यं च द्वारपालादीन्प्राविश्य द्वारपश्चिमे ॥ इष्ट्वा वास्तुं
भूतशुद्धिं विशेषार्घ्यकरः शिवः ॥२३॥ प्रोक्षणाद्यं विधायाथ यज्ञसम्भारकृन्नरः ॥ मन्त्रयेद्दर्भदूर्वाद्यैः पुष्पाद्यैश्च हृदादिभिः ॥२४॥

शिवहस्तं विधायेत्थं स्वशिरस्याधिरोपयेत् ॥ शिवोऽहमादिः सर्वज्ञो मम यज्ञप्रधानता ॥ २५ ॥ अत्यर्थं भावयेद्देवं ज्ञानखड्गकरो गुरुः ॥ नैर्ऋतीं दिशमासाद्य प्रक्षिपेदुदगाननः ॥ २६ ॥ अर्घ्याम्बु पञ्चगव्यं च समंतान्मखमण्डपे ॥ चतुष्पथान्तसंस्कारैर्वीक्षणाद्यैः सुसंस्कृतैः ॥ २७ ॥ विक्षिप्य विकिरांस्तत्र कुशकूर्च्योपसंहरेत् ॥ तानीशादिशि वर्द्धन्यामासनायोपकल्पयेत् ॥ २८ ॥ नैर्ऋते वास्तुगीर्वाणान्द्वारे लक्ष्मीं प्रपूजयेत् ॥ पश्चिमाभिमुखं कुम्भं सर्वधान्योपरि स्थितम् ॥ २९ ॥ प्रणवेन वृषारूढं सिंहस्थां वर्द्धनीं ततः ॥ कुम्भे साङ्गं शिवं देवं वर्द्धन्यामस्त्रमर्चयेत् ॥ ३० ॥ दिक्षु शक्रादिदिक्पालान्विष्णुब्रह्मशिवादिकान् ॥ वर्द्धनीं सम्यगादाय घटपृष्ठानुगामिनीम् ॥ ३१ ॥ शिवाज्ञां श्रावयेन्मन्त्री पूर्वादीशानगोचराम् ॥ अविच्छिन्नपयोधारां मूलमन्त्रमुदीरयेत् ॥ ३२ ॥ समन्ताद्भ्रामयेदेनां रक्षार्थं शस्त्ररूपिणीम् ॥ पूर्वं कलशमारोप्य शक्त्यर्थं तस्य वामतः ॥ ३३ ॥ समग्रासनके कुम्भे यजेद्देवं स्थिरासने ॥ वर्द्धन्यां प्रणवस्थायामायुधं तदनु द्वयोः ॥ ३४ ॥ भगलिंगसमायोगं विदध्याल्लिंगमुद्रया ॥ कुम्भे निवेद्य बोधासिं मूलमन्त्रजपं तथा ॥ ३५ ॥ तद्दशांशेन वर्द्धन्यां रक्षां विज्ञापयेदपि ॥ गणेशं वायवेऽभ्यर्च्य हरं पञ्चामृतादिभिः ॥ ३६ ॥ स्नापयेत्पूर्ववत्प्रार्च्य कुण्डे च शिवपावकम् ॥ विधिवच्च चरुं कृत्वा सम्पाताहुतिशोधितम् ॥ ३७ ॥ देवाग्न्यात्मविभेदेन दर्व्या तं विभजेत्त्रिधा ॥ दत्त्वा भागौ शिवाग्निभ्यां संरक्षेद्भागमात्मनि ॥ ३८ ॥ शरेण वर्मणा देयं पूर्वतो दन्तधावनम् ॥ तस्माद्घोरशिखाभ्यां वा दक्षिणे पश्चिमे मृदम् ॥ ३९ ॥ सद्योजातेन च हृदा चोत्तरे वामनीकृतम् ॥ जलं वामेन शिरसा ईशे गंधान्वितं जलम् ॥ ४० ॥ पंचगव्यं पलाशादिपुटकं वै समन्ततः ॥ ऐशान्यां कुसुमं दद्यादाग्नेय्यां दिशि रोचनाम् ॥ ४१ ॥ अगुरुं नैर्ऋताशायां वायव्यां च चतुःसमम् ॥ होमद्रव्याणि सर्वाणि सद्योजातैः कुशैः सह ॥ ४२ ॥ दण्डाक्षसूत्रकौपीनाभिक्षापात्राणि रूपिणे ॥ कज्जलं कुङ्कुमं तैलं शलाकां केशशोधिनीम् ॥ ४३ ॥ तांबूलं दर्पणं दद्यादुत्तरे रोचनामपि ॥ आसनं पादुके पात्रं योगपट्टातपत्रकम् ॥ ४४ ॥ ऐशान्यामीशमन्त्रेण दद्यादीशानतुष्टये ॥ पूर्वस्यां चरुकं साज्यं दद्याद्गन्धादिकं नवे ॥ ४५ ॥ पवित्राणि समादाय प्रोक्षितान्यर्घ्यवारिणा ॥ संहितामंत्रपूतानि नीत्वा पावकसंनिधिम् ॥ ४६ ॥ कृष्णाजिनादिनाऽऽच्छाद्य स्मरन्संवत्सरात्मकम् ॥ साक्षिणं सर्वकृत्यानां गोप्तारं शिवमव्ययम् ॥ ४७ ॥ स्वेति





हेति अयोगेण मन्त्रसंहितया पुनः ॥ शोधयेच्च पवित्राणि वाराणामेकविंशतिम् ॥ ४८ ॥ गृहादि वेष्टयेत्सूत्रैर्गन्धाद्यं रवये ददेत् ॥
पूजिताय समाचम्य कृतन्यासः कृतार्घ्यकः ॥४९॥ नन्द्यादिभ्योऽथ गन्धाख्यं वास्तोश्चाथ प्रविश्य च ॥ शस्त्रेभ्यो लोकपालेभ्यः
स्वनाम्ना शिवकुम्भके ॥ ५० ॥ वर्द्धन्यै विघ्नराजाय गुरवे ह्यात्मने यजेत् ॥ अथ सर्वौषधिलिप्तं धूपितं पुष्पदूर्वया ॥ ५१ ॥ आमन्त्र्य
च पवित्रं तद्विधायाञ्जलिमध्यगम् ॥ ओं समस्तविधिच्छिद्रपूरणे च विधिं प्राति ॥ ५२ ॥ प्रभवान्मन्त्रयामि त्वां त्वदिच्छावाप्ति-
कारिकाम् ॥ तत्सिद्धिमनुजानीहि यजतश्चिदचित्पते ॥५३॥ सर्वथा सर्वदा शम्भो नमस्तेऽस्तु प्रसीद मे ॥ आमन्त्रितोऽसि देवेश
सह देव्या गणेश्वरैः ॥५४॥ मन्त्रेशैर्लोकपालैश्च सहितः परिचारकैः ॥ निमन्त्रयाम्यहं तुभ्यं प्रभाते तु पवित्रकम् ॥५५॥ नियमं च
करिष्यामि परमेश तवाज्ञया ॥ इत्येवं देवमामन्त्र्य रेचकेनामृतीकृतम् ॥ ५६ ॥ शिवान्तं मूलमुच्चार्य्य तच्छिवाय निवेदयेत् ॥
जपं स्तोत्रं प्रणामं च कृत्वा शंभुं क्षमापयेत् ॥५७॥ हुत्वा चरोस्तृतीयांशं तद्दद्दीत शिवाग्नये ॥ दिग्वासिभ्यो दिगीशेभ्यो भूतमातृ-
गणेभ्य उ ॥५८॥ रुद्रेभ्यः क्षेत्रपादिभ्यो नमः स्वाहा बलिस्त्वयम् ॥ दिङ्नागाद्यैश्च पूर्वादौ क्षेत्राय चाग्नये बलिः ॥ ५९ ॥ समा-
चम्य विधिच्छिद्रपूरकं होममाचरेत् ॥ पूर्णां व्याहृतिहोमं च कृत्वा रुन्धीत पावकम् ॥६० ॥ तत ओमग्नये स्वाहा स्वाहा सोमाय
चैव हि ॥ ओमग्नीषोमाभ्यां स्वाहाऽग्नये स्विष्टकृते तथा ॥६१॥ इत्याहुतिचतुष्कं तु दत्त्वा कुर्य्यात्तु योजनाम् ॥ वह्निकुण्डार्चितं
देवं मण्डलाभ्यर्च्चिते शिवे ॥ ६२ ॥ नाडीसन्धानरूपेण विधिना योजयेत्ततः ॥ वंशादिपात्रे विन्यस्य अस्त्रं च हृदयं ततः ॥६३॥
अधिरोप्य पवित्राणि कलाभिर्वाऽथ मन्त्रयेत् ॥ षडङ्गं ब्रह्ममूलैर्वा हृद्वर्म्मास्त्रं च योजयेत् ॥ ६४ ॥ विधाय सूत्रैः संवेष्ट्य पूजयि-
त्वाऽङ्गसम्भवैः ॥ रक्षार्थं जगदीशाय भक्तिनम्रः समर्पयेत् ॥ ६५ ॥ पूजिते पुष्पधूपाद्यैर्दत्त्वा सिद्धान्तपुस्तके ॥ गुरोः पादान्तिकं
गत्वा भक्त्या दद्यात्पवित्रकम् ॥ ६६ ॥ निर्गत्य बहिराचम्य गोमये मण्डलत्रये ॥ पञ्चगव्यं चरुं दन्तधावनं च क्रमाद्यजेत् ॥ ६७ ॥
आचान्तो मन्त्रसंबद्धः कृतसङ्गीतजागरः ॥ स्वपेदन्तः स्मरन्नीशं बुभुक्षुर्दर्भसंस्तरे ॥ ६८ ॥ अनेनैव प्रकारेण मुमुक्षुरपि संविशेत् ॥
केवलं भस्मशय्यायां सोपवासः समाहितः ॥६९॥ इत्यादिमहापुराणे आग्नेयं पवित्रारोहणविधिर्नामाष्टसप्ततितमोऽध्यायः ॥७८॥

अथ पवित्रारोहणविधिः ॥ ईश्वर उवाच ॥ अथ प्रातः समुत्थाय कृतस्नानः समाहितः ॥ कृतसन्ध्यार्चनो मन्त्री प्रविश्य मखमण्डपम् ॥१॥ समादाय पवित्राणि अविसर्जितदैवतः ॥ ऐशान्यां भाजने शुद्धे स्थापयेत्कृतमंडले ॥२॥ ततो विसर्ज्य देवेशं निर्माल्यमपनीय च ॥ पूर्ववद्भूतले शुद्धे कृत्वाह्निकमथ द्वयम् ॥ ३ ॥ आदित्यद्वारदिक्पालकुंभेशानौ शिवेऽनले ॥ नैमित्तिकीं सविस्तारां कुर्यात्पूजां विशेषतः ॥ ४ ॥ मन्त्राणां तर्पणं प्रायश्चित्तहोमं शरात्मना ॥ अष्टोत्तरशतं कृत्वा दद्यात्पूर्णाहुतिं शनैः ॥ ५॥ पवित्रं भानवे दत्त्वा समाचम्य ददीत च ॥ द्वारपालादिदिक्पालकुम्भवर्द्धनिकादिषु ॥ ६ ॥ सन्निधाने ततः शम्भोरुपविश्य निजासने ॥ पवित्रमात्मने दद्याद्गणाय गुरुवह्नये ॥ ७ ॥ ॐ कालात्मना त्वया देव यद्दृष्टं मामके विधौ ॥ कृतं क्लिष्टं समुत्सृष्टं कृतं गुप्तं च यत्कृतम् ॥ ८ ॥ तदस्तु क्लिष्टमक्लिष्टं कृतं क्लिष्टमसंस्कृतम् ॥ सर्वात्मनाऽमुना शम्भो पवित्रेण त्वदिच्छया ॥ ९ ॥ ॐ पूरय मखव्रतं नियमेश्वराय स्वाहा ॥ आत्मतत्त्वे प्रकृत्यन्ते पालिते पद्मयोनिना ॥ १० ॥ मूलं लयान्तमुच्चार्य्य पवित्रेणार्चयेच्छिवम् ॥ विद्यातत्त्वे च विद्यान्ते विष्णुकारणपालिते ॥ ११ ॥ ईश्वरान्तं समुच्चार्य्य पवित्रमधिरोपयेत् ॥ शिवान्ते शिवतत्त्वे च रुद्रकारणपालिते ॥ १२ ॥ शिवान्तं मन्त्रमुच्चार्य तस्मै देयं पवित्रकम् ॥ सर्वकारणपालेषु शिवमुच्चार्य्य सुव्रतः ॥ १३ ॥ मूलं लयान्तमुच्चार्य्य दद्याद्गङ्गावतारकम् ॥ आत्मविद्या शिवः प्रोक्तं मुमुक्षूणां पवित्रकम् ॥ १४ ॥ विनिर्दिष्टं बुभुक्षूणां शिवतत्त्वात्मभिः क्रमात् ॥ स्वाहान्तं वा नमोऽन्तं वा मन्त्रमेषामुदीरयेत् ॥ १५ ॥ ॐ हाम् आत्मतत्त्वाधिपतये शिवाय स्वाहा ॥ ॐ हां विद्यातत्त्वाधिपतये शिवाय स्वाहा ॥ ॐ हौं शिवतत्त्वाधिपतये शिवाय स्वाहा ॥ ॐ हौं सर्वतत्त्वाधिपतये शिवाय स्वाहा ॥ नत्वा गङ्गावतारं तु प्रार्थयेत्तं कृताञ्जलिः ॥ त्वं गतिः सर्वभूतानां संस्थितिस्त्वं चराचरे ॥ १६ ॥ अन्तश्चारेण भूतानां द्रष्टा त्वं परमेश्वर ॥ कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ॥ १७ ॥ मन्त्रहीनं क्रियाहीनं द्रव्यहीनं च यत्कृतम् ॥ जपहोमार्चनैर्हीनं कृतं नित्यं मया तव ॥ १८ ॥ अकृतं वाक्यहीनं च तत्पूरय महेश्वर ॥ सुपूतस्त्वं परेशान पवित्रं पापनाशनम् ॥ १९ ॥ त्वया पवित्रितं सर्वं जगत्स्थावरजङ्गमम् ॥ खण्डितं यन्मया देव व्रतं वैकल्ययोगतः ॥ २० ॥ एकीभवतु तत्सर्वं तवाज्ञासूत्रगु-





म्फितम् ॥ जपं निवेद्य देवस्य भक्त्या स्तोत्रं विधाय च ॥ २१ ॥ नत्वा तु गुरुणा दिष्टं गृह्णीयान्नियमं नरः ॥ चतुर्मासं त्रिमासं
वा त्र्यहमेकाहमेव च ॥ २२ ॥ प्रणम्य क्षमयित्वेशं गत्वा कुण्डान्तिकं व्रती ॥ पावकस्थे शिवेऽप्येवं पवित्राणां चतुष्टयम् ॥२३॥
समारोप्य समभ्यर्च्य पुष्पधूपाक्षतादिभिः ॥ अन्तर्बलिं पवित्रं च रुद्रादिभ्यो निवेदयेत् ॥ २४ ॥ प्रविश्यान्तः शिवं स्तुत्वा
सप्रणामं क्षमापयेत् ॥ प्रायश्चित्तकृतं होमं कृत्वा हुत्वा च पायसम् ॥ २५ ॥ शनैः पूर्णाहुतिं दत्त्वा वह्निस्थं विसृजेच्छिवम् ॥
होमं व्याहृतिभिः कृत्वा रुन्ध्यान्निष्ठुरयाऽनलम् ॥ २६ ॥ अग्न्यादिभ्यस्ततो दद्यादाहुतीनां चतुष्टयम् ॥ दिक्पतिभ्यस्ततो दद्या
त्सपवित्रं बहिर्बलिम् ॥२७॥ सिद्धान्तपुस्तके दद्यात्सप्रमाणं पवित्रकम् ॥ ॐ हां भूः स्वाहा ॥ ॐ हां भुवः स्वाहा ॥ ओं हां स्वः
स्वाहा ॥ ओं हां भूर्भुवः स्वः स्वाहा ॥ होमं व्याहृतिभिः कृत्वा दत्त्वाऽऽहुतिचतुष्टयम् ॥ २८ ॥ ओं हाम् अग्नये स्वाहा । ओं
हां सोमाय स्वाहा । ओं हाम् अग्नीषोमाभ्यां स्वाहा । ओं हाम् अग्नये स्विष्टकृते स्वाहा । गुरुं शिवमिवाभ्यर्च्य वस्त्रभूषादि-
विस्तरैः ॥ समग्रं सफलं तस्य क्रियाकाण्डादिवार्षिकम् ॥ २९ ॥ यस्य तुष्टो गुरुः सम्यगित्याह परमेश्वरः ॥ इत्थ गुरोः समा-
रोप्य हृदालम्बिपवित्रकम् ॥ ३० ॥ द्विजादीन्भोजयित्वा तु भक्त्या वस्त्रादिकं ददेत् ॥ दानेनानेन देवेशः प्रीयतां मे सदाशिवः
॥ ३१ ॥ भक्त्या स्नानादिकं प्रातः कृत्वा शम्भोः समाहरेत् ॥ पवित्राण्यष्टपुष्पैस्तं पूजयित्वा विसर्जयेत् ॥ ३२ ॥ नित्यं
नैमित्तिकं कृत्वा विस्तरेण यथा पुरा ॥ पवित्राणि समारोप्य प्रणम्याग्नौ शिवं यजेत् ॥ ३३ ॥ प्रायश्चितं ततोऽस्त्रेण हुत्वा पूर्णा-
हुतिं यजेत् ॥ भुक्तिकामः शिवायाथ कुर्य्यात्कर्म्मसमर्पणम् ॥ ३४ ॥ त्वत्प्रसादेन कर्म्मेदं ममाऽस्तु फलसाधकम् ॥ मुक्ति-
कामस्तु कर्म्मेदं माऽस्तु मे नाथ बन्धकम् ॥ ३५ ॥ वह्निस्थं नाडियोगेन शिवं संयोजयेच्छिवे ॥ हृदि न्यस्याग्निसङ्घातं पावकं
च विसर्जयेत् ॥ ३६ ॥ समाचम्य प्रविश्यान्तः कुम्भानुगतसंवरान् ॥ शिवं संयोज्य साक्षेपं क्षमस्वेति विसर्जयेत् ॥ ३७ ॥ ॥ ५६ ॥
विसृज्य लोकपालादीनादायेशात्पवित्रकम् ॥ सति चण्डेश्वरे पूजां कृत्वा दत्त्वा पवित्रकम् ॥ ३८ ॥ तन्निर्म्माल्यादिकं तस्मै
सपवित्रं समर्पयेत ॥ *अथवा स्थण्डिले चण्डं विधिना पूर्ववद्यजेत् ॥ ३९ ॥ यत्किञ्चिद्वार्षिकं कर्म कृतं न्यूनाधिकं मया ॥ तदस्तु*

परिपूर्णं मे चण्ड नाथ तवाज्ञया ॥ ४० ॥ इति विज्ञाप्य देवेशं नत्वा स्तुत्वा विसर्जयेत् ॥ त्यक्तनिर्माल्यकः शुद्धः स्नापयित्वा शिवं यजेत् ॥ पञ्चयोजनसंस्थोऽपि पवित्रं गुरुसन्निधौ ॥ ४१ ॥ इत्यादिमहापुराणे आग्नेये पवित्रारोहणविधिर्नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥ अथ दमनकारोहणविधिः ॥ ईश्वर उवाच ॥ वक्ष्ये दमनकारोहविधिं पूर्ववदाचरेत् ॥ हरकोपात्पुरा जातो भैरवो दमिताः सुराः ॥ १ ॥ तेनाथ शप्तो विटपो भवोति त्रिपुरारिणा ॥ प्रसन्नेनेरितं चेदं पूजयिष्यन्ति ये नराः ॥२॥ परिपूर्णं फलं तेषां नान्यथा ते भविष्यति ॥ सप्तम्यां वा त्रयोदश्यां दमनं सहितात्मभिः ॥ ३ ॥ सम्पूज्य बोधयेद्वृक्षे भववाक्येन मन्त्रवित् ॥ हरप्रसादसम्भूत त्वमत्र सन्निधो भव ॥ ४ ॥ शिवकार्य्यं समुद्दिश्य नेतव्योऽसि शिवाज्ञया ॥ गृहेऽप्यामन्त्रणं कुर्य्यात्सायाह्ने चाधिवासनम् ॥ ५ ॥ यथाविधि समभ्यर्च्य सूर्य्यशङ्करपावकम् ॥ देवस्य पश्चिमे मूलं दद्यात्तस्य मृदा युतम् ॥ ६ ॥ वामेन शिरसा वाऽथ नालं धात्रीं तथोत्तरे ॥ दक्षिणे भस्मपत्रं च प्राच्यां पुष्पं च धारणम् ॥ ७ ॥ पुटिकास्थं फलं मूलमथैशान्यां यजेच्छिवम् ॥ पञ्चाङ्गमञ्जलौ कृत्वा आमन्त्र्य शिरसि न्यसेत् ॥ ८ ॥ आमन्त्रितोऽसि देवेश प्रातःकाले मया प्रभो ॥ कर्त्तव्यस्तपसो लाभः पूर्णं सर्वं तवाज्ञया ॥ ९॥ मूलेन शेषं पात्रस्थं पिधायाथ पवित्रकम् ॥ प्रातः स्नात्वा जगन्नाथं गन्धपुष्पादिभिर्यजेत् ॥ १० ॥ नित्यं नैमित्तिकं कृत्वा दमनैः पूजयेत्ततः ॥ शेषमञ्जलिनादाय आत्मविद्याशिवात्मभिः ॥ ११ ॥ मूलाद्यैरीश्वरान्तैश्च चतुर्थाञ्जलिना ततः ॥ ओं हौं मखेश्वराय मखं पूरय पूरय शूलपाणये नमः ॥ शिवं वह्निं च सम्पूज्य गुरुं प्राच्यांथ बोधयेत् ॥१२॥ भगवन्नतिरिक्तं वा हीनं वा यन्मया कृतम् ॥ सर्वं तदस्तु सम्पूर्णं यच्च दामनकं मम ॥ सकलं चैत्रमासोत्थं फलं प्राप्य दिवं व्रजेत् ॥१३ ॥ इत्यादिमहापुराणे आग्नेये दमनकारोहणविधिर्नामाशीतितमोऽध्यायः ॥८० ॥ अथ समयदीक्षाविधानम् ॥ ईश्वर उवाच ॥ वक्ष्यामि भोगमोक्षाथ दीक्षां पापक्षयङ्करीम् ॥ मलमायादिपाशानां विश्लेषः क्रियते यया ॥ १ ॥ ज्ञानं च जन्यते शिष्ये सा दीक्षा भुक्तिमुक्तिदा ॥ विज्ञातकलनामैको द्वितीयः प्रलयाकलः ॥ २ ॥ तृतीयः सकलः शास्त्रेऽनुग्राह्यस्त्रिविधो मतः ॥ तत्राद्यो मलमात्रेण मुक्तोऽन्यो मलकर्मभिः ॥ ३ ॥ कलादिभूमिपर्य्यतं स्तवैस्तु सकलो युतः ॥ निराधाराऽथ साधारा दीक्षाऽपि





द्विविधा मता ॥ ४ ॥ निराधारा द्वयोस्तेषां साधारा सकलस्य तु ॥ आधारनिरपेक्षेण क्रियते शम्भुचर्य्यया ॥ ५ ॥ तीव्रशक्ति-निपातेन निराधारेति सा स्मृता ॥ आचार्य्यमूर्त्तिमास्थाय मायातीव्रादिभेदया ॥ ६ ॥ शक्त्या यां कुरुते शम्भुः सा साधिकरणोच्यते ॥ इयं चतुर्विधा प्रोक्ता सबीजा बीजवर्जिता ॥७॥ साधिकारानधिकारा यथा तदभिधीयते ॥ समयाचारसंयुक्ता सबीजा जायते नृणाम् ॥ ८ ॥ निर्बीजा त्वसमर्थानां समयाचारवर्जिता ॥ नित्ये नैमित्तिके काम्ये यतः स्यादधिकारिता ॥ ९ ॥ साधिकारा भवेद्दीक्षा साधकाचार्य्ययोरतः ॥ निर्बीजा दीक्षितानां तु यद्वा सम्यपुत्रयोः ॥ १० ॥ नित्यमात्राधिकारत्वाद्दीक्षा निरधिकारिका ॥ द्विविधेयं द्विरूपा हि प्रत्येकमुपजायते ॥ ११ ॥ एका क्रियावती तत्र कुण्डमण्डलपूर्विका ॥ मनोऽव्यापारमात्रेण या सा ज्ञानवती मता ॥ १२ ॥ इत्थं लब्धाधिकारेण दीक्षाऽऽचार्य्येण साध्यते ॥ स्कन्ददीक्षां गुरुः कुर्य्यात्कृत्वा नित्यक्रियां ततः ॥ १३ ॥ प्रणवार्घ्यकराम्भोजः कृतद्वाराधिपार्च्चनः ॥ विघ्नानुत्सार्य्य देहल्यां न्यस्यास्त्रं स्वासने स्थितः ॥ १४ ॥ कुर्वीत भूतसंशुद्धिं मन्त्रयोगं यथोदितम् ॥ तिलतण्डुलसिद्धार्थकुशदूर्वाक्षतोदकम् ॥ १५ ॥ सयवक्षीरनीरं च विशेषार्घ्यमिदन्ततः ॥ तदम्बुना द्रव्यशुद्धिं तिलकं स्वासनात्मनोः ॥ १६ ॥ पूजनं मन्त्रशुद्धिं च पञ्चगव्यं च पूर्ववत् ॥ लाजचन्दनसिद्धार्थभस्मदूर्वाक्षतं कुशान् ॥ १७ ॥ विकिरान्शुद्धलाजांस्तान्सधूपानस्त्रमन्त्रितान् ॥ शस्त्राम्बुप्रोक्षितानेतान्कवचेनावगुण्ठितान् ॥ १८ ॥ नानाप्रहरणाकारान्विघ्नौघविनिवारकान् ॥ दर्भाणां त्रालमानेन कृत्वा षट्त्रिंशता दलैः ॥ १९ ॥ सप्तजप्तं शिवास्त्रेण वेणीं बोधासिमुत्तमम् ॥ शिवमात्मनि विन्यस्य सृष्ट्याधारमभीप्सितम् ॥ २० ॥ निष्कलं च शिवं न्यस्य शिवोऽहमिति भावयेत् ॥ उष्णीषं शिरसि न्यस्य अलंकुर्य्यात्स्वदेहकम् ॥ २१ ॥ गन्धमण्डनकं स्वीये विदध्याद्दक्षिणे करे ॥ विधिनाऽत्रार्च्चयेदीशमित्थं स्याच्छिवमस्तकम् ॥ २२ ॥ विन्यस्य शिवमन्त्रेण भास्वरं निजमस्तके ॥ शिवादभिन्नमात्मानं कर्त्तारं भावयेद्यथा ॥ २३ ॥ मण्डले कर्म्मणां साक्षी कलशे यज्ञरक्षकः ॥ होमाधिकरणं वह्नौ शिष्ये पाशविमोचकः ॥ २४ ॥ स्वात्मन्यनुग्रहीतेति षडाधारो य ईश्वरः ॥ सोऽहमेवेति कुर्वीत भावं स्थिरतरं पुनः ॥ २५ ॥ ज्ञानखड्गकरः स्थित्वा नैर्ऋत्याभिमुखो नरः ॥ सार्घ्याम्बुपञ्च-

गव्याभ्यां प्रोक्षयेद्यागमण्डपम् ॥ २६ ॥ चतुष्पथान्तसंस्कारैः संस्कुर्य्याद्दीक्षणादिभिः ॥ विक्षिप्य विकिरांस्तत्र कुशकूर्च्चोपसंहरेत् ॥ २७ ॥ तानीशदिशि वर्द्धन्यामासनायोपकल्पयेत् ॥ नैर्ऋते वास्तुगीर्वाणान्द्वारे लक्ष्मीं प्रपूजयेत् ॥ २८ ॥ आग्न्ये रत्नैः पूरयन्तीं हृदा मण्डपरूपिणीम् ॥ साम्बुवस्त्रे सरत्ने च धान्यास्ये पश्चिमानने ॥ २९ ॥ ऐशे कुम्भे यजेच्छम्भुं शक्तिं कुम्भस्य दक्षिणे ॥ पश्चिमस्यां तु सिंहस्थां वर्द्धनीं खड्गरूपिणीम् ॥ ३० ॥ दिक्षु शक्रादिदिक्पालान्विष्णवन्तान्प्रणवासनान् ॥ वाहनायुधसंयुक्तान्हृदाऽभ्यर्च्य स्वनामभिः ॥ ३१ ॥ प्रथमं तां समादाय कुम्भस्याग्राभिगामिनीम् ॥ अविच्छिन्नपयोधारां भ्रामयित्वा प्रदक्षिणम् ॥ ३२ ॥ शिवाज्ञां लोकपालानां श्रावयेन्मूलमुच्चरन् ॥ संरक्षत यथायोगं कुम्भं धृत्वाऽथ तां धरेत् ॥ ३३ ॥ ततः स्थिरासने कुम्भे साङ्गं सम्पूज्य शङ्करम् ॥ विन्यस्य शोध्यमध्वानं वर्द्धन्यामस्त्रमर्च्चयेत् ॥ ३४ ॥ ॐ हः अस्त्रासनाय हूं फट् ॥ ॐ ॐ अस्त्रमूर्त्तये नमः । ॐ हूं फट् पाशुपतास्त्राय नमः । ॐ ॐ हृदयाय हूं फट् नमः । ॐ श्रीं शिरसे हूं फट् नमः । ॐ यं शिखायै हूं फट् नमः । ॐ गूं कवचाय हूं फट् नमः । ॐ फट् अस्त्राय हूं फट् नमः । चतुर्वक्त्रं सदंष्ट्रं च स्मरेदस्त्रं सशक्तिकम् ॥ समुद्गरत्रिशूलासि सूर्य्यकोटिसमप्रभम् ॥ ३५ ॥ भगलिङ्गसमायोगं विदध्याल्लिङ्गमुद्रया ॥ अङ्गुष्ठेन स्पृशेत्कुम्भं हृदा मुष्ट्यास्त्रवर्द्धनीम् ॥ ३६ ॥ भुक्तये मुक्तये त्वादौ मुष्टिना वर्द्धनीं स्पृशेत् ॥ कुम्भस्य मुखरक्षार्थं ज्ञानखड्गं समर्पयेत् ॥ ३७ ॥ शस्त्रं च मूलमन्त्रस्य शत कुम्भे निवेशयेत् ॥ तद्दशांशेन वर्द्धन्यां रक्षां विज्ञापयेत्ततः ॥ ३८ ॥ यथेदं कृतयत्नेन भगवन्मखमन्दिरम् ॥ रक्षणीयं जगन्नाथ सर्वाध्वरधर त्वया ॥ ३९ ॥ प्रणवस्थं चतुर्बाहुं वायव्ये गणमर्च्चयेत् ॥ स्थण्डिले शिवमभ्यर्च्य सार्घ्यः कुण्डं व्रजेन्नरः ॥ ४० ॥ निविष्टो मन्त्रतृप्त्यर्थमर्घ्यगन्धघृतादिकम् ॥ वामे सव्ये तु विन्यस्य समिद्दर्भतिलादिकम् ॥ ४१ ॥ कुण्डवह्निस्रगाज्यादि प्राग्वत्संस्कृत्य भावयेत् ॥ मुखतामूर्ध्ववक्त्रस्य हृदि वह्नौ शिवं यजेत् ॥ ४२ ॥ स्वमूर्तौ शिवकुंभे च स्थण्डिले त्वग्निशिष्ययोः ॥ सृष्टिन्यासेन विन्यस्य शोध्याध्वानं यथाविधि ॥ ४३ ॥ कुण्डमानं मुखं ध्यात्वा हृदाहुतिभिरीप्सितम् ॥ बीजानि सप्तजिह्वानामग्नेर्होमाय भण्यते ॥ ४४ ॥ विरेफावन्तिमौ वर्णौ रेफषष्ठस्वरान्वितौ ॥ इन्दुबिन्दुशिखायुक्तौ जिह्वाबीजान्युपक्रमात् ॥ ४५ ॥





हिरण्या कनका रक्ता कृष्णा तदनु सुप्रभा ॥ अतिरिक्ता बहुरूपा रुद्रेन्द्राग्न्याप्यदिङ्मुखाः ॥ ४६ ॥ क्षीरादिमधुरैर्होमं कुर्य्या-
च्छान्तिकपौष्टिके ॥ अभिचारे तु पिण्याकसक्तुकञ्चुककाञ्जिकैः ॥ ४७ ॥ लवणै राजिकातक्रकटुतैलैश्च कण्टकैः ॥ समिद्भिरपि
वक्राभिः क्रुद्धो भाष्याणुना यजेत् ॥ ४८ ॥ कदम्बकलिकाहोमाद्यक्षिणी सिध्यति ध्रुवम् ॥ बन्धूककिंशुकादीनि वश्याकर्षाय
होमयेत् ॥४९॥ बिल्वं राज्याय लक्ष्म्यर्थं पाटलांश्चम्पकानपि ॥ पद्मानि चक्रवर्त्तित्वे भक्ष्यभोज्यानि सम्पदे ॥५०॥ दूर्वां व्याधि-
विनाशाय सर्वसत्त्ववशीकृते ॥ प्रियङ्गु पाटलीपुष्पं चूतपत्रं ज्वरान्तकम् ॥ ५१ ॥ मृत्युञ्जयो मृत्युजित्स्याद्वृद्धिः स्यात्तिलहो-
मतः ॥ रुद्राशान्तिः सर्वशान्त्या अथ प्रस्तुतमुच्यते ॥५२॥ आहुत्यष्टशतर्मूलमङ्गानि तु दशांशतः ॥ सन्तर्पयेत मूलेन दद्यात्पूर्णां
यथा पुरा ॥५३॥ तथा शिष्यप्रवेशाय प्रतिशिष्यं शतं जपेत् ॥ दुर्निमित्तापसाराय सुनिमित्तकृते तथा ॥५४॥ शतद्वयं च होतव्यं
मूलमन्त्रेण पूर्ववत् ॥ मूलाद्यष्टास्त्रमन्त्राणां स्वाहान्तैस्तर्पणं सकृत् ॥ ५५ ॥ शिखासम्पुटितैर्बीजैर्हुंफडन्तैश्च दीपनम् ॥
ॐ हौं शिवाय स्वाहेत्यादिमन्त्रैश्च तर्पणम् ॥ ५६ ॥ ॐ हूं हौं हीं शिवाय हूं फडित्यादिदीपनम् ॥ ततः शिवांभसा स्थालीं
क्षालितां वर्मगुण्ठिताम् ॥ ५७ ॥ चन्दनादिसमालब्धां बध्नीयात्कटकं गले ॥ वर्मास्त्रजप्तसद्दर्भपत्राभ्यां चरुसिद्धये ॥ ५८ ॥
मर्मांधैरासने दत्ते सार्द्धेन्दुकृतमंडले ॥ न्यस्तायां मूर्तिभूतायां भावपुष्पैः शिवं यजेत् ॥ ५९ ॥ वस्त्रबद्धमुखायां वा स्थाल्यां पुष्पै-
र्बहिर्भवैः ॥ चुल्ल्यां पश्चिमवक्त्रायां शुद्धायां वीक्षणादिभिः ॥ ६० ॥ न्यस्ताहङ्कारबीजायां न्यस्तायां कुंडदक्षिणे ॥ धर्माधर्मश-
रीरायां जप्तायां मानुषात्मना ॥ ६१ ॥ स्थालीमारोपयेदस्त्रजप्तां गव्यांबुमार्जिताम् ॥ गव्यं पयोऽस्त्रसंशुद्धं प्रासादशतमंत्रितम्
॥६२॥ तंडुलाञ्छ्यामकादीनां निक्षिपेत्तत्र तद्यथा ॥ एकशिष्यविधानाय तेषां प्रसृतिपञ्चकम् ॥६३॥ प्रसृतिं प्रसृतिं पश्चाद्वर्द्धयेद्
द्व्यादिषु क्रमात् ॥ कुर्य्याच्चानलमन्त्रेण पिधानं कवचाणुना ॥ ६४ ॥ शिवाग्नौ मूलमंत्रेण पूर्वास्यश्चरुकं पचेत् ॥ सुस्विन्नेऽस्तत्र 
तच्चुल्ल्यां स्रुवमापूर्य सर्पिषा ॥ ६५ ॥ स्वाहान्तैः संहितामन्त्रैर्दत्त्वा तप्ताभिघारणम् ॥ संस्थाप्य मण्डले स्थालीं सद्दर्भेऽस्त्राणुना
कृते ॥ ६६ ॥ प्रणवेन पिधायास्यां तद्देहं लेपनं हृदा ॥ सुशीतलो भवत्येवं प्राप्य शीताभिघारणम् ॥ ६७ ॥ विदध्यात्संहिता-

मन्त्रैः शिष्यं प्रति सकृत्सकृत् ॥ धर्माद्यासनके हुत्वा कुंडमंडलपश्चिमे ॥ ६८ ॥ संपातं च स्रुचा हुत्वा शुद्धिं संहितया चरेत् ॥ चरुकं सकृदालभ्य तयैव वषडन्तया ॥ ६९ ॥ धेनुमुद्रामृतीभूतं स्थंडिले शान्तिकं नयेत् ॥ साज्यभागं स्वशिष्याणां भागो देवाय वह्नये ॥ ७० ॥ कुर्यात्तु लोकपालादेः समध्वाज्यमिदं त्रयम् ॥ नमोऽन्तेन हृदा दद्यात्तेनैवाचमनीयकम् ॥ ७१ ॥ साज्यं मंत्रशतं हुत्वा दद्यात्पूर्णां यथाविधि ॥ मंडलं कुंडतः पूर्वे मध्ये वा शम्भुकुम्भयोः ॥ ७२ ॥ रुद्रमातृगणादीनां निर्वर्त्यान्तर्बलिं हृदा ॥ शिवमध्येऽप्यलब्धाज्ञो विधायैकत्वभावनम् ॥ ७३ ॥ सर्वज्ञतादियुक्तोऽहं समन्ताच्चोपरि स्थितः ॥ ममांशो योजनास्थानमाधिष्ठाताऽहमध्वरे ॥ ७४ ॥ शिवोऽयमित्यहङ्कारी निष्क्रमेद्यागमण्डपात् ॥ न्यस्तपूर्वायसन्धभें शस्त्राणुकृतमण्डले ॥ ७५ ॥ प्रणवासनके शिष्यं शुक्लवस्त्रोत्तरीयकम् ॥ स्नातं चोदङ्मुखे मुक्तयै पूर्ववक्त्रं तु भुक्तये ॥ ७६ ॥ ऊर्ध्वंकायं समारोप्य पूर्वास्यं प्रविलोकयेत् ॥ चरणादिशिखां यावन्मुक्तौ भुक्तौ विलोमतः ॥ ७७ ॥ चक्षुषा सप्रसादेन शैवं धाम विवृण्वता ॥ अस्त्रोदकेन सम्प्रोक्ष्य मन्त्राम्बुस्नानसिद्धये ॥ ७८ ॥ भस्मस्नानाय विघ्नानां शान्तये पापभित्तये ॥ सृष्टिसंहारयोगेन ताडयेदस्त्रभस्मना ॥ ७९ ॥ पुनरस्त्राम्बुना प्रोक्ष्य सकलीकरणाय तम् ॥ नाभेरूर्ध्वं कुशाग्रेण मार्जनीयास्त्रमुच्चरन् ॥८०॥ त्रिधाऽऽलभेत तन्मूलैरघमर्षाय नाभ्यधः॥ द्वैविध्याय च पाशानामालभेत शराणुना ॥८१॥ तच्छरीरे शिवं साङ्गं सासनं विन्यसेत्ततः ॥ पुष्पादिपूजितस्यास्य नेत्रे नेत्रेण वा हृदा ॥ ८२ ॥ बद्धामंत्रितवस्त्रेण सितेन सदशेन च ॥ प्रदक्षिणक्रमादेनं प्रवेश्य शिवदक्षिणम् ॥ ८३ ॥ सवस्त्रमासनं दद्याद्यथावर्णं निवेदयेत् ॥ संहारमुद्रयात्मानं मूर्त्या तस्य हृदम्बुजे ॥ ८४ ॥ निरुद्ध्य शोधिते काये न्यासं कृत्वा तमर्चयेत् ॥ पूर्वाननस्य शिष्यस्य मूलमन्त्रेण मस्तके ॥ ८५ ॥ शिवहस्तं प्रदद्याच्च रुद्रेशपददायकम् ॥ शिवसेवाग्रहोपायं दत्तहस्तं शिवाणुना ॥ ८६ ॥ शिवे प्रक्षेपयेत्पुष्पमपनीयार्चकान्तरम् ॥ तत्पात्रस्थानमन्त्राढ्यं शिवदेवगणानुगम् ॥ ८७ ॥ विप्रादीनां क्रमान्नाम कुर्य्याद्वा स्वेच्छया गुरुः ॥ प्रणतिं कुम्भवर्द्धन्योः कारयित्वाऽनलान्तिके ॥ ८८ ॥ सदक्षिणासने तद्वत्सौम्यास्यमुपवेशयेत् ॥ शिष्यदेहविनिष्क्रान्तां सुषुम्णामिव चिन्तयेत् ॥ ८९ ॥ निजविग्रहलीनां च दर्भमूलेन मन्त्रितम् ॥ दर्भाग्रं दक्षिणे तस्य विधाय करण-

ह्वे ॥ ९० ॥ तन्मूलमात्मजङ्घायाममं चेति शिखिध्वजे ॥ शिष्यस्य हृदयं गत्वा रेचकेन शिवाणुना ॥ ९१ ॥ पूरकेण समागत्य स्वकीयं हृदयान्तरम् ॥ शिवाग्निना पुनः कृत्वा नाडीसन्धानमीदृशम् ॥ ९२ ॥ हृदा तत्सान्निधानार्थं जुहुयादाहुतित्रयम् ॥ शिवहस्तस्थिरत्वार्थं शतं मूलेन होमयेत् ॥ इत्थं समयदीक्षायां भवेद्योग्यो भवार्चने ॥ ९३ ॥ इत्यादिमहापुराणे आग्नेये समयदीक्षाविधिर्नामैकाशीतितमोऽध्यायः ॥ ८१ ॥ अथ संस्कारदीक्षाविधिः ॥ ईश्वर उवाच ॥ वक्ष्ये संस्कारदीक्षाया विधानं शृणु षण्मुख ॥ आवाहयेन्महेशस्य वह्निस्थस्य शिरो हृदि ॥ १ ॥ संश्लिष्टौ तौ समभ्यर्च्य संतर्प्य हृदयात्मना ॥ तयोः सन्निधये दद्यात्तेनैवाहुतिपञ्चकम् ॥ २ ॥ कुसुमेनास्त्रलिप्तेन ताडयेत्तं हृदा शिशुम् ॥ प्रस्फुरत्तारकाकारं चैतन्यं तत्र भावयेत् ॥ ३ ॥ प्रविश्य तत्र हुङ्कारयुक्तं रेचकयोगतः ॥ संहारिण्या तदाकृष्य पूरकेण हृदि न्यसेत् ॥ ४ ॥ ततो वागीश्वरीयोनौ मुद्रयोद्भवसञ्ज्ञया ॥ हृत्संपुटितमन्त्रेण रेचकेन विनिक्षिपेत् ॥ ५ ॥ ओं हां हां हां आत्मने नमः ॥ जाज्वल्यमाने निर्धूमे जुहुयादिष्टसिद्धये ॥ अप्रवृद्धे सधूमे तु होमे वह्नौ न सिध्यति ॥ ६ ॥ स्निग्धः प्रदक्षिणावर्त्तः सुगन्धिः शस्यतेऽनलः ॥ विपरीतः स्फुलिङ्गी च भूमिस्पर्शः प्रशस्यते ॥ ७ ॥ इत्येवमादिभिश्चिह्नैर्हुत्वा शिष्यस्य कल्मषम् ॥ पापभक्षणहोमेन दहेद्वा तं भवात्मना ॥ ८ ॥ द्विजत्वापादनार्थाय तथा रुद्रांशभावने ॥ आहारबीजसंशुद्धौ गर्भाधानाय संस्थितौ ॥ ९ ॥ सीमन्ते जन्मतो नामकरणाय च होमयेत् ॥ शतानि पञ्चमूलेन वौषडादिदशांशतः ॥ १० ॥ शिथिलीभूतबन्धस्य शक्तावुत्कर्षणं च यत् ॥ आत्मनो रुद्रपुत्रत्वे गर्भाधानं तदुच्यते ॥ ११ ॥ स्वातन्त्र्यात्मगुणव्यक्तिरिह पुंसवनं मतम् ॥ मायात्मनोर्विवेकेन ज्ञानं सीमन्तवर्द्धनम् ॥ १२ ॥ शिवादितत्त्वशुद्धेस्तु स्वीकारो जननं मतम् ॥ बोधनं यच्छिवत्वेन शिवत्वार्हस्य नो मतम् ॥ १३ ॥ संहारमुद्रयात्मानं स्फुरद्वह्निकणोपमम् ॥ विदधीत समादाय निजे हृदयपङ्कजे ॥ १४ ॥ ततः कुम्भकयोगेन मूलमन्त्रमुदीरयेत् ॥ कुर्यात्समवशीभावं तदा च शिवयोर्हृदि ॥ १५ ॥ ब्रह्मादिकारणात्यागकमाद्रेचकयोगतः ॥ नीत्वा शिवान्तमात्मानमादायोद्भवमुद्रया ॥ १६ ॥

कुर्य्यात्तदोचिताम् ॥ प्रणतिं चात्मने शिष्यं समयाञ्श्रावयेत्तथा ॥ १८ ॥ देवं न निन्देच्छास्त्राणि निर्म्माल्यादि न लङ्घयेत् ॥ शिवाग्निगुरुपूजा च कर्त्तव्या जीविताविधि ॥ १९ ॥ बालबालिशवृद्धस्त्रीभोगभुग्व्याधितात्मनाम् ॥ यथाशक्ति ददीतार्थं समर्थस्य समग्रकान् ॥ २० ॥ भूताङ्गानि जटाभस्मदण्डकौपीनसंयमान् ॥ ईशानाद्यैर्हृदाद्यैर्वा परिजप्य यथाक्रमात् ॥ २१ ॥ स्वाहान्तसंहितामन्त्रैः पात्रेष्वारोप्य पूर्ववत् ॥ सम्पादितं द्रुतं हुत्वा स्थण्डिलेशाय दर्शयेत् ॥ २२ ॥ रक्षणाय घटाधस्तादारोप्य क्षणमात्रकम् ॥ शिवस्याज्ञां समादाय ददीत व्रतिने गुरुः ॥ २३ ॥ एवं समयदीक्षायां विशिष्टायां विशेषतः ॥ वह्निहोमागमज्ञानयोग्यः सञ्जायते शिशुः ॥ २४ ॥ इत्यादिमहापुराणे आग्नेये संस्कारदीक्षाविधिर्नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ अथ निर्वाणदीक्षा ॥ ईश्वर उवाच ॥ अथ निर्वाणदीक्षायां कुर्यान्मूलादिदीपनम् ॥ पाशबन्धनशक्त्यर्थं ताडनादिकृतेन वा ॥ १ ॥ एकैकया तदाहुत्या प्रत्येकं तत्रयेण वा ॥ बीजगर्भशिखाद्धं तु हूं फडन्तध्रुवादिना ॥ २ ॥ ॐ हूं ह्रौं हौं हूं फडिति मूलमन्त्रस्य दीपनम् ॥ ॐ हूं ह्रौं हूं फडिति हृदय एवं शिरोमुखे ॥ ३ ॥ प्रत्येकं दीपनं कुर्य्यात्सर्व्वस्मिन्क्रूरकर्मणि ॥ शान्तिके पौष्टिके चास्य वषडन्तादिनाणुना ॥ ४ ॥ वषड्वौषट्समोपेतैः सर्वकाम्योपरिस्थितैः ॥ हवनं संवरैः कुर्य्यात्सर्वत्राप्यायनादिषु ॥ ५ ॥ ततः स्वसव्यभागस्थं मण्डले शुद्धविग्रहम् ॥ शिष्यं सम्पूज्य तत्सूत्रं सुषुम्नेति विभावितम् ॥ ६ ॥ मूलेन तच्छिखाबन्धं पादाङ्गुष्ठान्तमानयेत् ॥ संहारेण मुमुक्षोस्तु बध्नीयाच्छिष्यकायके ॥७॥ पुंसस्तु दक्षिणे भागे वामे नार्य्या नियोजयेत् ॥ शक्तिं च शक्तिमन्त्रेण पूजितां तस्य मस्तके ॥८॥ संहारमुद्रयाऽऽदाय सूत्रं तेनैव योजयेत् ॥ नाडीं त्वादाय मूलेन सूत्रे न्यस्य हृदार्चयेत् ॥ ९॥ अवकुण्ठ्य तु रुद्रेण हृदयेनाहुतित्रयम् ॥ प्रपद्यात्सन्निधानार्थं शक्तावप्येवमेव हि ॥ १० ॥ ॐ हां वर्णाध्वने नमो हां भवनाध्वने नमः ॥ हां ॐ कलाध्वने नमः शोध्याध्वानं हि सूत्रके ॥ ११ ॥ न्यस्यास्त्रवारिणा शिष्यं प्रोक्ष्यास्त्रमन्त्रितेन च ॥ पुष्पेण हृदि सन्ताड्य शिष्यदेहे प्रविश्य च ॥ १२ ॥ गुरुश्च तत्र हुङ्कारयुक्तं रेचकयोगतः ॥ चैतन्यं हंसबीजस्थं विश्लिष्येदायुधात्मना ॥ १३ ॥ ॐ हौं हूं फट् । आच्छिद्य शक्तिसूत्रेण हां हं स्वाहेति चाणुना ॥ संहारमुद्रया सूत्रे नाडीभूते नियोजयेत् ॥ १४ ॥





ॐ हां हं हाम् आत्मने नमः । व्यापकं भावयेदेनं तनुत्रेणावकुण्ठयेत् ॥ आहुतित्रितयं दद्याद्दृदा सन्निधिहेतवे ॥ १५ ॥
विद्यादेहं च विन्यस्य शान्त्यतीतावलोकनम् ॥ तस्यामितरतत्त्वाद्यं मन्त्रभूतं विचिन्तयेत् ॥ १६ ॥ ॐ हां हौं शान्त्यतीतक-
लापाशाय नम इत्यनेनावलोकयेत् ॥ द्वे तत्त्वे मन्त्रमप्येकं पदं वर्णांश्च षोडश ॥ तथाऽष्टौ भुवनान्यस्यां बीजनाडीकथ-
द्वयम् ॥ १७ ॥ विषयं च गुण चैकं कारणं च सदाशिवम् ॥ सितायां शान्त्यतीतायामन्तर्भाव्य प्रपीडयेत् ॥ १८ ॥
ॐ हौं शान्त्यतीतकलापाशाय हूं फट् ॥ संहारमुद्रयाऽऽदाय विदध्यात्सूत्रमस्तके ॥ पूजयेदाहुतीस्तिस्रोदद्यात्सन्निधि-
हेतवे ॥ १९ ॥ तत्त्वे द्वे अक्षरे द्वे च बीजनाडीकथद्वयम् ॥ गुणौ मन्त्रौ तथाऽङ्गस्थमेकं कारणमीश्वरम् ॥ २० ॥
पदानि भानुसङ्ख्यानि भुवनानि दश सप्त च ॥ एकं च विषयं शान्तौ कृष्णायामच्युतं स्मरेत् ॥ २१ ॥ ताडयित्वा
समादाय मुखसूत्रे नियोजयेत् ॥ जुहुयान्निजबीजेन सान्निध्यायाहुतित्रयम् ॥ २२ ॥ विद्यायां सप्त तत्त्वानि पदाना-
मेकविंशतिम् ॥ षड्वर्णान्सञ्चरं चैकं लोकानां पञ्चविंशतिम् ॥ २३ ॥ गुणानां त्रयमेकं च विषयं रुद्रकारणम् ॥ अन्तर्भाव्या-
तिरिक्तायां बीजनाडीकथद्वयम् ॥ २४ ॥ अस्त्रमादाय दद्याच्च पदं द्व्यधिकविंशतिम् ॥ लोकानां च कलानां च षष्टिं गुणचतु-
ष्टयम् ॥ २५ ॥ मन्त्राणां त्रयमेकं च विषयं कारणं हरिम् ॥ अन्तर्भाव्य प्रतिष्ठायां शक्तायां ताडनादिकम् ॥ २६ ॥ विधाय
नाभिसूत्रस्थां सन्निधायाहुतीर्यजेत् ॥ ह्रीं भुवनानां शतं साग्रं पदानामष्टविंशतिम् ॥ २७ ॥ बीजनाडीसमीराणां द्वयोरिन्द्रि-
ययोरपि ॥ वर्णं तत्त्वं च विषयमेकैकं गुणपञ्चकम् ॥ २८ ॥ हेतुं ब्रह्माण्डमन्त्रस्थं शम्बराणां चतुष्टयम् ॥ निवृत्तौ पीतवर्णायाम-
न्तर्भाव्य प्रताडयेत् ॥ २९ ॥ आदौ यत्तत्त्वभागान्ते सूत्रे विन्यस्य पूजयेत् ॥ जुहुयादाहुतीस्तिस्रः सन्निधानाय पावके
॥ ३० ॥ इत्यादाय कलासूत्रे योजयेच्छिष्यविग्रहात् ॥ सबीजायां तु दीक्षायां समयाचारयागतः ॥ ३१ ॥ देहारम्भकरक्षार्थं
मन्त्रसिद्धिफलादपि ॥ इष्टापूर्त्तादिधर्म्मार्थं व्यतिरिक्तं प्रबन्धकम् ॥ ३२ ॥ चैतन्यबोधकं सूक्ष्मं कलानामन्तरे स्मरेत् ॥ अमुनैव
क्रमेणाथ कुर्य्यात्तर्पणदीपने ॥ ३३ ॥ आहुतिभिः स्वमन्त्रेण तिसृभिस्तिसृभिस्तथा ॥ ॐ हौं शान्त्यतीतकलापाशाय

स्वाहेत्यादितर्पणम् ॥ ॐ हां ह हां शान्त्यतीतकलापाशाय हूम्फडित्यादिदीपनम् ॥ तत्सूत्रं व्याप्तिबोधाय कलास्थानेषु पञ्चसु ॥ ३४ ॥ संगृह्य कुङ्कुमाज्येन तत्र साङ्गं शिवं यजेत् ॥ हूम्फडन्तैः कलामन्त्रैर्भित्त्वा पाशाननुक्रमात् ॥ ३५ ॥ नमोऽन्तैश्च प्रविश्यान्तः कुर्य्याद्ग्रहणबन्धने ॥ ओं हूं हां हा हां हुं फट शान्त्यतीतकलां गृह्णामि बध्नामि चेत्यादिमन्त्रैः कलानां ग्रहणबन्धनादिप्रयोगः ॥ पाशादीनां च स्वीकारो ग्रहणं बन्धनं पुनः ॥ ३६ ॥ पुरुषं प्रति निःशेषव्यापारप्रतिपत्तये ॥ उपवेश्याथ तत्सूत्रं शिष्यस्कन्धे निवेशयेत् ॥ ३७ ॥ विस्मृताघप्रमोषाय शतं मूलेन होमयेत् ॥ शरावसम्पुटे पुंसः स्त्रियाश्च प्रणितोदरे ॥ ३८ ॥ हृदस्त्रसम्पुटं सूत्रं विधायाभ्यर्च्चयेद्धृदा ॥ सूत्रं शिवेन साङ्गेन कृत्वा सम्पातशोधितम् ॥ ३९ ॥ निदध्यात्कलशस्याधो रक्षां विज्ञापयेदिति ॥ शिष्यं पुष्पं करे दत्त्वा सम्पूज्य कलशादिकम् ॥ ४० ॥ प्रणम्य्य बहिर्यायाद्यागमन्दिरमध्यतः ॥ मण्डलत्रितयं कृत्वा मुमुक्षूनुत्तराननान् ॥ ४१ ॥ भुक्तये पूर्व्ववक्त्रांश्च शिष्यांस्तत्र निवेशयेत् ॥ प्रथमे पञ्चगव्यस्य प्राशयेच्चुलकत्रयम् ॥ ४२ ॥ पाणिना कुशयुक्तेन अचितानन्तरान्तरम् ॥ चरुं ततस्तृतीये तु ग्रासत्रितयसम्मितम् ॥ ४३ ॥ अष्टग्रासप्रमाणं वा दशनस्पर्शवर्जितम् ॥ पालाशपुटके मुक्तौ भुक्तौ पिप्पलपत्रके ॥ ४४॥ हृदा सम्भोजनं दत्त्वा पूतैराचामयेज्जलैः ॥ दन्तकाष्ठं हृदा कृत्वा प्रक्षिपेच्छोभने शुभम् ॥ ४५ ॥ न्यूनादिदोषमोषाय मूलेनाष्टोत्तरं शतम् ॥ विधाय स्थण्डिलेशाय सर्व्वकर्म्मसमर्पणम् ॥४६॥ पूजाविसर्जनं चास्य चण्डेशस्य च पूजनम् ॥ निर्म्माल्यमपनीयाथ शेषमग्नौ यजेश्वरोः ॥ ४७ ॥ कलशं लोकपालांश्च पूजयित्वा विसृज्य च ॥ विसृजेद्गणमग्निं च रक्षितं यदि बाह्यतः ॥ ४८ ॥ बाह्यतो लोकपालानां दत्त्वा सङ्क्षेपतो बलिम् ॥ भस्मना शुद्धतोयैर्वा स्नात्वा यागालयं विशेत् ॥ ४९ ॥ गृहस्थान्दर्भशय्यायां पूर्वशीर्षान्सुरक्षितान् ॥ हृदा सद्रस्मशय्यायां यतीन्दक्षिणमस्तकान् ॥ ५०॥ शिखाबद्धशिखानस्त्रसप्तमाणवकान्वितान् ॥ विज्ञाय स्नापयेच्छिष्यांस्ततो यायात्पुनर्बहिः ॥५१॥ ॐ हिलि हिलि त्रिशूलपाणये स्वाहा ॥ पञ्चगव्यं चरुं प्राश्य गृहीत्वा दन्तधावनम् ॥ समाचम्य शिवं ध्यात्वा शय्यामास्थाय पावनीम् ॥ ५२ ॥ दीक्षागतं कियाकाण्डं संस्मरन्संविशेद्गुरुः ॥ इति सङ्क्षेपतः प्रोक्तो







विधिर्दीक्षाधिवासने ॥ ५३ ॥ इत्यादिमहापुराणे आग्नेयें निर्वाणदीक्षायामधिवासनविधिर्नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
॥ अथ निर्वाणदीक्षाविधानम् ॥ ईश्वर उवाच ॥ अथ प्रातः समुत्थाय कृतस्नानादिको गुरुः ॥ दध्यार्द्रमांसमद्यादेः प्रशस्ताऽ-
भ्यवहारिता ॥ १ ॥ गजाश्वारोहणं स्वप्ने शुभं शुक्लांशुकादिकम् ॥ तैलाभ्यङ्गादिकं हीनं होमो घोरेण शान्तये ॥ २ ॥ नित्य-
कर्म्मद्वयं कृत्वा प्रविश्य मखमण्डपम् ॥ स्वाचान्तो नित्यवत्कर्म्म कुर्य्यान्नैमित्तिके विधौ ॥ ३ ॥ ततः संशोध्य चात्मानं शिवह-
स्तं तथात्मनि ॥ विन्यस्य कुम्भगं प्राच्यं इन्द्रादीनामनुक्रमात् ॥ ४ ॥ मण्डले स्थण्डिले वाऽपि प्रकुर्वीत शिवार्चनम् ॥ तर्पणं
पूजनं वह्नेः पूर्णान्तं मन्त्रतर्पणम् ॥ ५ ॥ दुःस्वप्नदोषमोषाय शस्त्रेणाष्टाधिकं शतम् ॥ हुत्वा हूँ सम्पुटेनैव विदध्यान्मन्त्रदीपनम् ॥
॥ ६ ॥ अन्तर्बलिविधानं च मध्ये स्थंडिलकुम्भयोः ॥ कृत्वा शिष्यप्रवेशाय लब्धानुज्ञो बहिर्व्रजेत् ॥ ७ ॥ कुर्य्यात्समयवत्तत्र
मण्डलारोपणादिकम् ॥ सम्पातहोमं तन्नाडीरूपदर्भकरानुगम् ॥ ८ ॥ सत्सन्निधानाय तिस्रो हुत्वा मूलाणुनाऽहुतीः ॥ कुम्भ-
स्थं शिवमभ्यर्च्य पाशसूत्रमुपाहरेत् ॥ ९ ॥ स्वदक्षिणोर्ध्वकायस्य शिष्यस्याभ्यर्चितस्य च ॥ तच्छिखायां निबध्नीयात्पादा-
ङ्गुष्ठावलम्बितम् ॥ १० ॥ तं निवेश्य निवृत्तेस्तु व्याप्तिमालोक्य चेतसा ॥ ज्ञेयानि भुवनान्यस्यां शतमष्टाधिकं ततः ॥ ११ ॥
कपालोऽजश्च बुद्धश्च वज्रदेहः प्रमर्द्दनः ॥ विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः ॥ १२ ॥ अग्नी रुद्रो हुताशी च पिङ्गलः
खादको हरः ॥ ज्वलनो दहनो बभ्रुर्भस्मान्तकक्षपान्तकौ ॥ १३ ॥ याम्यमृत्युहरो धाता विधाता कार्य्यरञ्जकः ॥ कालो धर्मोऽ-
प्यधर्मश्च संयोक्ता च वियोगकः ॥ १४ ॥ नैर्ऋतो मारणो हन्ता क्रूरदृष्टिर्भयानकः ॥ ऊर्द्धांशको विरूपाक्षो धूम्रलोहितदंष्ट्रवान् ॥
॥ १५ ॥ बलश्चातिबलश्चैव पाशहस्तो महाबलः ॥ श्वेतश्च जयभद्रश्च दीर्घबाहुर्जलान्तकः ॥ १६ ॥ वडवास्यश्च भीमश्च
दशैते वारुणाः स्मृताः ॥ शीघ्रो लघुर्वायुवेगः सूक्ष्मस्तीक्ष्णः क्षपान्तकः ॥ १७ ॥ पञ्चान्तकः पञ्चशिखः कपर्द्दी मेघवाहनः ॥
जटामुकुटधारी च नानारत्नधरस्तथा ॥ १८ ॥ निधीशो रूपवान्धन्यः सौम्यदेहः प्रसादकृत् ॥ प्रकाशोऽप्यथ लक्ष्मीवान्काम-
रूपो दशोत्तरे ॥ १९ ॥ विद्याधरो ज्ञानधरः सर्वज्ञो वेदपारगः ॥ मातृवृत्तश्च पिङ्गाक्षो भूतपालो बलिप्रियः ॥ २० ॥ सर्वविद्या-

विधाता च सुखदुःखहरो दश ॥ अनन्तः पालको धीरः पातालाधिपतिस्तथा ॥ २१॥ वृषी वृषधरो वीर्य्यो ग्रसनः सर्वतोमुखः॥
लोहितश्चैव विज्ञेया दश रुद्राः फणिस्थिताः ॥२२॥ शम्भुर्विभुर्गणाध्यक्षस्त्र्यक्षास्त्रिदशवन्दितः ॥ संहारश्च विहारश्च लाभो लिप्सुर्वि-
चक्षणः ॥ २३ ॥ अत्ता कुहककालाग्निरुद्रा हाटक एव च ॥ कूष्माण्डश्चैव सत्यश्च ब्रह्मा विष्णुश्च सप्तमः ॥ २४ ॥ रुद्रश्चाष्टा-
विमे रुद्राः कटाहाभ्यन्तरे स्थिताः ॥ एतेषामेव नामानि भुवनानामपि स्मरेत् ॥ २५ ॥ भवोद्भवः सर्वभूतः सर्वभूतसुखप्रदः ॥
सर्वसान्निध्यकृद्ब्रह्मविष्णुरुद्रशरार्चितः ॥ २६ ॥ संस्तुत पूर्वस्थित ॐ साक्षिन् ॐ रुद्रान्तक ॐ पतङ्ग ॐ शब्द ॐ सूक्ष्म ॐ शिव
सर्व सर्वद सर्वसान्निध्यकर ब्रह्मविष्णुरुद्रकर ॐ नमः शिवाय ॐ नमो नमः ॥ अष्टाविंशतिपदानि व्योम व्यापि मनोगुह ॥
सद्योहृदस्त्रनेत्राणि मन्त्रवर्णाष्टको मतः ॥ २७ ॥ बीजाकारो मकारश्च नाड्याविडापिङ्गलाह्वये ॥ प्राणापानावुभौ वायू घ्राणो-
पस्थौ तथेन्द्रिये ॥ २८ ॥ गन्धस्तु विषयः प्रोक्तो गन्धादिगुणपञ्चके ॥ पार्थिवं मण्डलं पीतं वज्राङ्कं चतुरस्त्रकम् ॥ २९ ॥
विस्तारो योजनानां तु कोटिरस्य शताहता ॥ अत्रैवान्तर्गता ज्ञेया योनयोऽपि चतुर्दश ॥ ३० ॥ प्रथमा सर्वदेवानां मन्वाद्या
देवयोनयः ॥ मृगः पक्षी च पशवश्चतुर्द्धा तु सरीसृपाः ॥ ३१ ॥ स्थावरं पञ्चमं सर्वं योनिः षष्ठी अमानुषी ॥ पैशाचं राक्षसं
याक्षं गान्धर्वं चैन्द्रमेव च ॥ ३२ ॥ सौम्यं प्राणेश्वरं ब्राह्ममष्टमं परिकीर्त्तितम् ॥ अष्टानां पार्थिवं तत्त्वमधिकारास्पदं मतम् ॥
॥ ३३ ॥ लयस्तु प्रकृतौ बुद्धौ भोगी ब्रह्मा च कारणम् ॥ ततो जाग्रदवस्थानैः समस्तैर्भुवनादिभिः ॥ ३४ ॥ निवृत्तिं गर्भितां
ध्यात्वा स्वमन्त्रेण नियोज्य च ॥ ॐ हां हूँ हां निवृत्तिकलापाशाय हुं फट् तत ॐ हां हां निवृत्तिकलापाशाय स्वाहेत्यनेना-
ङ्कुशमुद्रया पूरकेणाकृष्य ॐ हूं ह्रां हूं निवृत्तिकलापाशाय हूं फडित्यनेन संहारमुद्रया कुम्भकेनाधःस्थानादादाय ॐ ॐ ह्रं हां
निवृत्तिकलापाशाय नम इत्यनेनोद्भवमुद्रया रेचकेन कुम्भे संस्थाप्य ॐ हां निवृत्तिकलापाशाय नमः इत्यनेनार्घ्यं दत्त्वा सम्पू-
ज्य विमुखेनैव स्वाहान्तेनैव सन्निधानायाहुतित्रयं सन्तर्पणाहुतित्रयं च दत्त्वा ओं हां ब्रह्मणे नम इति ब्रह्माणमावाह्य सम्पूज्य च
स्वाहान्तेन सन्तर्प्य ब्रह्मंस्तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् ॥ ३५ ॥ भाव्यं त्वयाऽनुकूलेन विधिं विज्ञापयेदिति ॥ आवा-





ह्रयेत्ततो देवीं रक्षां वागीश्वरीं हृदा ॥ ३६ ॥ इच्छाज्ञानक्रियारूपां षड्विधां ह्येककारणम् ॥ पूजयेत्तर्पयेद्देवीं प्रकारेणामुना
ततः ॥ ३७ ॥ वागीश्वरीं विनिःशेषयोनिविक्षोभकारणम् ॥ हृत्सम्पुटार्थबीजादिहूंफडन्तशराणुना ॥ ३८ ॥ ताडयेद्धृदये तस्य
प्रविशेत्स विधानवित् ॥ ततः शिष्यस्य चैतन्यं हृदि वह्निकणोपमम् ॥ ३९ ॥ निवृत्तिस्थं युतं पाशैर्ज्येष्ठया विभजेद्यथा ॥ ॐ हां
हूं हः हूं फट् ॐ हां स्वाहेत्यनेनाथ पूरकेणांकुशमुद्रया ॥ ४० ॥ तदाकृष्य स्वमन्त्रेण गृहीत्वाऽऽत्मनि योजयेत् ॥ ॐ हां हूं हां आत्मने
नमः । पित्रोर्विभाव्य संयोगं चैतन्यं रेचकेन तत् ॥ ४१ ॥ ब्रह्मादिकारणत्यागक्रमान्नीत्वा शिवास्पदम् ॥ गर्भाधानार्थमादाय
युगपत्सर्वयोनिषु ॥ ४२ ॥ क्षिपेद्वागीश्वरीयोनौ वामयोद्भवमुद्रया ॥ ओं हां हां हाम् आत्मने नमः । पूजयेदप्यनेनैव तर्पयेदपि
पञ्चधा ॥ ४३ ॥ अन्ययोनिषु सर्व्वासु देहशुद्धिं हृदा चरेत् ॥ नात्र पुंसवनं कुर्यादशरीरस्यापि सम्भवात् ॥ ४४ ॥ सीमन्तोन्नयनं
वापि दैवान्यङ्गानि देहवत् ॥ शिरसा जन्म कुर्वीत युगपत्सर्वदेहिनाम् ॥ ४५ ॥ तथैव भावयेदेषामधिकारं शिवाणुना ॥ भोगं
कवचमन्त्रेण शस्त्रेण विषयात्मना ॥ ४६ ॥ मोहरूपमभेद्यं च लयसञ्ज्ञं विभावयेत् ॥ शिवेन स्रोतसां शुद्धिं हृदा तत्त्वविशोधनम्
॥ ४७ ॥ पञ्च पञ्चाहुतीः कुर्य्याद्गर्भाधानादिषु क्रमात् ॥ मायया मलकर्मादिपाशबन्धनिवृत्तये ॥ ४८ ॥ निष्कृत्यैव हृदा पश्चाद्यजेत
शतमाहुतीः ॥ मलशक्तिनिरोधेन पाशानां च वियोजनम् ॥ ४९ ॥ स्वाहान्तायुधमन्त्रेण पञ्चपञ्चाहुतीर्यजेत् ॥ मायाद्यन्तस्य
पाशस्य सप्तवारास्त्रजप्तया ॥ ५० ॥ कर्त्तर्य्या छेदनं कुर्य्यात्कल्पशस्त्रेण तद्यथा ॥ ओं हूं निवृत्तिकलापाशाय हूं फट् बन्धकत्वं
च निर्वर्त्य हस्ताभ्याञ्च शराणुना ॥ ५१ ॥ विसृज्य वर्त्तुलीकृत्य घृतपूर्णे स्रुवे धरेत् ॥ दहेदनुकलास्त्रेण केवलास्त्रेण भस्म-
सात् ॥ ५२ ॥ कुर्य्यात्पञ्चाहुतीर्दत्त्वा पाशांकुशनिवृत्तये ॥ ओं हः अस्त्राय हूं फट् ॥ प्रायश्चित्तं ततः कुर्य्यादस्त्राहुतिभिरष्टभिः
॥ ५३ ॥ अथावाह्य विधातारं पूजयेत्तर्पयेत्तथा ॥ तत ओं हां शब्दस्पर्शशुद्धब्रह्मन् गृहाण स्वाहेत्याहुतित्रयेणाधिकारमस्य ॥ ६२ ॥
समर्पयेत् । दग्धनिःशेषपापस्य ब्रह्मन्नस्य पशोस्त्वया ॥ ५४ ॥ बन्धाय न पुनः स्थेयं शिवाज्ञां श्रावयेदिति ॥ ततो विसृज्य
धातारं नाड्या दक्षिणया शनैः ॥ ५५ ॥ संहारमुद्रयात्मानं कुम्भकेन निजात्मना ॥ राहुयुक्तैकदेशेन चन्द्रबिम्बेन सन्निभम् ॥ ५६ ॥

आदाय योजयेत्सूत्रे रेचकेनोद्भवाख्यया ॥ पूजयित्वार्घ्यपात्रस्थतोयबिन्दुं सुधोपमम् ॥ ९७ ॥ आप्यायनाय शिष्यस्य गुरुः शिरसि विन्यसेत् ॥ विसृज्य पितरौ दद्याद्वौषडन्तशिवाणुना ॥ पूरणाय विधिः पूर्णा निवृत्तिरिति शोधिता ॥ ९८ ॥ इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षायां निवृत्तिकलाशोधनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥ अथ प्रतिष्ठाकलाशोधनम् ॥ ईश्वर उवाच ॥ तत्त्वयोरथ सन्धानं कुर्याच्छुद्धविशुद्धयोः ॥ ह्रस्वदीर्घप्रयोगेण नादनाडान्तसङ्गिना ॥ १ ॥ ॐ हां हूं हाम् अप्तेजोवायुराकाशं तन्मात्रेन्द्रियबुद्धयः ॥ गुणत्रयमहङ्कारश्चतुर्विंशः पुमानिति ॥ २ ॥ प्रतिष्ठायां निविष्टानि तत्त्वान्येतानि भावयेत् ॥ पञ्चविंशतिसङ्ख्यानि खादियान्ताक्षराणि च ॥ ३ ॥ पञ्चाशदधिका षष्टिर्भुवनैस्तुल्यसञ्ज्ञिताः ॥ तावन्त एव रुद्राश्च विज्ञेयास्तत्र तद्यथा ॥ ४ ॥ अमरेशः प्रभावश्च नैमिषः पुष्करोऽपि च ॥ तथा पादिश्च दण्डिश्च भावभूतिरथाष्टमः ॥ ५ ॥ नकुलीशो हरिश्चन्द्रः श्रीशैलो दशमः स्मृतः ॥ अन्वीशोऽम्रातिकेशश्च महाकालोऽथ मध्यमः ॥ ६ ॥ केदारो भैरवश्चैव द्वितीयाष्टकमीरितम् ॥ ततो गयाकुरुक्षेत्रखलानादिकनादिके ॥ ७ ॥ विमलश्चाट्टहासश्च महेन्द्रो भीम एव च ॥ वस्त्रापदं रुद्रकोटिरवियुक्तो महाबलः ॥ ८ ॥ गोकर्णो भद्रकर्णश्च स्वर्णाक्षः स्थाणुरेव च ॥ अजेशश्चैव सर्वज्ञो भास्वरः सूक्ष्मान्तरः ॥ ९ ॥ सुबाहुर्मत्तरूपी च विशालो जटिलस्तथा ॥ रौद्रोऽथ पिङ्गलाक्षश्च कालदंष्ट्री भवेत्ततः ॥ १० ॥ विदुरश्चैव घोरश्च प्राजापत्यो हुताशनः ॥ कामरूपी तथा कालः कर्णोऽप्यथ भयानकः ॥ ११ ॥ मतङ्गः पिङ्गलश्चैव हरो वै धातृसंज्ञकः ॥ शंकुकर्णो विधानश्च श्रीकण्ठश्चन्द्रशेखरः ॥ १२ ॥ सद्दैतेन च पर्य्यन्ताः कथ्यन्तेऽथ पदान्यपि ॥ व्यापिन् ॐ अरूप ॐ प्रमथ ॐ तेजः ॐ ज्योतिः ॐ पुरुष ॐ अग्ने ॐ अधूम ॐ अभस्म ॐ अनादि ॐ नाना ॐ धुधू ॐ भूः ॐ भुवः ॐ स्वः अनिधन निधनोद्भव शिव शर्व परमात्मन् महेश्वर महादेव सद्भावेश्वर महातेजः योगाधिपतये मुञ्च प्रथम सर्व सर्वेति द्वात्रिंशत् पदानि ॥ बीजभावे त्रयो मंत्रा वामदेवः शिवः शिखा ॥ १३ ॥ गान्धारी च सुषुम्णा च नाड्यौ द्वौ मारुतौ तथा ॥ समानोदाननामानौ रसनापायुरिन्द्रिये ॥ १४ ॥ रसस्तु विषयो रूपशब्दस्पर्शा रसा गुणाः ॥ मण्डलं वर्त्तुलं तच्च पुण्डरीकाङ्कितं सितम् ॥ १५ ॥





स्वप्नावस्था प्रतिष्ठायां कारणं गरुडध्वजम् ॥ प्रतिष्ठान्तकृतं सर्वं सञ्चिन्त्य भुवनादिकम् ॥ १६ ॥ सूत्रं देहे स्वमन्त्रेण प्रविश्यैनां वियोजयेत् ॥ ओं हां खीं हां प्रतिष्ठाकलापाशाय ओं फट् स्वाहान्तेनानेनैव पूरकेणांकुशमुद्रया समाकर्षेत् । ततः ॐ हां हूं ह्रां हूं प्रतिष्ठाकलापाशाय हूं फडित्यनेन संहारमुद्रया कुम्भकेन हृदयादधोनाडीसूत्रादादाय ॐ हां हूं ह्रां हां प्रतिष्ठाकला पाशाय नम इत्यनेनोद्भवमुद्रया रेचकेन कुम्भे समारोपयेत् । ॐ हां ह्रीं प्रतिष्ठाकलापाशाय नम इत्यनेनार्चयित्वा सम्पूज्य स्वाहान्तेनाहुतीनां त्रयेण सन्निधाय ततः ॐ हां विष्णवे नम इति विष्णुमावाह्य सम्पूज्य सन्तर्प्य विष्णो तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् ॥ १७ ॥ भाव्यं त्वयानुकूलेन विष्णुं विज्ञापयेदिति ॥ ततो वागीश्वरीं देवीं वागीशमपि पूर्ववत् ॥ १८ ॥ आवाह्याभ्यर्च्य सन्तर्प्य शिष्यं वक्षसि ताडयेत् ॥ ॐ हां हां हं फट् । प्रविशेदप्यनेनैव चैतन्यं विभजेत्ततः ॥ १९ ॥ शस्त्रेण पाशसंयुक्तं ज्येष्ठयाऽङ्कुशमुद्रया ॥ ॐ हां हं हों हूं फट् स्वाहान्तेन हृदाकृष्य तेनैव पुटितात्मना ॥ २० ॥ गृहीत्वा तं नमोऽन्तेन निजात्मनि नियोजयेत् ॥ ॐ हां हं होम् आत्मने नमः । पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया ॥ २१ ॥ वामया तदनेनैव देवीगर्भे विनिःक्षिपेत् ॥ ॐ हां हं हाम् आत्मने नमः । देहोत्पत्तौ हृदा ह्येवं शिरसा जन्मना तथा ॥ २२ ॥ शिखया वाधिकाराय भोगाय कवचाणुना ॥ तत्त्वशुद्धौ हृदा ह्येवं गर्भाधानाय पूर्ववत् ॥ २३ ॥ शिरसा पाशशैथिल्ये निष्कृत्यैवं शतं जपेत् ॥ एवं पाशवियोगेऽपि ततः शस्त्रात्मजतया ॥ २४ ॥ छिन्द्यादस्त्रेण कर्त्तर्य्या कलाबीजवता यथा ॥ ॐ ह्रीं प्रतिष्ठाकलापाशाय हः फट् ॥ विसृज्य वर्त्तुलीकृत्य पाशमंत्रेण पूर्ववत् ॥ २५ ॥ घृतपूर्णे स्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ॥ अस्त्रेण जुहुयात्पञ्च पाशाङ्कुशनिवृत्तये ॥ २६ ॥ प्रायश्चित्तनिषेधार्थं दद्यादष्टाहुतीस्ततः ॥ ॐ हः अस्त्राय हूं फट् । हृदावाह्य हृषीकेशं कृत्वा पूजनतर्पणे ॥ २७ ॥ पूर्वोक्तविधिना कुर्य्यादधिकारसमर्पणम् ॥ ॐ हां रसशुक्लं गृहाण स्वाहा । निःशेषदग्धपाशस्य पशोरस्य हरे त्वया ॥ २८ ॥ न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ॥ ततो विसृज्य गोविन्दं विद्यात्मानं नियोज्य च ॥ २९ ॥ बाहुमुक्तार्द्धदश्येन चन्द्रबिम्बेन सन्निभम् ॥ संहारमुद्रया

स्वस्थं विधायोद्भवमुद्रया ॥ ३० ॥ सूत्रे संयोज्य विन्यस्य तोयबिन्दुं यथापुरा ॥ विसृज्य पितरौ वह्नेः पूजितौ कुसुमादिभिः ॥
दद्यात्पूर्णां विधानेन प्रतिष्ठाऽपि विशोधिता ॥ ३१ ॥ इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षायां प्रतिष्ठाकलासंशोधनविधि-
र्नाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥ अथ विद्याविशोधनविधानम् ॥ ईश्वर उवाच ॥ सन्धानमथ विद्यायाः प्राचीनकलया
सह ॥ कुर्वीत पूर्ववत्कृत्वा तत्त्वं वर्णय तद्यथा ॥ १ ॥ ॐ हां क्षीमिति सन्धानम् । रागश्च शुद्धविद्या च नियतिः कलया सह॥
कालो माया तथाऽविद्या तत्त्वानामिति सप्तकम् ॥ २ ॥ रलवाः शषसा वर्णाः षड्विद्यायां प्रकीर्त्तिताः ॥ पदानि प्रणवादीनि
एकविंशतिसङ्ख्यया ॥ ३ ॥ ॐ नमः शिवाय सर्वप्रभवे हं शिवाय ईशानमूर्धाय तत्पुरुषवक्त्राय अघोरहृदयाय वामदेवगुह्याय
सद्योजातमूर्त्तये ॐ नमो नमो गुह्यातिगुह्याय गोप्त्रे अनिधनाय सर्वाधिपाय ज्योतीरूपाय परमेश्वराय भावेन ॐ व्योम ॥ ॐ
रुद्राणां भुवनानां च स्वरूप प्रमथ कथ्यते ॥ प्रथमो वामदेवः स्यात्ततः सर्वभवोद्भवः ॥ ४ ॥ वज्रदेहः प्रभुर्धाता क्रमविक्रमसु-
प्रभाः ॥ वटुः प्रशान्तनामा च परमाक्षरसञ्ज्ञकः ॥ ५ ॥ शिवश्च सशिवो बभ्रुरक्षयः शम्भुरेव च ॥ अदृष्टरूपनामानौ तथाऽन्यो
रूपवर्द्धनः ॥ ६ ॥ मनोन्मनो महावीर्य्यश्चित्राङ्गस्तदनन्तरम् ॥ कल्याण इति विज्ञेयाः पञ्चविंशतिसङ्ख्यया ॥ ७ ॥ मन्त्रौ
घोरामरौ बीजे नाड्यौ द्वे तत्र ते यथा ॥ पूषा च हस्तिजिह्वा च व्याननागौ प्रभञ्जनौ ॥ ८ ॥ विषयो रूपमेवैकमिन्द्रिये पाद-
चक्षुषी ॥ शब्दः स्पर्शश्च रूपं च त्रय एते गुणाः स्मृताः ॥ ९ ॥ अवस्थाऽत्र सुषुप्तिश्च रुद्रो देवस्तु कारणम् ॥ विद्यामध्यगतं सर्वं
भावयेद्भुवनादिकम् ॥ १० ॥ ताडनं छेदनं तत्र प्रवेशं चापि योजनम् ॥ आकृष्य ग्रहणं कुर्य्याद्विद्यया हृत्प्रदेशतः ॥ ११ ॥
आत्मन्यारोप्य सङ्गृह्य कलां कुण्डे निवेशयेत् ॥ रुद्रं कारणमावाह्य विज्ञाप्य च शिशुं प्रति ॥ १२ ॥ पित्रोरावाहनं कृत्वा
हृदये ताडयेच्छिशुम् ॥ प्रविश्य पूर्वमन्त्रेण तदात्मनि नियोजयेत् ॥ १३ ॥ आकृष्यादाय पूर्वोक्तविधिनाऽऽत्मनि योजयेत् ॥
वामया योजयेद्योनौ गृहीत्वा द्वादशान्ततः ॥ १४ ॥ कुर्वीत देहसम्पत्तिं जन्माधिकारमेव च ॥ भोगं लयं तथा श्रो (स्रो)
तः शुद्धितत्त्वविशोधनम् ॥ १५ ॥ निःशेषमलकर्म्मादिपाशबन्धनिवृत्तये ॥ निष्कृत्यैव विधानेन यजेत शतमाहुतीः ॥ १६ ॥

अस्त्रेण पाशशैथिल्यं मलशक्तिं तिरोहिताम् ॥ छेदनं मर्दनं तेषां वर्त्तुलीकरणं तथा ॥ १७ ॥ दाहं तदक्षराभावं प्रायश्चित्तमथोदितम् ॥ रुद्राण्यावाहनं पूजा रूपगन्धसमर्पणम् ॥ १८ ॥ ओं ह्रीं रूपगन्धौ शुल्कं रुद्र गृहाण स्वाहा ॥ संश्राव्य शाम्भवीमाज्ञां रुद्रं विसृज्य कारणम् ॥ विधायात्मानि चैतन्यं पाशसूत्रे निवेशयेत् ॥ १९ ॥ बिन्दुं शिरसि विन्यस्य विसृजेत्पितरौ ततः ॥ दद्यात्पूर्णां विधानेन समस्तविधिपूरणीम् ॥ २० ॥ पूर्वोक्तविधिना कार्य्यं विद्यायां ताडनादिकम् ॥ स्वबीजं तु विशेषः स्यादिति विद्या विशोधिता ॥ २१॥ इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षायां विद्याशोधनं नाम षडशीतितमोऽध्यायः ॥८६॥

अथ नि० शान्तिशोधनम् ॥ ईश्वर उवाच ॥ सन्दध्यादधुना विद्यां शान्त्या सार्द्धं यथाविधि ॥ शान्तौ तत्त्वद्वयं लीनं भावेश्वरसदाशिवौ ॥ १ ॥ हकारश्च क्षकारश्च द्वौ वर्णौ परिकीर्त्तितौ ॥ रुद्राः समाननामानो भुवनैः सह तद्यथा ॥ २ ॥ प्रभवः समयः क्षुद्रो विमलः शिव इत्यपि ॥ घनौ निरञ्जनाकारौ स्वशिवौ दीप्तिकारणौ ॥ ३ ॥ त्रिदशेश्वरनामा च त्रिदशः कालसञ्ज्ञकः ॥ सूक्ष्माम्बुजेश्वरश्चेति रुद्राः शान्तौ प्रतिष्ठिताः ॥ ४ ॥ व्योमव्यापिने व्योमव्याप्यरूपाय सर्वव्यापिने शिवाय अनन्ताय अनाथाय अनाश्रिताय ध्रुवाय शाश्वताय योगपीठसंस्थिताय नित्ययोगिने ध्यानाहारायेति द्वादश पदानि । पुरुषः कवचौ मन्त्रौ बीजे बिन्दूपकारकौ ॥ अलम्बुषायसानाख्यौ वायू कृकरकूर्म्मकौ ॥ ५ ॥ इन्द्रिये त्वक्करावस्याः स्पर्शस्तु विषयो मतः ॥ गुणौ स्पर्शनिनादौ द्वावेकः कारणमीश्वरः ॥ ६ ॥ तुर्य्यावस्थेति शान्तिस्थं सम्भाव्य भुवनादिकम् ॥ विदध्यात्ताडनं भेदं प्रवेशं च वियोजनम् ॥ ७ ॥ आकृष्य ग्रहणं कुर्य्याच्छान्तेर्वदनसूत्रतः ॥ आत्मन्यारोप्य, सङ्गृह्य कलां कुण्डे निवेशयेत् ॥ ८ ॥ ईश तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् ॥ भाव्यं त्वयाऽनुकूलेन कुर्य्याद्विज्ञापनामिति ॥ ९ ॥ आवाहनादिकं पित्रोः शिष्यस्य ताडनादिकम् ॥ विधायादाय चैतन्यं विधिनाऽऽत्मनि योजयेत् ॥ १० ॥ पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया ॥ हृत्सम्पुटात्मबीजेन देवीगर्भे नियोजयेत् ॥ ११ ॥ देहोत्पत्तौ हृदा पञ्च शिरसा जन्महेतवे ॥ शिखया वाऽधिकाराय भोगाय कवचाणुना ॥ १२ ॥ लयाय शस्त्रमन्त्रेण स्रोतः शुद्धौ शिवेन च ॥ तत्त्वशुद्धौ हृदा ह्येवं गर्भाधानादि पूर्ववत् ॥ १३ ॥ वर्म्मणा पाश-

शैथिल्यं निष्कृत्यैवं शतं जपेत् ॥ मलशक्तितिरोधाने शस्त्रेणाहुतिपञ्चकम् ॥ १४॥ एवं पाशवियोगेऽपि ततः सप्तास्त्रजप्तया ॥ छिंद्या-
दस्त्रेण कर्त्तर्यां पाशान्बीजवता यथा ॥ १५॥ ॐ हौं शान्तिकलापाशाय हः हूं फट् ॥ विसृज्य वर्त्तुलीकृत्य पाशमंत्रेण पूर्ववत् ॥ घृतपूर्णे
स्रुवे दत्वा कलास्त्रेणैव होमयेत् ॥ १६ ॥ अस्त्रेण जुहुयात्पञ्च पाशाङ्कुशनिवृत्तये ॥ प्रायश्चित्तनिषेधाय दद्यादष्टाहुतीस्थ ॥ १७ ॥
ॐ हः अस्त्राय हूं फट् ॥ हृदेश्वरं समावाह्य कृत्वा पूजनतर्पणे ॥ निदधीत विधानेन तस्मै शुल्कसमर्पणम् ॥ १८ ॥ ॐ हाम् ईश्वर
बुद्ध्यहङ्कारौ शुल्कं गृहाण स्वाहा ॥ निःशेषदग्धपाशस्य पशोरस्येश्वर त्वया ॥ न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ॥ १९॥
विसृजेदीश्वरं देवं रौद्रात्मानं नियोजयेत् ॥ २० ॥ सूत्रे संयोजयेदेनं शुद्धयोद्भवमुद्रया ॥ दद्यान्मूलेन शिष्यस्य शिरस्यमृतबिन्दु-
कम् ॥२१॥ विसृज्य पितरौ वह्नेः पूजितौ कुसुमादिभिः ॥ दद्यात्पूर्णां विधानज्ञो निःशेषविधिपूरणीम् ॥२२॥ अस्यामपि विधा-
तव्यं पूर्ववत्ताडनादिकम् ॥ स्वबीजं तु विशेषः स्याच्छुद्धिः शान्तेरपीडिता ॥ २३ ॥ इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षायां
शांतिशोधनं नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ अथ निर्वाणदीक्षाविधिः ॥ ईश्वर उवाच ॥ सन्धानं शान्त्यतीतायाः शान्त्या
सार्द्धं विशुद्धया ॥ कुर्वीत पूर्ववत्तत्र तत्त्ववर्णादि तद्यथा ॥ १ ॥ ॐ हाँ क्षौं हौं हाम् इति सन्धानानि ॥ उभौ शक्तिशिवौ तत्त्वे
भुवनाष्टकसिद्धिकम् ॥ दीपकं रोचकं चैव मोचकं चोर्द्ध्वगामि च ॥ २ ॥ व्योमरूपमनाथं च स्यादनाश्रितमष्टमम् ॥ ॐ कार-
पदमीशाने मंत्रो वर्णाश्च षोडश ॥ ३ ॥ अकारादिविसर्गान्ता बीजेन देहकारकौ ॥ कुहूश्च शङ्खिनी नाड्यौ देवदत्तधनञ्जयौ ॥४॥
मारुतौ स्पर्शनं श्रोत्रमिन्द्रिये विषयो नभः ॥ शब्दो गुणोऽस्यावस्था तु तुर्य्यातीता तु पञ्चमी ॥ ५ ॥ हेतुः सदाशिवो देव इति
तत्त्वादिसञ्चयम् ॥ सञ्चिन्त्य शान्त्यतीताख्यं विदध्यात्ताडनादिकम् ॥६॥ कलापाशं समाताड्य फडन्तेन विभिद्य च॥ प्रविश्यान्त-
र्न्नमोऽन्तेन फडन्तेन वियोजयेत् ॥७॥ शिखाहृत्सम्पुटीभूतं स्वाहान्तं सृणिमुद्रया ॥ पूरकेण समाकृष्य पाशं मस्तकसूत्रतः ॥ ८ ॥
कुम्भकेन समादाय रेचकेनोद्भवाख्यया ॥ हृत्सम्पुटं नमोन्तेन वह्नि कुण्डे निवेशयेत् ॥ ९ ॥ अस्याः पूजादिकं सर्वं निवृत्ते-
रिव साधयेत् ॥ सदाशिवं समावाह्य पूजयित्वा प्रतर्प्य च ॥ १० ॥ सदाख्यातेऽधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् ॥ भाव्यं





त्वयाऽनुकूलेन भक्त्या विज्ञापयेदिति ॥ ११ ॥ पित्रोरावाहनं पूजां कृत्वा तर्पणसन्निधौ ॥ हृत्सम्पुटात्मबीजेन शिष्यं वक्षसि
ताडयेत् ॥ १२ ॥ ॐ हां हूं हं फट्। प्रविश्य चाप्यनेनैव चैतन्यं विभजेत्ततः ॥ शस्त्रेण पाशसंयुक्तं ज्येष्ठयाऽङ्कुशमुद्रया ॥ १३ ॥
ॐ हां हः हूं फट् ॥ स्वाहान्तेन तदाकृष्य तेनैव पुटितात्मना ॥ गृहीत्वा तन्नमोऽन्तेन निजात्मनि नियोजयेत् ॥ १४ ॥ ॐ हां
हं हीम् आत्मने नमः। पूर्ववत्पितृसंयोगं भावयित्वाद्भवाख्यया ॥ वामया तदनेनैव देव्या गर्भे नियोजयेत् ॥ १५॥ गर्भाधा-
नादिकं सर्वं पूर्वोक्तविधिना चरेत् ॥ मूलेन पाशशैथिल्ये निष्कृत्यैव शतं जपेत् ॥ १६ ॥ नलशक्तितिरोधाने पाशानां
च वियोजने ॥ पञ्च पञ्चाहुतीर्दद्यादायुधेन यथापुरा ॥ १७ ॥ पाशानायुधमन्त्रेण सप्तवाराभिजप्तया ॥ छिन्द्यादस्त्रेण कर्त्तर्या
कलाबीजयुजा यथा ॥ १८ ॥ ॐ हां शान्त्यतीतकलापाशाय हः हूं फट् ॥ विसृज्य वर्त्तुलीकृत्य पाशानस्त्रेण पूर्ववत् ॥ घृतपूर्णे
स्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ॥ १९ ॥ अस्त्रेण जुहुयात्पञ्च पाशाङ्कुशनिवृत्तये ॥ प्रायश्चित्तनिषेधार्थं दद्यादष्टाहुतीस्ततः
॥ २० ॥ सदाशिवं हृदावाह्य कृत्वा पूजनतर्पणे ॥ पूर्वोक्तविधिना कुर्य्यादधिकारसमर्पणम् ॥ २१ ॥ ॐ हां सदाशिवमनोबिन्दुं
शुल्कं गृहाण स्वाहा। निःशेषदग्धपाशस्य पशोरस्य सदाशिव ॥ बन्धाय न त्वया स्थेयं शिवाज्ञां श्रावयेदिति ॥ २२ ॥ मूलेन
जुहुयात्पूर्णां विसृजेत्तु सदाशिवम् ॥ ततो विशुद्धमात्मानं शरच्चन्द्रमिवोदितम् ॥ २३ ॥ संहारमुद्रया रौद्र्या संयोज्य गुरुरा-
त्मनि ॥ कुर्वीत शिष्यदेहस्थमुद्धृत्योद्भवमुद्रया ॥ २४ ॥ दद्यादाप्यायनायास्य मस्तकेऽर्घ्याम्बुबिन्दुकम् ॥ क्षमयित्वा महा-
भक्त्या पितरौ विसृजेत्तथा ॥ २५ ॥ खेदितौ शिष्यदीक्षायै यन्मया पितरौ युवाम् ॥ कारुण्यान्मोक्षयित्वा तद्व्रज त्वं स्थान-
मात्मनः ॥ २६ ॥ शिखामन्त्रितकर्त्तर्य्या बोधशक्तिस्वरूपिणीम् ॥ शिखां छिन्द्याच्छिवास्त्रेण शिष्यस्य चतुरङ्गुलाम् ॥ २७ ॥
ॐ क्लीं शिखायै हूं फट् ॐ हः अस्त्राय हूं फट् ॥ स्रुचि तां घृतपूर्णायां गोविड्गोलकमध्यगाम् ॥ संविधायास्त्रमन्त्रेण हूं फडन्तेन
होमयेत् ॥ २८ ॥ ॐ हौं हः अस्त्राय हूं फट्। प्रक्षाल्य स्रुक्स्रुवौ शिष्यं संस्नाप्याचम्य च स्वयम् ॥ योजनिकास्थमात्मानं शस्त्र-
मन्त्रेण ताडयेत ॥ २९ ॥ वियोज्याकृष्य सम्पूज्य पूर्ववद्द्वादशान्ततः ॥ आत्मीयहृदयाम्भोजकर्णिकायां निवेशयेत ॥ ३० ॥

पूरितं स्रुवमाज्येन विहिताधोमुखस्रुचा ॥ नित्योक्तविधिनाऽऽदाय शङ्खसन्निभमुद्रया ॥ ३१ ॥ प्रसारितशिरोग्रीवो नादोच्चारानुसारतः ॥ समदृष्टिः स्थिरश्चान्तः परभावसमन्वितः ॥ ३२ ॥ कुम्भमण्डलवह्निभ्यः शिष्यादपि निजात्मनः ॥ गृहीत्वा षड्विधाध्वानं स्रुगग्रे प्राणनाडिकम् ॥ ३३ ॥ सञ्चिन्त्य बिन्दुवद्ध्यात्वा क्रमशः सप्तधा यथा ॥ प्रथमं प्राणसंयोगस्वरूपमपरं ततः ॥ ३४ ॥ हृदयादिक्रमोच्चारविसृष्टं मन्त्रसञ्ज्ञकम् ॥ पूरकं कुम्भकं कृत्वा व्यादाय वदनं मनाक् ॥ ३५ ॥ सुषुम्णानुगतं नादस्वरूपं तु तृतीयकम् ॥ सप्तमे कारणे त्यागात्प्रशान्तं विश्वरं लयः ॥ ३६ ॥ शक्तिनादोर्ध्वसञ्चारस्तच्छक्ति विस्वरं मतम् ॥ प्राणस्य निखिलस्यापि शक्तिप्रमेयवर्जितम् ॥ ३७ ॥ तत्कालविश्वरं षष्ठं शक्त्यतीतं च सप्तमम् ॥ तदेतद्योजनास्थानं विश्वरं तत्त्वसञ्ज्ञकम् ॥ ३८ ॥ पूरकं कुम्भकं कृत्वा व्यादाय वदनं मनाक् ॥ शनैरुदीरयेन्मूलं कृत्वा शिष्यात्मनो लयम् ॥ ३९ ॥ हकारे तडिदाकारे षडध्वप्राणरूपिणि ॥ उकारं परतो नाभेर्वितस्तिं व्याप्य संस्थितम् ॥ ४० ॥ ततः परं मकारन्तु हृदयाच्चतुरङ्गुलम् ॥ ओँकारवाचकं विष्णोस्ततोऽष्टाङ्गुलकण्ठकम् ॥ ४१ ॥ चतुरङ्गुलतालुस्थं मकारं रुद्रवाचकम् ॥ तद्वल्ललाटमध्यस्थं बिन्दुमीश्वरवाचकम् ॥ ४२ ॥ नादं सदाशिवं देवं ब्रह्मरन्ध्रावसानकम् ॥ शक्तिं च ब्रह्मरन्ध्रस्थां त्यजन्नित्यमनुक्रमात् ॥ ४३ ॥ दिव्यं पिपीलिकास्पर्शं तस्मिन्नेवानुभूय च ॥ द्वादशान्ते परे तत्त्वे परमानन्दलक्षणे ॥ ४४ ॥ भावशून्ये मनोऽतीते शिवे नित्यगुणोदये ॥ विलीय मानसे तस्मिञ्छिष्यात्मानं विभावयेत् ॥ ४५ ॥ विमुञ्चन्सर्पिषो धारां ज्वालान्तेऽपि परे शिवे ॥ योजनिकास्थिरत्वाय वौषडन्तशिवाणुना ॥ ४६ ॥ दत्त्वा पूर्णां विधानेन गुणापादनमाचरेत् ॥ ॐ हाम् आत्मने सर्वज्ञो भव स्वाहा । ॐ हाम् आत्मने परितृप्तो भव स्वाहा । ॐ हूम् आत्मने अनादिबोधो भव स्वाहा । ॐ हैम् आत्मने स्वतन्त्रो भव स्वाहा ॥ ॐ हौम् आत्मन् अलुप्तशक्तिर्भव स्वाहा । ॐ हः आत्मने अनन्तशक्तिर्भव स्वाहा । इत्थं षड्गुणमात्मानं गृहीत्वा परमाक्षरात् ॥ ४७ ॥ विधिना भावनोपेतः शिष्यदेहे नियोजयेत् ॥ तीव्राणुशक्तिसम्पातजनितश्रमशान्तये ॥ ४८ ॥ शिष्यमूर्द्धनि विन्यस्येदर्घ्यादमृतबिन्दुकम् ॥ प्रणमय्येशकुम्भादीञ्छिवाद्दक्षिणमण्डले ॥ ४९ ॥ सौम्यवक्त्रं व्यवस्थाप्य शिष्यं दीक्ष-

णमात्मनः ॥ त्वयैवानुगृहीतोऽयं मूर्तिमास्थाय मामकीम् ॥ ५० ॥ देवे वह्नौ गुरौ तस्माद्भक्तिं चाप्यस्य वर्द्धय ॥ इति विज्ञाप्य देवेशं प्रणम्य च गुरुः स्वयम् ॥ ५१ ॥ श्रेयस्तथास्त्विति ब्रूयादाशिषं शिष्यमादरात् ॥ ततः परमया भक्त्या दत्त्वा देवेऽष्टपुष्पिकाम् ॥ पुत्रकं शिवकुंभेन संस्नाप्य विसृजेन्मखम् ॥ ५२ ॥ इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षाविधिर्नामाऽष्टाशीतितमोऽध्यायः ॥ ८८ ॥ एकतत्त्वदीक्षाविधिः ॥ ईश्वर उवाच ॥ अथैकतात्त्विकी दीक्षा लघुत्वादुपदिश्यते ॥ सूत्रबन्धादि कुर्वीत यथायोगं निजात्मना ॥ १ ॥ कालाग्न्यादिशिवान्तानि तत्त्वानि परिभावयेत् ॥ समतत्त्वे समग्राणि सूत्रे मणिगणानिव ॥ २ ॥ आवाह्य शिवतत्त्वादि गर्भाधानादि पूर्ववत् ॥ मूलेन किन्तु कुर्वीत सर्व्वशुल्कसमर्पणम् ॥ ३ ॥ प्रददीत ततः पूर्णां तत्त्वव्रातोपर्गाभिताम् ॥ एकयैव यया शिष्यो निर्व्वाणमधिगच्छति ॥ ४ ॥ योजनायै शिवे चान्यां स्थिरत्वापादनाय च ॥ दत्त्वा पूर्णां प्रकुर्वीत शिवकुंभाभिषेचनम् ॥ ५ ॥ इत्यादिमहापुराणे आग्नेये एकतत्त्वदीक्षाविधिर्नामैकोननवतितमोऽध्यायः ॥ ८९ ॥ अथाभिषेकादि ॥ ईश्वर उवाच ॥ शिवमभ्यर्च्याभिषेकं कुर्य्याच्छिष्यादिके श्रिये ॥ कुम्भानीशादिकाष्ठासु क्रमशो नव विन्यसेत् ॥ १ ॥ तेषु क्षारोदं क्षीरोदं दध्युदं घृतसागरम् ॥ इक्षुकादंबरीस्वादुमस्तूदानष्ट सागरान् ॥ २ ॥ निवेशयेद्यथासङ्ख्यमष्टौ विद्येश्वरानथ ॥ एकं शिखण्डिनं रुद्रं श्रीकण्ठं तु द्वितीयकम् ॥ ३ ॥ त्रिमूर्त्तमेकरुद्राक्षमेकनेत्रं शिवोत्तमम् ॥ सप्तमं सूक्ष्मनामानमनन्तं रुद्रमष्टमम् ॥ ४ ॥ मध्ये शिवं समुद्रं च शिवमन्त्रं च विन्यसेत् ॥ यागालयान्दिगीशस्य रचिते स्नानमण्डपे ॥ ५ ॥ कुर्य्यात्करद्वयायामां वेदिमष्टाङ्गुलोच्छ्रिताम् ॥ श्रीपर्णाद्यासने तत्र विन्यस्यानन्तमासनम् ॥ ६॥ शिष्यं निवेश्य पूर्वस्यां सकलीकृत्य पूजयेत् ॥ काञ्जिकोदनमृद्भस्मदूर्वागोमयगोलकैः ॥ ७ ॥ सिद्धार्थदधितोयैश्च कुर्य्यान्निर्मन्थनं ततः ॥ क्षारोदानुक्रमेणाथ हृदा विद्येशशम्बरैः ॥ ८ ॥ कलशैः स्नापयेच्छिष्यं स्वधाधारणयान्वितम् ॥ परिधाप्य सिते वस्त्रे निवेश्य शिवदक्षिणे ॥ ९ ॥ पूर्वोदितासने शिष्यं पुनः पूर्ववदर्चयेत् ॥ उष्णीषं योगपट्ट च मुकुटं कर्त्तरीं घटीम् ॥ १० ॥ अक्षमालां पुस्तकादि शिबिकाद्यधिकारकम् ॥ दीक्षाव्याख्याप्रतिष्ठाद्यं ज्ञात्वाऽद्यप्रभृति त्वया ॥ ११ ॥ सुपरीक्ष्य विधातव्यमाज्ञां संश्रावयेदिति ॥ आभि-

वाद्य ततः शिष्यं प्रणिपत्य महेश्वरम् ॥ १२ ॥ विघ्नज्वालापनोदाथ कुर्य्याद्विज्ञापनं यथा ॥ अभिषेकार्थमादिष्टस्त्वयाऽहं गुरुमूर्त्तिना ॥ १३ ॥ संहितापारगः सोऽयमभिषिक्तो मया शिव ॥ तृप्तये मन्त्रचक्रस्य पञ्च पञ्चाहुतीर्यजेत् ॥ १४ ॥ दद्यात्पूर्णां ततः शिष्यं स्थापयेन्निजदक्षिणे ॥ शिष्यदक्षिणपाणिस्था अङ्गुष्ठाद्यङ्गुलीः क्रमात् ॥१५॥ लाञ्छयेदुपबद्धाय दग्धदर्भाग्रशम्बरैः ॥ कुसुमानि करे दत्त्वा प्रणामं कारयेदमुम् ॥ १६ ॥ कुम्भेऽनले शिवे स्वस्मिंस्ततस्तत्कृत्यमाविशेत् ॥ अनुग्राह्यास्त्वया शिष्याः शास्त्रेण सुपरीक्षिताः ॥ १७ ॥ भूपवन्मानवादीनामभिषेकादभीप्सितम् ॥ ॐ श्रां श्रौं पशु हू फडित्यस्त्रराजाभिषेकतः ॥ १८ ॥ इत्यादिमहापुराणे आग्नेये निर्वाणदीक्षाभिषेकादिविधिर्नाम नवतितमोऽध्यायः ॥९०॥ अथ विविधमन्त्रादयः ॥ ईश्वर उवाच ॥ अभिषिक्तः शिवं विष्णुं पूजयेद्भास्करादिकान् ॥ शङ्खभेर्य्यादिनिर्घोषैः स्नापयेत्पञ्चगव्यकैः ॥ १ ॥ यो देवान्देवलोकं स याति स्वकुलमुद्धरन् ॥ वर्षकोटिसहस्रेषु यत्पापं समुपार्जितम् ॥ २ ॥ घृताभ्यङ्गेन देवानां भस्मीभवति पावके ॥ आढकेन घृताद्यैश्च देवान्स्नाप्य सुरो भवेत् ॥ ३ ॥ चन्दनेनानुलिप्याथ गन्धाद्यैः पूजयेत्तथा ॥ अल्पायासेन स्तुतिभिः स्तुता देवास्तु सर्वदा ॥ ४ ॥ अतीतानागतज्ञानमन्त्रधीभुक्तिमुक्तिदाः ॥ गृहीत्वा प्रश्नसूक्ष्मार्णे हृते द्वाभ्यां शुभाशुभम् ॥ ५ ॥ त्रिभिर्जीवो मूलधातुश्चतुर्भिर्ब्राह्मणादिभिः ॥ पञ्चादौ भूततत्त्वादि शेषे चैवं जपादिकम् ॥ ६ ॥ एकत्रिकातित्रिकान्ते पदे द्विपमकान्तके ॥ अशुभं मध्यमं मध्येष्विन्द्रस्त्रिषु नृपः शुभः ॥ ७ ॥ संख्यावृन्दे जीविताब्दं यमोऽब्ददशाहा ध्रुवम् ॥ सूर्य्येभास्येशदुर्गाश्रीविष्णुमन्त्रैर्लिखेत्कजे ॥ ८ ॥ कठिन्या जप्तया स्पृष्टे गोमूत्राकृतिरेखया ॥ आरभ्यैकं त्रिकं यावत्त्रिचतुष्कावसानकम् ॥ ९ ॥ मत्स्योममरुद्वीजैश्चतुःषष्टिपदे तथा ॥ अक्षाणां पतनात्स्पर्शाद्विषमादौ शुभादिकम् ॥ १०॥ एकत्रिकादिमारभ्य अन्ते चाष्टत्रिकं तथा ॥ ध्वजाद्या याः समा हीना विषमाः शोभनादिदाः ॥ ११ ॥ आईपङ्क्त्यावर्तैः काद्यैः षोडशस्वरपूर्वगैः ॥ आद्यैस्तैः सस्वरैः काद्यैस्त्रिमुसनाममन्त्रकाः ॥ १२ ॥ ह्रींबीजाः प्रणवाद्याः स्युर्नमोऽन्ता यत्र पूजने ॥ मन्त्रा विंशतिसाहस्राः शत षष्ट्यधिकं ततः ॥ १३ ॥ आं ह्रीं मन्त्राः सरस्वत्याश्चण्डिकायास्तथैव च ॥ तथा गौर्य्याश्च दुर्गाया आं श्रीं मन्त्राः श्रियस्तथा ॥ १४ ॥ तथा क्षौंमन्त्राः सूर्यस्य







आं हौं ... शिवस्य च ॥ आंगमन्त्रा गणेशस्य आंमन्त्राश्च तथा हरेः ॥ १५ ॥ शतार्द्धैकाधिकैः कार्यैस्तथा षोडशभिः स्वरैः ॥ कार्यैस्तैः सस्वरैराद्यैः कान्तैर्म्मन्त्रास्तथाखिलाः ॥१६ ॥ रवीशदेवीविष्णूनां स्वाधिदेवेन्द्रवर्त्तनात् ॥ शतत्रयं षष्ट्यधिकं प्रत्येकं मण्डलं क्रमात् ॥ अभिषिक्तो जपेद्ध्यायेच्छिष्यादीन्दीक्षयेद्गुरुः ॥ १७ ॥ इत्यादिमहापुराणे आग्नेयेऽभिषिक्तेन कर्तव्यस्य तत्तद्देवतामन्त्रजपादिविधिर्नामैकनवतितमोऽध्यायः ॥ ९१ ॥ अथ वास्तुप्रतिष्ठाविधिः ॥ ईश्वर उवाच ॥ प्रतिष्ठां सम्प्रवक्ष्यामि क्रमात्सङ्क्षेपतो गुह ॥ पीठं शक्तिं शिवो लिङ्गं तद्योगः सा शिवाणुभिः ॥ १ ॥ प्रतिष्ठायाः पञ्च भेदास्तेषां रूपं वदामि ते ॥ यत्र ब्रह्मशिलायोगः सा प्रतिष्ठा विशेषतः॥२॥ स्थापनं तु यथायोगं पीठ एव निवेशनम् ॥ प्रतिष्ठाभिन्नपीठस्य स्थितः स्थापनमुच्यते ॥ ३ ॥ उत्थापनं च सा प्रोक्ता लिङ्गोद्धारपुरःसरा ॥ यस्यां तु लिङ्गमारोप्य संस्कारः क्रियते बुधैः ॥ ४ ॥ आस्थापनं तदुद्दिष्टं द्विधा विष्ण्वादिकस्य च ॥ आसु सर्वासु चैतन्यं नियुञ्जीत परं शिवम् ॥ ५ ॥ यदाधारादिभेदेन प्रासादेष्वपि पञ्चधा ॥ परीक्षामथ मेदिन्याः कुर्य्यात्प्रासादकाम्यया ॥ ६ ॥ शुक्लाज्यगन्धा रक्ता च रक्तगन्धा सुगन्धिनी ॥ पीता कृष्णा सुरागन्धा विप्रादीनां मही क्रमात् ॥ ७ ॥ पूर्वेशोत्तरे सर्वत्र पूर्वा चैषां विशिष्यते ॥ आखाते हास्तिके यस्याः पूर्णे मृदधिका भवेत् ॥ ८ ॥ उत्तमां तां महीं विद्यात्तोयाद्यैर्वा समुक्षिताम् ॥ अस्थ्यङ्गारादिभिर्दुष्टामत्यन्तं शोधयेद्गुरुः ॥ ९ ॥ नगरग्रामदुर्गार्थं गृहप्रासादकारणम् ॥ खननैर्गोकुलावासैः कर्षणैर्वा मुहुर्मुहुः ॥ १० ॥ मण्डपे द्वारपूजादि मन्त्रतृप्त्यवसानकम् ॥ कर्म्म निर्वर्त्याघोरास्त्रं सहस्रं विधिना यजेत् ॥ ११ ॥ समीकृत्योपलिप्तायां भूमौ संशोधयेद्दिशः ॥ स्वर्णदध्यक्षतै रेखाः प्रकुर्वीत प्रदक्षिणम् ॥ १२ ॥ मध्यादीशानकोष्ठस्थे पूर्णकुम्भे शिवं यजेत् ॥ वास्तुमभ्यर्च्य तत्तोयैः सिञ्चेत्कुद्दालकादिकम् ॥ १३ ॥ बाह्ये रक्षोगणानिष्ट्वा विधिना दिग्बलिं क्षिपेत् ॥ भूमिं संसिच्य संस्नाप्य कुद्दालाद्यं प्रपूजयेत् ॥ १४ ॥ अन्यं वस्त्रयुगच्छन्नं कुम्भं स्कन्धे ॥ ९७ ॥ द्विजन्मनः ॥ निधाय गीतवाद्यादिब्रह्मघोषसमाकुलम् ॥ १५ ॥ पूजां कुम्भे समाहृत्य प्राप्ते ह्यमेऽग्निकोष्ठके ॥ कुद्दालेनाभिषिक्तेन मध्वक्तेन तु खानयेत् ॥ १६ ॥ नैर्ऋत्यां क्षेपयेन्मृत्स्नां खाते कुम्भजलं क्षिपेत् ॥ पुरस्य पूर्वसीमान्तं नयेद्यावदभी-

प्सितम् ॥ १७ ॥ अथ तत्र क्षणं स्थित्वा भ्रामयेत्परितः पुरम् ॥ सिञ्चन्सीमान्तचिह्नानि यावदीशानगोचरम् ॥ १८ ॥
अर्घ्यदानमिदं प्रोक्तं तत्र कुम्भपरिभ्रमात् ॥ इत्थं परिग्रहं भूमेः कुर्वीत तदनन्तरम् ॥ १९ ॥ कर्करान्तं जलान्तं वा शल्य-
दोषजिघांसया ॥ खानयेद्वकुमारी चेद्विधिना शल्यमुद्धरेत् ॥ २० ॥ अकचटतपयशहान्मानवश्चेत्प्रश्नाक्षराणि तु ॥
अग्नेर्ध्वजादिपतिताः स्वस्थाने शल्यमाख्यान्ति ॥ २१ ॥ कर्तुश्चाङ्गविकारेण जानीयात्तत्प्रमाणतः ॥ पश्वादीनां
प्रवेशेन कीर्त्तनैर्विरुतैर्दिशः ॥ २२ ॥ मातृकामष्टवर्गाढ्यां फलके भुवि वा लिखेत् ॥ शल्यज्ञानं वर्गवशात्पूर्वादीशान्ततः
क्रमात् ॥ २३ ॥ अवर्गे चैव लोहं तु कवर्गेऽङ्गारमाश्रितः ॥ चवर्गे भस्म दक्षे स्याट्टवर्गेऽस्थि च नैर्ऋते ॥ २४ ॥ तवर्गे
चेष्टका चाप्ये कपालं च पवर्गके ॥ यवर्गे शवकीटादि शवर्गे लोहमादिशेत् ॥ २५ ॥ हवर्गे रजतं तद्वदवर्गाद्यानर्थकरानपि ॥
प्रोक्ष्यात्मभिः करापूरैरष्टाङ्गुलमृदन्तरैः ॥ २६ ॥ पादोनं खातमापूर्य्य सजलैर्मुद्गराहतैः ॥ क्रितां समप्लुवां तत्र कारयित्वा भुवं
गुरुः ॥ २७ ॥ सामान्यार्घ्यकरो यायान्मण्डपं वक्ष्यमाणकम् ॥ तोरणद्वाःपतीनिष्ट्वा प्रत्यग्द्वारेण संविशेत् ॥ २८ ॥
कुर्य्यात्तत्रात्मशुद्ध्यादि कुण्डमण्डपसंस्कृतिम् ॥ कलशं वर्द्धनीसक्तं लोकपालशिवार्चनम् ॥ २९ ॥ अग्नेर्जननपूजादि सर्वं
पूर्ववदाचरेत् ॥ यजमानान्वितो यायाच्छिलानां स्नानमण्डपम् ॥ ३० ॥ शिलाः प्रासादलिङ्गस्य पादा धर्म्मादिसञ्ज्ञकाः ॥
अष्टाङ्गुलोच्छ्रिताः शस्ताश्चतुरस्राः करायताः ॥ ३१ ॥ पाषाणानां शिलाः कार्य्या इष्टकानां तदर्द्धतः ॥ प्रासादे स्म शिलाः
शैल इष्टका इष्टकामये ॥ ३२ ॥ अङ्किता नववक्राद्यैः पङ्कजैः पङ्कजाङ्किताः ॥ नन्दा भद्रा जया रिक्ता पूर्णाख्या पञ्चमी
मता ॥ ३३ ॥ आसां पद्मो महापद्मः शङ्खोऽथ मकरस्तथा ॥ समुद्रश्चेति पञ्चामी निधिकुम्भाः क्रमादघः ॥ ३४ ॥ नन्दा भद्रा
जया पूर्णा अजिता चापराजिता ॥ विजया मङ्गलाख्या च धरणी नवमी शिला ॥ ३५ ॥ सुभद्रश्च विभद्रश्च सुनन्दः
पुष्पनन्दकः ॥ जयोऽथ विजयश्चैव कुम्भः पूर्णस्तथोत्तरः ॥ ३६ ॥ नवानां तु यथासंख्यं निधिकुम्भा अमी नव ॥ आसनं
प्रथमं दत्त्वा ताडयोल्लिख्य शम्भुना ॥ ३७ ॥ सर्वासामविशेषेण तनुत्रेणावगुण्ठनम् ॥ मृद्भिर्गोमयगोमूत्रकषायैर्गन्धवा-

रिणा ॥ ३८ ॥ अस्त्रेण हूंफडन्तेन मलस्नानं समाचरेत् ॥ विधिना पञ्चगव्येन स्नानं पञ्चामृतेन च ॥ ३९ ॥ गन्धतोयान्तरं कुर्य्यान्निजनामाङ्किताणुना ॥ फलरत्नसुवर्णानां गोशृङ्गसलिलैस्ततः ॥ ४० ॥ चन्दनेन समालभ्य वस्त्रैराच्छादयेच्छिलाम् ॥ स्वर्णोत्थमासनं दत्त्वा नीत्वा यागं प्रदक्षिणम् ॥ ४१ ॥ शय्यायां कुशतल्पे वा हृदयेन निवेशयेत् ॥ संपूज्य न्यस्य बुद्ध्यादि धरान्तं तत्त्वसञ्चयम् ॥ ४२ ॥ त्रिखण्डव्यापकं तत्त्वत्रयं चानुक्रमान्न्यसेत् ॥ बुद्ध्यादौ चित्तपर्य्यन्ते चिन्तातन्मात्रकावधौ ॥ ॥ ४३ ॥ तन्मात्रादौ धरान्ते च शिवविद्यात्मनां स्थितिः ॥ तत्त्वानि निजमंत्रेण तत्त्वेशांश्च हृदाऽर्च्चयेत् ॥ ४४ ॥ स्थानेषु पुष्पमालादिचिह्नितेषु यथाक्रमम् । ॐ हू शिवतत्त्वाय नमः । ॐ हूं शिवतत्त्वाधिपतये रुद्राय नमः । ॐ हां विद्यातत्त्वाय नमः । ॐ हां विद्यातत्त्वाधिपाय विष्णवे नमः ॥ ॐ हाम् आत्मतत्त्वाय नमः । ॐ हाम् आत्मतत्त्वाधिपतये ब्रह्मणे नमः ॥ क्षमाग्नियजमानार्कजलवातेन्दुखानि च ॥ ४५ ॥ प्रतितत्त्वं न्यसेदष्टौ मूर्तीः प्रति शिलां शिलाम् ॥ शर्वं पशुपतिं चोग्रं रुद्रं भवमथेश्वरम् ॥ ४६ ॥ महादेवं च भीमं च मूर्तीशांश्च यथाक्रमात् ॥ ॐ धरामूर्त्तये नमः । ओं धराधिपतये नमः ॥ इत्यादिमंत्रौँल्लोकपालान्यथासंख्यं निजाणुभिः ॥ ४७ ॥ विन्यस्य पूजयेत्कुम्भांस्तन्मन्त्रैर्वा निजाणुभिः ॥ इन्द्रादीनां तु बीजानि वक्ष्यमाणक्रमेण तु ॥ ४८ ॥ लूं रूं शूं पूं वूं यूं सूं हूं क्षूमिति ॥ उक्तो नवशिलापक्षः शिला पञ्चपदा तथा ॥ प्रतितत्त्वं न्यसेन्मूर्त्तीः सृष्ट्या पञ्च धरादिकाः ॥ ४९ ॥ ब्रह्मा विष्णुस्तथा रुद्र ईश्वरश्च सदाशिवः ॥ एते च पञ्च मूर्त्तीशा यष्ट-व्यास्तासु पूर्ववत् ॥ ५० ॥ ॐ पृथ्वीमूर्त्तये नमः । ॐ पृथ्वीमूर्त्यधिपतये ब्रह्मणे नमः । इत्यादिमन्त्राः । संपूज्य कलशान्पञ्च क्रमेण निजनामभिः ॥ निरुन्धीत विधानेन न्यासो मध्यशिलाक्रमात् ॥ ५१ ॥ कुर्य्यात्प्राकारमन्त्रेण भूतिदर्भैस्तिलैस्ततः ॥ कुण्डेषु धारिकां शक्तिं विन्यस्याभ्यर्च्य तर्पयेत् ॥ ५२ ॥ तत्त्वतत्त्वाधिपान्मूर्तीर्मूर्त्तीशांश्च घृतादिभिः ॥ ततो ब्रह्मांशशुद्ध्यर्थं मूलाङ्गं ब्रह्मभिः क्रमात् ॥ ५३ ॥ कृत्वा शतादिपूर्णान्तं प्रोक्ष्याः शान्तिजलैः शिलाः ॥ पूजयेच्च कुशैः स्पृष्ट्वा प्रतितत्त्वमनु-क्रमात् ॥ ५४ ॥ सान्निध्यमथ सन्धानं कृत्वा शुद्ध पुनर्न्यसेत् ॥ एवं भागत्रये कर्म गत्वा गत्वा समाचरेत् ॥ ५५ ॥

ॐ आम् ईम् आत्मतत्त्वविद्यातत्त्वाभ्यां नमः इति ॥ संस्पृशेद्दर्भमूलाद्यैर्ब्रह्माग्रादित्रयं क्रमात् ॥ कुर्य्यात्तत्त्वानुसन्धानं ह्रस्वदीर्घ-प्रयोगतः ॥ ९६ ॥ ॐ हाम उम् विद्यातत्त्वशिवतत्त्वाभ्यां नमः ॥ घृतेन मधुना पूर्णांस्ताम्रकुंभान्सरत्नकान् ॥ पञ्चगव्याम्बु-संसिक्ताँल्लोकपालाधिदैवतान् ॥ ९७ ॥ पूजयित्वा निजैर्मन्त्रैः सन्निधौ होममाचरेत् ॥ शिलानामथ सर्वासां संस्मरेदधि-देवताः ॥ ९८ ॥ विद्यारूपाः कृतस्नाना हेमवर्णाः शिलावराः ॥ न्यूनादिदोषमोषार्थं वास्तुभूमेश्च शुद्धये ॥ यजेदस्त्रेण मूर्द्धान्तमाहुतीनां शतं शतम् ॥ ९९ ॥ इत्यादिमहापुराणे आग्नेये वास्तुप्रतिष्ठाङ्गशिलान्यासविधिर्नाम द्विनवतितमोऽ-ध्यायः ॥ ९२ ॥ अथ वास्तुपूजादिविधानम् ॥ ईश्वर उवाच ॥ ततः प्रासादमासूत्र्य वर्त्तयेद्वास्तुमण्डपम् ॥ कुर्य्यात्को-ष्ठचतुःषष्टि क्षेत्रे वेदास्रके समे ॥ १ ॥ कोणेषु विन्यसेद्वंशौ रज्जवोऽष्टौ विकोणगाः ॥ द्विपदाः षट्पदास्तास्तु वास्तुं तत्रार्च्चये-द्यथा ॥ २ ॥ आकुञ्चितकचं वास्तुमुत्तानमसुराकृतिम् ॥ स्मरेत्पूजासु कुडचादिनिवेशे त्वधराननम् ॥ ३ ॥ जानुनी कूर्परौ सक्थि दिशि वातहुताशयोः ॥ पैत्र्यां पादपुटे रौद्र्यां शिरोऽस्य हृदयेऽञ्जलिः ॥ ४ ॥ अस्य देहे समारूढा देवताः पूजिताः शुभाः ॥ अष्टौ कोणाधिपास्तत्र कोणार्द्धेष्वष्टसु स्थिताः ॥ ५ ॥ षट्पदास्तु मरीच्याद्या दिक्षु पूर्वादिषु क्रमात् ॥ मध्ये चतु-ष्पदो ब्रह्मा शेषास्तु पदिकाः स्मृताः ॥ ६ ॥ समस्तनाडीसंयोगे महामर्म्मानुजं फलम् ॥ त्रिशूलं स्वस्तिकं वज्रं महास्वस्तिक-सम्पुटौ ॥ ७ ॥ त्रिकटुं मणिबन्धं च सुविशुद्धं पदं तथा ॥ इति द्वादश मर्म्माणि वास्तोर्भित्त्यादिषु त्यजेत् ॥ ८ ॥ साज्यम-क्षतमीशाय पर्जन्यायाम्बुजोदकम् ॥ ददीताथ जयन्ताय पताकां कुङ्कुमोज्ज्वलाम् ॥ ९ ॥ रत्नवारि महेन्द्राय रवौ धूम्रं वितानकम् ॥ सत्याय घृतगोधूममाज्यभक्तं भृशाय च ॥ १० ॥ विर्मासमन्तरिक्षाय शकुन्तेभ्यस्तु पूर्वतः ॥ मधुक्षीराज्यसम्पूर्णां प्रदद्याद्वह्नये स्रुचम् ॥ ११ ॥ लाजान्पूर्णे सुवर्णाम्बु वितथाय निवेदयेत् ॥ दद्याद्बृहत्क्षते क्षौद्रं यमराजे पलौदनम् ॥ १२ ॥ गन्धं गन्धर्वनाथाय जिह्वां भृङ्गाय पक्षिणः ॥ मृगाय पद्मपर्णानि याम्यामित्यष्ट-देवताः ॥ १३ ॥ पित्रे तिलोदकं क्षीरवृक्षजं दन्तधावनम् ॥ दौवारिकाय देवाय प्रदद्याद्धेनुमुद्रया ॥ १४ ॥ सुग्रीवाय दिशेत्पूपान्पुष्पदन्ताय दर्भकम् ॥ रक्तं प्रचेतसे






पद्ममसुराय सुरासवम् ॥ १५ ॥ घृतं गुडौदनं शेषे रोगाय घृतमण्डकम् ॥ लाजान्वा पश्चिमाशायां देवाष्टकमितीरितम्
॥ १६ ॥ मारुताय ध्वजं पीतं नागाय नागकेसरम् ॥ मुख्ये भक्ष्याणि भल्लाटे मुद्गसूपं सुसंस्कृतम् ॥ १७ ॥
सोमाय पायसं साज्यं शालूकं मृषये दिशेत् ॥ लोपीमदितये दित्यै पुरीमित्युत्तराष्टकम् ॥ १८ ॥ मोदकान्ब्रह्मणः प्राच्यां
षट्पदाय मरीचये ॥ सवित्रे रक्तपुष्पाणि वह्न्यधःकोणकोष्ठके ॥ १९ ॥ तदधःकोष्ठके दद्यात्सावित्र्यै च कुशोदकम् ॥
दक्षिणे चन्दनं रक्तं षट्पदाय विवस्वते ॥ २० ॥ हारिद्रौदनमिंद्राय रक्षोधःकोणकोष्ठके ॥ इन्द्रजाय च मिश्रान्नमिन्द्रा-
धस्तान्निवेदयेत् ॥ २१ ॥ वारुण्यां षट्पदाधीने मित्रे सगुडमोदनम् ॥ रुद्राय घृतसिद्धान्नं वायुकोणाधरे पदे ॥ २२ ॥ तदधो
रुद्रदासाय मांसं मार्गमथोत्तरे ॥ ददीत माषनैवेद्यं षट्पदस्थे धराधरे ॥ २३ ॥ आपाय शिवकोणाधस्तद्वत्साय च तत्स्थले ॥
क्रमाद्दद्याद्दधि क्षीरं पूजयित्वा विधानतः ॥ २४ ॥ चतुष्पदे निविष्टाय ब्रह्मणे मध्यदेशतः ॥ पञ्चगव्याक्षतोपेतं चरुं साज्यं निवे-
दयेत् ॥ २५ ॥ ईशादिवायुपर्य्यन्तकोणेष्वथ यथाक्रमम् ॥ वास्तुबाह्ये चरक्याद्याश्चतस्रः पूजयेद्यथा ॥ २६ ॥ चरक्यै सघृतं
मांसं विदार्य्यै दधिपङ्कजे ॥ पूतनायै पलं पित्तं रुधिरं च निवेदयेत् ॥ २७ ॥ अस्थीनि पापराक्षस्यै रक्तपित्तपलानि च ॥
ततो माषौदनं प्राच्यां स्कन्दाय विनिवेदयेत् ॥ २८ ॥ अर्य्यम्णे दक्षिणाशायां पूपान्कृसरया युतान् ॥ जम्भकाय च
वारुण्यामामिषं रुधिरान्वितम् ॥ २९ ॥ उदीच्यां पिलिपिञ्जाय रक्तान्नं कुसुमानि च ॥ यजेद्वा सकलं वास्तुं कुश-
दध्यक्षतैर्जलैः ॥ ३० ॥ गृहे च नगरादौ च एकाशीतिपदैर्यजेत् ॥ त्रिपदा रज्जवः कार्य्याः षट्पदाश्च विकोणके
॥ ३१ ॥ ईशाद्याः पादिकास्तस्मिन्नागाद्याश्च द्विकोष्ठगाः ॥ षट्पदस्था मरीच्याद्या ब्रह्मा नवपदः स्मृतः ॥ ३२ ॥
नगरग्रामखेटादौ वास्तुः शतपदोऽपि वा ॥ वंशद्वयं कोणगतं दुर्जयं दुर्धरं सदा ॥३३॥ यथा देवालये न्यासस्तथा शतपदे हितः॥ ॥ ६९ ॥
ग्रहाः स्कन्दादयस्तत्र विज्ञेयाश्चैव षट्पदाः ॥ ३४ ॥ चरक्याद्या भूतपदा रज्जुवंशादि पूर्ववत् ॥ देशसंस्थापने वास्तुश्चतुस्त्रि-
शच्छतं भवेत् ॥ ३५ ॥ चतुःषष्टिपदो ब्रह्मा मरीच्याद्याश्च देवताः ॥ चतुष्पञ्चाशत्पदिका आपाद्यष्टौ रसाग्निभिः ॥ ३६ ॥

ईशानाद्या नवपदाः स्कन्दाद्याः शक्तिकाः स्मृताः ॥ चरक्याद्यास्तद्वदेव रज्जुवंशादि पूर्ववत् ॥ ३७ ॥ ज्ञेयो विंशतिसाहस्रैर्वास्तु-मण्डलगैः पदैः ॥ न्यासो नवगुणस्तत्र कर्त्तव्यो देशवास्तुवत् ॥ ३८ ॥ पञ्चविंशतिपदो वास्तुर्वेताळाख्याश्रितो स्मृतः ॥ अन्यो नवपदो वास्तुः षोडशांघ्रिस्तथापरः ॥ ३९ ॥ षडस्रऽयस्रवृत्तादेर्म्मध्ये स्याच्चतुरस्रकम् ॥ खाते वास्तोः समं पृष्ठे न्यासे ब्रह्म-शिलात्मके ॥ ४० ॥ शावाकस्य निवेशे च मूर्तिसंस्थापने तथा ॥ पायसेन तु नैवेद्यं सर्वेषां वा प्रकल्पयेत् ॥ ४१ ॥ उक्तानुक्ते तु वै वास्तुः पञ्चहस्तप्रमाणतः ॥ गृहप्रासादमानेन वास्तुः श्रेष्ठस्तु सर्वदा ॥ ४२ ॥ इत्यादिमहापुराणे आग्नेये वास्तुपूजाविधिर्नाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥ अथ शिलाविन्यासविधानम् ॥ ईश्वर उवाच ॥ ईशादिषु चरक्याद्याः पूर्ववत्पूजयेद्वहिः ॥ आहु-तित्रितयं दद्यात्प्रतिदेवमनुक्रमात् ॥ १ ॥ दत्त्वा भूतबलिं लग्ने शिलान्यासमनुक्रमात् ॥ मध्यसूत्रे न्यसेच्छक्तिं कुम्भं जान्वन्तमुत्तमम् ॥ २ ॥ नकाररूढमूलेन कुम्भेऽस्मिन्धारयेच्छिलाम् ॥ कुम्भानष्टौ सुभद्रादीन्दिक्षु पूर्वादिषु क्रमात् ॥ ३ ॥ लोकपालाणुभिर्न्यस्य श्वभ्रेषु न्यस्तशक्तिषु ॥ शिलास्तेष्वथ नन्दाद्याः क्रमेण विनिवेशयेत् ॥ ४ ॥ शम्बरैर्मूर्तिनाथानां यथा स्युर्भित्तिमध्यतः ॥ तासु धर्म्मादिकानष्टौ कोणात्कोणं विभागशः ॥ ५ ॥ सुभद्रादिषु नन्दाद्याश्चतस्रोऽग्न्यादिकोणगाः ॥ अजिताद्याश्च पूर्वादिजया-दिष्वथ विन्यसेत् ॥ ६ ॥ ब्राह्मणं चोपरि न्यस्य व्यापकं च महेश्वरम् ॥ चिन्तयेदेषु चाधानं व्योमप्रासादमध्यगम् ॥ ७ ॥ बलिं दत्त्वा जपेदस्त्रं विघ्नदोषनिवारणम् ॥ शिलापञ्चकपक्षेऽपि मनागुद्दिश्यते यथा ॥ ८ ॥ मध्ये पूर्णशिलान्यासः सुभद्रकलशेऽ-द्धतः ॥ पद्मादिषु च नन्दाद्याः कोणेष्वग्न्यादिषु क्रमात् ॥ ९ ॥ मध्यभावे चतस्रोऽपि मातृवद्भावसम्मताः ॥ ओं पूर्णे त्वं महाविद्ये सर्वसन्दोहलक्षणे ॥ १० ॥ सर्वं सम्पूर्णमेवात्र कुरुष्वाङ्गिरसः सुते ॥ ओं नन्दे त्वं नन्दिनी पुंसां त्वामत्र स्थापयाम्यहम् ॥ ११ ॥ प्रासादे तिष्ठ सन्तृप्ता यावच्चन्द्रार्कतारकम् ॥ आयुः कामं श्रियं नन्दे देहि वासिष्ठि देहिनाम् ॥ १२ ॥ अस्मिन्रक्षा सदा कार्य्या प्रासादे यत्नतस्त्वया ॥ ओं भद्रे त्वं सर्वदा भद्रं लोकानां कुरु काश्यपि ॥ १३ ॥ आयुर्दा कामदा देवि श्रीप्रदा च सदा भव ॥ ओं जयेऽत्र सर्वदा देवि श्रीदाऽऽयुर्दा सदा भव ॥ १४ ॥ ओं जयेऽत्र

सर्वदा देवि तिष्ठ त्वं स्थापिता मया ॥ नित्यं जयाय भूत्यै च स्वामिनी भव भार्गवे ॥ १५ ॥ ओं रिक्तेऽतिरिक्तदोषघ्ने सिद्धिमुक्तिप्रदे शुभे ॥ सर्वदा सर्वदेशस्थे तिष्ठास्मिन्विश्वरूपिणि ॥ १६ ॥ गगनायतनं ध्यात्वा तत्र तत्त्वत्रयं न्यसेत् ॥ प्रायश्चित्तं ततो हुत्वा विधिना विसृजेन्मखम् ॥ १७ ॥ इत्यादिमहापुराणे आग्नेये शिलाविन्यासविधानं नाम चतुर्नवतितमोऽध्यायः ॥ ९४ ॥ अथ प्रतिष्ठामासादिसामग्र्यादिः ॥ ईश्वर उवाच ॥ वक्ष्ये लिङ्गप्रतिष्ठां च प्रासादे भुक्तिमुक्तिदाम् ॥ तां चरेत्सर्वदा मुक्तौ भुक्तौ देवदिने सति ॥ १ ॥ विना चैत्रेण माघादौ प्रतिष्ठा मासपञ्चके ॥ गुरुशुक्रोदये कार्या प्रथमे करणत्रये ॥ २ ॥ शुक्लपक्षे विशेषेण कृष्णेऽप्यापञ्चमीदिनम् ॥ चतुर्थीं नवमीं षष्ठीं वर्जयित्वा चतुर्दशीम् ॥ ३ ॥ शोभनास्तिथयः शेषाः क्रूरवारविवर्जिताः ॥ शतभिषा धनिष्ठार्द्री अनुराधोत्तरात्रयम् ॥ ४ ॥ रोहिणी श्रवणं चेति स्थिरारम्भे महोदयाः ॥ लग्ने च कुम्भसिंहालितुलास्त्रीवृषधन्विनाम् ॥ ५ ॥ शस्तो जीवो नवर्क्षेषु सप्तस्थाने तु सर्वदा ॥ बुधः षडष्टदिक्सप्ततुर्येषु विनर्तुं सितः ॥ ६ ॥ सप्तर्तुत्रिदशादिस्थः शशाङ्को बलदः सदा ॥ रविर्दशत्रिषट्संस्थो राहुस्त्रिदशषड्गतः ॥ ७ ॥ षट्त्रिस्थानगताः शस्ता मन्दाङ्गारार्ककेतवः ॥ शुभाः क्रूराश्च पापाश्च सर्वं एकादशस्थिताः ॥ ८ ॥ एषां दृष्टिर्मुनौ पूर्णा त्वार्द्धिकी ग्रहभूतयोः ॥ पादिकी रामदिक्स्थाने चतुरष्टौ पादवर्जिता ॥ ९ ॥ पादन्यूनचतुर्नाडीभोगः स्यान्मीनमेषयोः ॥ वृषकुम्भौ च भुञ्जाते चतस्रः पादवर्जिताः ॥ १० ॥ मकरो मिथुनं पञ्च चापालिहरिकर्कटाः ॥ पादोनाः षट् तुलाकन्ये घटिकाः सार्द्धपञ्च च ॥ ११ ॥ केसरी वृषभः कुम्भः स्थिराः स्युः सिद्धिदायकाः ॥ चरा धनुस्तुलामेषा द्विःस्वभावास्तृतीयकाः ॥ १२ ॥ शुभः शुभग्रहैर्दृष्टः शस्तो लग्नः शुभाश्रितः ॥ गुरुशुक्रबुधैर्युक्तो लग्नो दद्याद्बलायुषी ॥ १३ ॥ राज्यं शौर्य्यं बलं पुत्रान्यशो धर्म्मादिकं बहु ॥ प्रथमः सप्तमस्तुर्य्यो दशमः केन्द्र उच्यते ॥ १४ ॥ गुरुशुक्रबुधास्तत्र सर्वसिद्धिप्रदायकाः ॥ त्र्येकादशचतुर्थस्था लग्नात्पापग्रहाः शुभाः ॥ १५ ॥ अतोऽप्यनीचकर्मार्थं योज्यास्तिथ्यादयो बुधैः ॥ धाम्नः पञ्चगुणां भूमिं त्यक्त्वा वा धामसम्मिताम् ॥ १६ ॥ हस्ताद्वादशसोपानात्कुर्य्यान्मण्डपमग्रतः ॥ चतुरस्रं चतुर्द्वारं स्नानार्थं तु तदर्द्धतः ॥ १७ ॥ एकास्यं चतुरास्यं वा रौद्र्यां प्राच्युत्तरेऽथ 

वा ॥ हास्तिको दशहस्ती वै मण्डपोऽर्ककरोऽथवा ॥ १८ ॥ द्विहस्तोत्तरया वृद्ध्या शेषं स्यान्मण्डपाष्टकम् ॥ वेदिश्चतुष्करा मध्ये कोणस्तम्भेन संयुता ॥ १९ ॥ वेदिपादान्तरं त्यक्त्वा कुण्डानि नव पञ्च वा ॥ एकं वा शिवकाष्ठायां प्राच्यां वा तद्गुरोः परम् ॥ २० ॥ मुष्टिमात्रं शतार्द्धे स्याच्छते चारत्निमात्रकम् ॥ हस्तं सहस्रहोमे स्यान्नियुते तु द्विहास्तिकम् ॥ २१ ॥ लक्षे चतुष्करं कुण्डं कोटिहोमेऽष्टहस्तकम् ॥ भगाभमग्नौ खण्डेन्दु दक्षे त्र्यस्रं च नैर्ऋते ॥ २२ ॥ षडस्रं वायौ पद्मं सौम्ये चाष्टास्रकं शिवे ॥ तिर्य्यक्पातं शिवं खातमूर्ध्वं मेखलया सह ॥ २३ ॥ तद्बहिर्मेखलास्तिस्रो वेदवह्नियमाङ्गुलैः ॥ अङ्गुलैः षड्भिरेका वा कुण्डाकारास्तु मेखलाः ॥ २४ ॥ तासामुपरि योनिः स्यान्मध्येऽश्वत्थदलाकृतिः ॥ उच्छ्रायेणाङ्गुलं तस्माद्विस्तारेणाङ्गुलाष्टकम् ॥ २५ ॥ दैर्घ्यं कुण्डार्द्धमानेन कुण्डकण्ठसमोऽधरः ॥ पूर्वाग्नियाम्यकुण्डानां योनिः स्यादुत्तरानना ॥ २६ ॥ पूर्वानना तु शेषाणामैशान्येऽन्यतरा तयोः ॥ कुण्डानां यश्चतुर्विंशो भागः सोऽङ्गुल इत्यतः ॥ २७ ॥ प्लक्षोदुम्बरकाश्वत्थवटजास्तोरणाः क्रमात् ॥ शान्तिभूतिबलारोग्यपूर्वाद्या नामतः क्रमात् ॥ २८ ॥ पञ्चषटसप्तहस्तानि हस्तखातास्थितानि च ॥ तदर्द्धविस्तराणि स्युर्युतान्याम्रदलादिभिः ॥ २९ ॥ इन्द्रायुधोपमा रक्ता कृष्णा धूम्रा शशिप्रभा ॥ शुक्लाभा हेमवर्णा च पताका स्फाटिकोपमा ॥ ॥ ३० ॥ पूर्वादितोऽब्जजे रक्ता नीलाऽनन्तस्य नैर्ऋते ॥ पञ्चहस्तास्तदर्द्धांश्च ध्वजा दीर्घाश्च विस्तराः ॥ ३१ ॥ हस्तप्रदेशिता दण्डा ध्वजानां पञ्चहस्तकाः ॥ वल्मीकाद्दन्तिदन्ताग्रात्तथा वृषभशृङ्गतः ॥ ३२ ॥ पद्मपण्डाद्वराहाच्च गोष्ठादपि चतुष्पथात् ॥ मृत्तिका द्वादश ग्राह्या वैकुण्ठेऽष्टौ पिनाकिनी ॥ ३३ ॥ न्यग्रोधोदुम्बराश्वत्थचूतजम्बूत्वगुद्भवम् ॥ कषायपञ्चकं ग्राह्यमार्त्तवं च पलाष्टकम् ॥ ३४ ॥ तीर्थाम्भांसि सुगन्धीनि तथा सर्वौषधीजलम् ॥ शस्तं पुष्पफलं वक्ष्ये रत्नगोशृङ्गवारि च ॥ ३५ ॥ स्नानायापाहरेत्पञ्च पञ्चगव्यामृतं तथा ॥ पिष्टनिर्मितवस्त्रादिद्रव्यं निर्म्मञ्जनाय च ॥ ३६ ॥ सहस्रसुषिरं कुम्भं मण्डलाय च रोचना ॥ शतमोषधिमूलानां विजया लक्ष्मणा बला ॥ ३७ ॥ गुडूच्यतिबला पाठा सहदेवी शतावरी ॥ ऋद्धिः सुवर्चला वृद्धिः स्नाने प्रोक्ता पृथक् पृथक् ॥ ३८ ॥ रक्षायै तिलदर्भौघो भस्मस्नानं तु केवलम् ॥ यवगोधूमबिल्वानां चूर्णानि च विच-





क्षणः ॥ ३९॥ विलेपनं सकर्पूरं स्नानार्थं कुम्भगण्डकान् ॥ स्वर्दां च तूलिकायुग्मं सोपधानं सवस्त्रकम् ॥४०॥ कुर्य्याद्वित्तानुसारेण शयने लक्ष्यकल्पने ॥ घृतक्षौद्रयुतं पात्रं कुर्य्यात्स्वर्णशलाकिकाम् ॥ ४१ ॥ वर्द्धनीं शिवकुम्भं च लोकपालघटानपि ॥ एकं निद्राकृते कुम्भे शान्त्यर्थं कुण्डसङ्ख्यया ॥ ४२ ॥ द्वारपालादिधर्मादिप्रशान्तादिघटानपि ॥ वास्तुलक्ष्मीगणेशानां कलशानपरानपि ॥ ४३ ॥ धान्यपुञ्जकृताधारान्सवस्त्रान्स्रग्विभूषितान् ॥ सहिरण्यान्समालब्धान्गन्धपानीयपूरितान् ॥ ४४ ॥ पूर्णपात्रफलाधारान्पल्लवाढ्यान्सलक्षणान् ॥ वस्त्रैराच्छादयेत्कुम्भानाहरेद्गौरसर्षपान् ॥ ४५ ॥ विकिरार्थं तथा लाजाञ्ज्ञानखड्गं च पूर्ववत् ॥ समिधश्च चरुस्थालीं दर्वीं च ताम्रनिर्मिताम् ॥ ४६ ॥ घृतक्षौद्रान्वितं पात्रं पादाभ्यङ्गकृते तथा ॥ विष्टरांस्त्रिशतीदर्भैदलैर्बाहुप्रमाणकान् ॥ ४७ ॥ चतुरश्चतुरस्तद्वत्पालाशान्परिधीनपि ॥ तिलपात्रं हविःपात्रमर्घपात्रं पवित्रकम् ॥ ४८ ॥ पलविंशाष्टमानानि घटी धूपप्रदानकम् ॥ स्रुक्स्रुवौ पिटकं पीठं व्यजनं शुष्कमिन्धनम् ॥ ४९ ॥ पुष्पं पत्रं गुग्गुलुं च घृतैर्दीपांश्च धूपकम् ॥ अक्षतानि त्रिसूत्रीं च गव्यमाज्यं यवांस्तिलान् ॥ ५० ॥ कुशाः शान्त्यै त्रिमधुरं समिधो दशपर्विकाः ॥ बाहुमात्रं स्रुवं हस्तमर्कादिग्रहशान्तये ॥ ५१ ॥ समिधोऽर्कपलाशोत्थाः खादिरामार्गपिप्पलाः ॥ उदुम्बरशमीदूर्वाः कुशोत्थाः शतमष्ट च ॥ ५२ ॥ तदभावे यवतिला गृहोपकरणं तथा ॥ स्थालीदर्वीपिधानादि देवादिभ्योंऽशुकद्वयम् ॥ ५३ ॥ मुद्रामुकुटवासांसि हारकुण्डलकङ्कणान् ॥ कुर्य्यादाचार्यपूजार्थं वित्तशाठ्यं विवर्जयेत् ॥५४॥ तत्पादपादहीना च मूर्त्तिभृदस्त्रजापिनाम् ॥ पूजा स्याज्जापिभिस्तुल्या विप्रदेवज्ञशिल्पिनाम् ॥ ५५ ॥ वज्रार्कशान्तौ नीलातिनीलमुक्ताफलानि च ॥ पुष्पपद्मादिरागं च वैदूर्यं रत्नमष्टमम् ॥ ५६ ॥ उशीरमाधवकान्तारक्तचन्दनकागुरुम् ॥ श्रीखण्डं सारिकं कुष्ठं शङ्खिनी ह्योषधीगणः ॥ ५७ ॥ हेमताम्रमयं रक्तं राजतं च सकांस्यकम् ॥ सीसकं चेति लोहानि हरितालं मनःशिला ॥ ५८ ॥ गैरिकं हेममाक्षीकं पारदो वह्निगैरिकम् ॥ गन्धकाभ्रकमित्यष्टौ धातवो व्रीहयस्तथा ॥ ५९ ॥ गोधूमान्सतिलान्माषान्मुद्गानप्याहरेद्यवान् ॥ नीवाराञ्छ्यामकानेवं व्रीहयोऽप्यष्ट कीर्त्तिताः ॥ ६० ॥ इत्यादिमहापुराणे आग्नेये प्रतिष्ठामासादिसामग्र्यादिकं नाम पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

अथाधिवासनाविधिः ॥ ईश्वर उवाच ॥ स्नात्वा नित्यद्वयं कृत्वा प्रणवार्चकरो गुरुः ॥ सहायैर्मूर्त्तिपैर्विप्रैः सह गच्छेन्मखालयम् ॥ १ ॥ शान्त्यादितोरणांस्तत्र पूर्ववत्पूजयेत्क्रमात् ॥ प्रदक्षिणक्रमादेषां शाखायां द्वारपालकान् ॥ २ ॥ प्राचि नन्दिमहाकालौ याम्ये भृङ्गिविनायकौ ॥ वारुणे वृषभस्कन्दौ देवीचण्डौ तथोत्तरे ॥ ३ ॥ तच्छाखामूलदेशस्थौ प्रशान्तशिशिरौ घटौ ॥ पर्ज्जन्यशोकनामानौ भूतसञ्जीवनामृतौ ॥ ४ ॥ धनदश्रीपदौ द्वा द्वौ पूजयेदनुपूर्वशः ॥ स्वनामभिश्चतुर्थ्यन्तैः प्रणवादिनमोऽन्तकैः ॥ ५ ॥ लोकग्रहावसुद्वाःस्थस्रवन्तीनां द्वयं द्वयम् ॥ भानुत्रयं युगं वेदो लक्ष्मीर्गणपतिस्तथा ॥ ६ ॥ इति देवा मखागारे तिष्ठन्ति प्रतितोरणम् ॥ विघ्नसंघापनोदाय क्रतोः संरक्षणाय च ॥ ७ ॥ वज्रं शक्तिं तथा दण्डं खड्गं पाशं ध्वजं गदाम् ॥ त्रिशूलं चक्रमम्भोजं पताकास्वर्च्चयेत्क्रमात् ॥ ८ ॥ ॐ हूं फट् नमः । ॐ हूं फट् द्वाःस्थशक्तये हूं फट् नमः इत्यादिमन्त्रैः । कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ॥ शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ॥ ९ ॥ ध्वजेऽष्टदेवताः पूज्याः पूर्वादौ भूतकोटिभिः ॥ ॐ कौं कुमुदाय नम इत्यादिमन्त्रैस्तथा ॥ १० ॥ हेतुकं त्रिपुरघ्नं च शक्त्याख्यं यमजिह्वकम् ॥ कालं करालिनं षष्ठमेकांघ्रिं भीममष्टकम् ॥ ११ ॥ तथैव पूजयेद्दिक्षु क्षेत्रपालाननुक्रमात् ॥ बलिभिः कुसुमैर्धूपैः सन्तुष्टान्परिभावयेत् ॥ ॥ १२ ॥ काक्षीतृणेषु वंशेषु स्थूणास्वन्येष्वनुक्रमात् ॥ पञ्च क्षित्यादितत्त्वानि सद्योजातादिभिर्यजेत् ॥ १३ ॥ सदाशिवपदव्यापि मण्डपं धाम शाङ्करम् ॥ पताकाशक्तिसंयुक्तं तत्त्वदृष्ट्यावलोकयेत् ॥ १४ ॥ दिव्यान्तरिक्षभूमिष्ठविघ्नानुत्सार्य पूर्ववत् ॥ प्रविशेत्पश्चिमद्वारा शेषद्वाराणि दर्शयेत् ॥ १५ ॥ प्रदक्षिणक्रमाद्गत्वा निविष्टो वेदिदक्षिणे ॥ उत्तराभिमुखः कुर्य्याद्भूतशुद्धिं यथा पुरा ॥ १६ ॥ अन्तर्य्यागं विशेषार्घ्यं मन्त्रद्रव्यादिशोधनम् ॥ कुर्वीत स्वात्मनः पूजां पञ्चगव्यादि पूर्ववत् ॥ १७ ॥ साधारं कलशं तस्मिन्विन्यसेत्तदनन्तरम् ॥ विशेषाच्छिवतत्त्वाय तत्त्वत्रयमनुक्रमात् ॥ १८ ॥ ललाटस्कन्धपादान्तं शिवविद्यात्मकं परम् ॥ रुद्रनारायणब्रह्मदैवतं निजसञ्चरैः ॥ १९ ॥ ॐ हं हां मूर्तीस्तदीश्वरांस्तत्र पूर्ववद्विनिवेशयेत् ॥ तद्व्यापकं शिवं साङ्गं शिवहस्तं च मूर्द्धनि ॥ २० ॥ ब्रह्मरन्ध्रप्रविष्टेन तेजसा बाह्यमन्तरम् ॥ तमःपटलमाधूय





प्रद्योतितदिगन्तरम् ॥ २१ ॥ आत्मानं मूर्तिपैः सार्द्धं स्रग्वस्त्रकुसुमादिभिः ॥ भूषयित्वा शिवोऽस्मीति ध्यात्वा बोधासि-
मुद्धरेत् ॥ २२ ॥ चतुष्पादान्तसंस्कारैः संस्कुर्य्यान्मखमण्डपम् ॥ विक्षिप्य विकिरादीनि कुशकूर्चोपसंहरेत् ॥ २३ ॥
आसनीकृत्य वर्द्धन्यां वास्त्वादीन्पूर्ववद्यजेत् ॥ शिवकुम्भास्त्रवर्द्धन्यौ पूजयेच्च स्थिरासने ॥ २४ ॥ स्वदिक्षु कलशारूढाँल्लोक-
पालाननुक्रमात् ॥ वाहायुधादिसंयुक्तान्पूजयेद्विधिना यथा ॥ २५ ॥ ऐरावतगजारूढं स्वर्णवर्णं किरीटिनम् ॥ सहस्रनयनं शक्रं
वज्रपाणिं विभावयेत् ॥ २६ ॥ सप्तार्चिषं च बिभ्राणमक्षमालां कमण्डलुम् ॥ ज्वालामालाकुलं रक्तं शक्तिहस्तमजासनम् ॥ २७ ॥
महिषस्थं दण्डहस्तं यमं कालानलं स्मरेत् ॥ रक्तनेत्रं खरारूढं खड्गहस्तं च नैर्ऋतम् ॥ २८ ॥ वरुणं मकरे श्वेतं नागपाशधरं
स्मरेत् ॥ वायुं च हरिणे नीलं कुबेरं मेषसंस्थितम् ॥ २९ ॥ त्रिशूलिनं वृषे चेशं कूर्मेऽनन्तं तु चक्रिणम् ॥ ब्रह्माणं हंसगं
ध्यायेच्चतुर्वक्त्रं चतुर्भुजम् ॥ ३० ॥ स्तम्भमूलेषु कुम्भेषु वेद्यां धर्मादिकान्यजेत् ॥ दिक्षु कुम्भेष्वनन्तादीन्पूजयन्त्यपि
केचन ॥ ३१ ॥ शिवाज्ञां श्रावयेत्कुम्भं भ्रामयेदात्मपृष्ठगम् ॥ पूर्ववत्स्थापयेदादौ कुम्भं तदनु वर्द्धनीम् ॥ ३२ ॥
शिवं स्थिरासनं कुम्भे शस्त्रार्थं च ध्रुवासनम् ॥ पूजयित्वा यथापूर्वं स्पृशेदुद्भवमुद्रया ॥ ३३ ॥ निजयागं जगन्नाथ रक्ष
भक्तानुकम्पया ॥ एभिः संश्राव्य रक्षार्थं कुम्भे खड्गं निवेशयेत् ॥ ३४ ॥ दीक्षास्थापनयोः कुम्भे स्थण्डिले मण्डलेऽथ वा ॥
मण्डलेऽभ्यर्च्य देवेशं व्रजेद्वै कुण्डसान्निधौ ॥ ३५ ॥ कुण्डनाभिं पुरस्कृत्य निविष्टा मूर्तिधारिणः ॥ गुरोरादेशतः कुर्य्युर्निजकुण्डेषु संस्कृ-
तिम् ॥ ३६ ॥ जपेयुर्जापिनोऽसङ्ख्यं मंत्रमन्ये तु संहिताम् ॥ पठेयुर्ब्राह्मणाः शान्तिं स्वशाखा वेदपारगाः ॥ ३७ ॥ श्रीसूक्तं
पावमानीश्च मैत्रकं च वृषाकपिम् ॥ ऋग्वेदी पूर्वदिग्भागे सर्वमेतत्समुच्चरेत् ॥ ३८ ॥ देवव्रतं तु भारुण्डं ज्येष्ठसाम रथन्तरम् ॥
पुरुषं गीतिमेतानि सामवेदी तु दक्षिणे ॥ ३९ ॥ रुद्रं पुरुषसूक्तं च श्लोकाध्यायं विशेषतः ॥ ब्राह्मणं च यजुर्वेदी पश्चिमायां
समुच्चरेत् ॥ ४० ॥ नीलरुद्रं तथाथर्वी सूक्ष्मासूक्ष्मं तथैव च ॥ उत्तरेऽथर्वशीर्षं च तत्परस्तु समुद्धरेत् ॥ ४१ ॥ आचार्य्यश्चा-
मिमुत्पाद्य प्रतिकुण्डं प्रदापयेत् ॥ वह्नेः पूर्वादिकान्भागान्पूर्वकुण्डादितः क्रमात् ॥ ४२ ॥ धूपदीपचरूणां च ददीताग्निं समुद्द-

रेत् ॥ पूर्ववच्छिमवभ्यर्च्य शिवाग्नौ मन्त्रतर्पणम् ॥ ४३ ॥ देशकालादिसम्पत्तौ दुर्निमित्तप्रशान्तये ॥ होमं कृत्वा तु मन्त्रज्ञः पूर्णां दत्त्वा शुभावहाम् ॥ ४४ ॥ पूर्ववच्चरुकं कृत्वा प्रतिकुण्डं निवेदयेत् ॥ यजमानालंकृतास्तु व्रजेयुः स्नानमण्डपम् ॥ ४५ ॥ भद्रपीठे निधायेशं ताडयित्वावकुण्ठयेत् ॥ स्नापयेत्पूजयित्वा तु मृदा काषायवारिणा ॥ ४६ ॥ गोमूत्रैर्गोमयेनापि वारिणा चान्तरान्तरा ॥ भस्मना गन्धतोयेन फडन्तास्त्रेण वारिणा ॥ ४७ ॥ देशिको मूर्त्तिपैः सार्द्धं कृत्वा कारणशोधनम् ॥ धर्मजत्तेन संछाद्य पीतवर्णेन वाससा ॥ ४८ ॥ सम्पूज्य सितपुष्पैश्च नयेदुत्तरवेदिकाम् ॥ तत्र दत्तासनायां च शय्यायां सन्निवेश्य च ॥ ४९ ॥ कुङ्कुमालिप्तसूत्रेण विभज्य गुरुरालिखेत् ॥ शलाकया सुवर्णस्य अक्षिणी शस्त्रकर्मणा ॥ ५० ॥ अञ्जयेल्लक्ष्मकृत्पश्चाच्छास्त्रदृष्टेन कर्मणा ॥ कृतकर्मा च शस्त्रेण लक्ष्मी शिल्पी समुत्क्षिपेत् ॥ ५१ ॥ त्र्यंशादर्द्धोऽथ पादार्द्धादर्द्धाया अर्द्धतोऽथ वा ॥ सर्वकामप्रसिद्ध्यर्थं शुभं लक्ष्मावतारणम् ॥ ५२ ॥ लिङ्गदीर्घविकारांशे त्रिभक्ते भागवर्णनात् ॥ विस्तारो लक्ष्म देहस्य भवेल्लिङ्गस्य सर्वतः ॥ ५३ ॥ यवस्य नवभक्तस्य भागैरष्टाभिरावृता ॥ हास्तिके लक्ष्मरेखा च गाम्भीर्य्याद्विस्तरादपि ॥ ५४ ॥ एवमष्टांशवृद्ध्या तु लिङ्गे सार्द्धकरादिके ॥ भवेदष्टयवा पृथ्वी गम्भीरात्र च हास्तिके ॥ ५५ ॥ शाम्भवेषु च लिङ्गेषु पादवृद्धेषु सर्वतः ॥ लक्ष्म देहस्य विष्कम्भो भवेद्वै यववर्द्धनात् ॥ ५६ ॥ गंभीरत्वपृथुत्वाभ्यां रेखापि त्र्यंशवृद्धितः ॥ सर्वेषु च भवेत्सूक्ष्मं लिङ्गमस्तकमस्तकम् ॥ ५७ ॥ लक्ष्मक्षेत्रेऽष्टधा भक्ते मूर्ध्नि भागद्वये शुभे ॥ षड्भागपरिवर्त्तेन मुक्त्वा भागद्वयं त्वधः ॥ ५८ ॥ रेखात्रयेण सम्बद्धं कारयेत्पृष्ठदेशगम् ॥ रत्नजे लक्षणोद्धारो यवौ हेमसमुद्भवे ॥ ५९ ॥ स्वरूपं लक्षणं तेषां प्रभा रत्नेषु निर्मला ॥ नयनोन्मीलनं वक्त्रे सान्निध्याय च लक्ष्म तत् ॥ ६० ॥ लक्ष्मणोद्धाररेखां च घृतेन मधुना तथा ॥ मृत्युञ्जयेन सम्पूज्य शिल्पिदोषनिवृत्तये ॥ ६१ ॥ अर्चयेच्च ततो लिङ्गं स्नापयित्वा मृदादिभिः ॥ शिल्पिनं तोषयित्वा तु दद्याद्गां गुरवे ततः ॥ ६२ ॥ लिङ्गं धूपादिभिः प्रार्च्य गायेयुर्भर्तृगाः स्त्रियः ॥ सव्येन चापसव्येन सूत्रेणाथ कुशेन वा ॥ ६३ ॥ स्मृत्वा च रोचनं दत्त्वा कुर्य्यान्निर्मन्थनादिकम् ॥ गुडलवणधान्याकदानेन विसृजेच्च ताः ॥ ६४ ॥ गुरुर्मूर्त्तिधरैः

सार्द्धं हृदा वा प्रणवेन वा ॥ मृत्स्नागोमयगोमूत्रभस्मभिः सलिलान्तरम् ॥६५॥ स्नापयेत्पञ्चगव्येन पञ्चामृतपुरःसरम् ॥ विरूक्षणं कषायैश्च सर्वौषधिजलेन वा ॥ ६६ ॥ शुभ्रपुष्पफलस्वर्णरत्नशृङ्गयवोदकैः ॥ तथा धारासहस्रेण दिव्यौषधिजलेन च ॥ ६७ ॥ तीर्थोदकेन गाङ्गेन चन्दनेन च वारिणा ॥ क्षीरार्णवोदभिः कुम्भैः शिवकुम्भजलेन च ॥ ६८ ॥ विरूक्षणं विलेपं च सुगन्धैश्चन्दनादिभिः ॥ सम्पूज्य ब्रह्मभिः पुष्पैर्वर्मणा रक्तचीवरैः ॥ ६९ ॥ रक्तरूपेण नीराज्य रक्षातिलकपूर्वकम् ॥ घृतौघैर्जलदुग्धैश्च कुशाद्यैरर्घ्यसूचितैः ॥ ॥ ७० ॥ द्रव्यैः स्तुत्यादिभिस्तुष्टमर्चयेत्पुरुषाणुना ॥ समाचम्य हृदा देवं ब्रूयादुत्थीयतां प्रभो ॥७१॥ देवं ब्रह्मरथेनैव क्षिप्रं द्रव्याणि तन्नयेत् ॥ मण्डपे पश्चिमद्वारे शय्यायां विनिवेशयेत् ॥७२॥ शक्त्यादिमूर्तिपर्य्यन्ते विन्यसेदासने शुभे ॥ पश्चिमे पिण्डिकां तस्य न्यसेद्ब्रह्मशिलां तथा ॥७३॥ शस्त्रमन्त्रशतालब्धनिद्राकुम्भं ध्रुवासनम् ॥ प्रकल्प्य शिवकोणे च दत्त्वार्घ्यं हृदयेन तु ॥७४॥उत्थाप्योक्तासने लिङ्गं शिरसा पूर्वमस्तकम् ॥ समारोप्य न्यसेत्तस्मिन्सृष्ट्या धर्मादिवन्दनम् ॥ ७५ ॥ दद्याद्धूपं च सम्पूज्य तथा वासांसि वर्मणा ॥ गृहोपकृतिनैवेद्यं हृदा दद्यात्स्वशक्तितः ।।७६ ॥ घृतक्षौद्रयुतं पात्रमभ्यङ्गाय पदान्तिके ॥ देशिकश्च स्थितस्तत्र षट्त्रिंशत्तत्त्वसञ्चयम् ॥ ७७ ॥ शक्त्यादिभूमिपर्य्यंतं स्वतत्त्वाधिपसंयुतम् ॥ विन्यस्य पुष्पमालाभिस्त्रिखण्डं परिकल्पयेत् ॥ ७८ ॥ मायापदेशशक्त्यन्तं तुर्य्यांशाष्टांशवर्त्तुलम् ॥ तत्रात्मतत्त्वविद्याख्यं शिवं सृष्टिक्रमेण तु ॥ ७९ ॥ एकशः प्रतिभागेषु ब्रह्मविष्णुहराधिपान् ॥ विन्यस्य मूर्तिमूर्तीशान्पूर्वादिक्रमतो यथा ॥ ८० ॥ क्ष्मावह्नियजमानार्कजलवायुनिशाकरान् ॥ आकाशमूर्त्तिरूपांस्तान्न्यसेत्तदधिनायकान् ॥ ८१ ॥ शर्वं पशुपतिं चोग्रं रुद्रं भवमहेश्वरम् ॥ महादेवं च भीमं च मन्त्रास्तद्वाचका इमे ॥ ८२ ॥ लवशषचयसाश्च हकारश्च त्रिमात्रिकाः ॥ प्रणवो हृदयाणुवा मूलमन्त्रोऽथ वा क्वचित् ॥ ८३ ॥ पञ्चकुण्डात्मके यागे मूर्तीः पञ्चाथ वा न्यसेत् ॥ पृथिवीजलतेजांसि वायुमाकाशमेव च ॥ ८४ ॥ क्रमात्तदधिपान्पञ्च ब्रह्माणं धरणीधरम् ॥ रुद्रमीशं सदाख्यं च सृष्टिन्यायेन मन्त्रवित् ॥ ८५ ॥ मुमुक्षोर्वा निवृत्ताद्या अजाताद्यास्तदीश्वराः ॥ त्रितत्त्वं वाथ सर्वत्र न्यसेद्व्याप्त्यात्मकारणम् ॥ ८६ ॥ शुद्धे चात्मनि विद्येशा अशुद्धे लोकनायकाः ॥ द्रष्टव्या मूर्ति-

पाश्वेव भोगिनो मन्त्रनायकाः ॥ ८७ ॥ पञ्चविंशत्तथैवाष्ट पञ्च त्रीणि यथाक्रमम् ॥ एषां तत्त्वं तदीशानामिन्द्रादीनां ततो यथा ॥ ८८ ॥ ओं हां शक्तितत्त्वाय नम इत्यादि ओं हां शक्तितत्त्वाधिपाय नम इत्यादि ओं हां क्ष्मामूर्त्तये नमः ओं हां क्ष्मामूर्त्यधीशाय शिवाय नम इत्यादि ओं हां पृथिवीमूर्त्तये नमः ओं हां मूर्त्यधिपाय ब्रह्मणे नमः इत्यादि ओं हां शिवतत्त्वाधिपाय रुद्राय नम इत्यादि । नाभिकन्दात्समुच्चार्य्य घण्टानादविसर्प्पणम् ॥ ब्रह्मादिकारणत्यागाद्द्वादशान्तसमाश्रितम् ॥ ८९ ॥ मन्त्रं च मनसा भिन्नं प्राप्तानन्दरसोपमम् ॥ द्वादशान्तात्समानीय निष्कलं व्यापकं शिवम् ॥ ९० ॥ अष्टत्रिंशत्कलोपेतं सहस्रकिरणोज्ज्वलम् ॥ सर्वशक्तिमयं साङ्गं ध्यात्वा लिङ्गे निवेशयेत् ॥ ९१ ॥ जीवन्यासो भवेदेवं लिङ्गे सर्वार्थसाधकः ॥ पिण्डिकादिषु तु न्यासः प्रोच्यते साम्प्रतं तथा ॥ ९२ ॥ पिण्डिकां च कृतस्नानां विलिप्तां चन्दनादिभिः ॥ सद्वस्त्रैश्च समाच्छाद्य रन्ध्रे च भगलक्षणे ॥ ९३ ॥ पञ्चरत्नादिसंयुक्तां लिङ्गस्योत्तरतः स्थिताम् ॥ लिङ्गवत्कृतविन्यासां विधिवत्सम्प्रपूजयेत् ॥ ९४ ॥ कृतस्नानादिकां तत्र लिङ्गमूले शिलां न्यसेत् ॥ कृतस्नानादिसंस्कारं शक्त्यन्तं वृषभं तथा ॥ ९५ ॥ प्रणवपूर्वं हूं पूं ह्रीं मध्यादन्यतमेन च ॥ क्रियाशक्तियुतां पिण्डीं शिलामाधाररूपिणीम् ॥ ९६ ॥ भस्मदर्भतिलैः कुर्य्यात्प्राकारत्रितयं ततः ॥ रक्षायै लोकपालांश्च सायुधान्पूजयेद्बहिः ॥ ९७ ॥ ॐ हूं हं क्रियाशक्तये नमः । ॐ हूं हां हः महागौरी रुद्रदयिते स्वाहेति च पिण्डिकायाम् । ॐ हां आधारशक्तये नमः । ॐ हां वृषभाय नमः । धारिका दीप्तिमत्युग्रा ज्योत्स्ना चैता बलोत्कटाः ॥ तथा धात्री विधात्री च न्यसेद्वा पञ्चनायिकाः ॥ ९८ ॥ वामा ज्येष्ठा क्रिया ज्ञाना वेधा तिस्रोऽथ वा न्यसेत् ॥ क्रिया ज्ञाना तथेच्छा च पूर्ववच्छान्तिमूर्तिषु ॥ ९९ ॥ तमी मोहा क्षमी निष्ठा मृत्युर्मायाभवज्वराः ॥ पञ्च चाथ महामोहा घोरा च त्रितयज्वरा ॥१००॥ तिस्रोऽथ वा क्रिया ज्ञाना तथा बाधाविनायिका ॥ आत्मादित्रिषु तत्त्वेषु तीव्रमूर्तिषु विन्यसेत् ॥ १०१ ॥ अत्रापि पिण्डिका ब्रह्मशिलादिषु यथाविधि ॥ गोर्य्यादिसञ्चरैरेव पूर्ववत्सर्वमाचरेत् ॥ १०२ ॥ एवं विधाय विन्यासं गत्वा कुण्डान्तिकं ततः ॥ कुण्डमध्ये महेशानं मेखलासु महेश्वरम् ॥१०३॥ क्रियाशक्तिं तथान्यासु नादमोष्ठे च विन्यसेत् ॥ घटं स्थण्डिलवह्नीशैर्नाडी-

सन्धानकं ततः ॥ १०४ ॥ पद्मतन्तुसमां शक्तिमुद्घातेन समुद्यताम् ॥ विशन्तीं सूर्य्यमार्गेण निःसरन्तीं समुद्गताम् ॥१०५॥ पुनश्च
शून्यमार्गेण विशंतीं स्वस्य चिन्तयेत् ॥ एवं सर्वत्र सन्धेयं मूर्तिपैश्च परस्परम् ॥ १०६ ॥ सम्पूज्य धारिकां शक्तिं कुण्डे
सन्तर्प्य च क्रमात् ॥ तत्त्वतत्त्वेश्वरान्मूर्त्तिर्मूर्तीशांश्च घृतादिभिः ॥ १०७ ॥ सम्पूज्य तर्प्पयित्वा तु सन्निधौ सहिताणुभिः ॥
शतं सहस्रमर्द्धं वा पूर्णया सह होमयेत् ॥ १०८ ॥ तत्त्वतत्त्वेश्वरान्मूर्त्तिर्मूर्तीशांश्च करेणुकान् ॥ तथा सन्तर्प्य सान्निध्ये
जहुयुर्मूर्त्तिपा अपि ॥ १०९ ॥ ततो ब्रह्मभिरङ्गैश्च द्रव्यकालानुरोधतः ॥ सन्तर्प्य शक्तिं कुम्भाम्भः प्रोक्षिते कुशमूलतः ॥ ११० ॥
लिङ्गमूलं च संस्पृश्य जपेयुर्होमसङ्ख्यया ॥ सन्निधानं हृदा कुर्य्युर्वर्म्मणा चावकुण्ठनम् ॥ १११ ॥ एवं संशोध्य ब्रह्मादि
विष्ण्वन्तादि विशुद्धये ॥ विधाय पूर्ववत्सर्वं होमसङ्ख्याजपादिकम् ॥ ११२ ॥ कुशमध्याग्रयोगेन लिङ्गमध्याग्रकं स्पृशेत् ॥
यथा यथा च सन्धानं तादिदानीमिहोच्यते ॥ ११३ ॥ ॐ हां हँ ॐ ॐ ॐ एँ ॐ भूँ भूँ बाह्यमूर्त्तये नमः ॐ हाँ वाँ ॐ ॐ ॐ पाँ
ॐ भूँ भूँ वाँ वह्निमूर्त्तये नमः। एवं च यजमानादिमूर्त्तिभिरभिसन्धेयम् ॥ पञ्चमूर्त्यात्मकेऽप्येवं सन्धानं हृदयादिभिः ॥११४॥
मूलेन स्वीयबीजैर्वा ज्ञेयं तत्त्वत्रयात्मके ॥ शिलापिण्डीवृषेष्वेवं पूर्णाच्छिन्नं सुसंवरैः ॥ ११५ ॥ भागाभागविशुद्ध्यर्थं होमं
कुर्य्याच्छतादिकम् ॥ न्यूनादिदोषमोषाय शिवेनाष्टाधिकं शतम् ॥ ११६ ॥ हुत्वाथ यत्कृतं कर्म्म शिवश्रोत्रे निवेदयेत् ॥
एतत्समन्वितं कर्म त्वच्छक्तौ च मया प्रभो ॥ ११७ ॥ ॐ नमो भगवते रुद्राय रुद्रदेव नमोऽस्तु ते ॥ विधिपूर्णमपूर्णं वा स्वश-
क्त्यापूर्य्य गृह्यताम् ॥ ११८ ॥ ॐ ह्रीं शाङ्करि पूरय स्वाहा इति पिण्डिकायाम् ॥ अथ लिङ्गे न्यसेज्ज्ञानी क्रियाख्यं पीठविग्रहे
॥ ११९ ॥ आधाररूपिणीं शक्तिं न्यसेद्ब्रह्मशिलोपरि ॥ निबध्य सप्तरात्रं वा पञ्चरात्रं त्रिरात्रकम् ॥ १२० ॥ एकरात्रमथो वापि
यद्वा सद्योऽधिवासनम् ॥ विनाधिवासनं यागः कृतोऽपि न फलप्रदः ॥ १२१ ॥ स्वमन्त्रैः प्रत्यहं देयमाहुतीनां शतं शतम् ॥
शिवकुम्भादिपूजां च दिग्बालिं च निवेदयेत् ॥ १२२ ॥ गुर्वादिसहितो वासो रात्रौ नियमपूर्वकम् ॥ अधिवासः सवसतेरघे-
मर्षे घ ईरितः ॥ १२३ ॥ इत्यादिमहापुराणे आग्नेये प्रतिष्ठायामधिवासनविधिर्नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥

अथ शिवप्रतिष्ठाविधानम् ॥ ईश्वर उवाच ॥ प्रातर्नित्यविधिं कृत्वा द्वारपालप्रपूजनम् ॥ प्रविश्य प्राग्विधानेन देहशुद्ध्यादिमाचरेत् ॥ १ ॥ दिक्पतींश्च समभ्यर्च्य शिवकुम्भं च वर्द्धनीम् ॥ अष्टमुष्टिकया लिङ्गं वह्निं सन्तर्प्य च क्रमात् ॥ २ ॥ शिवाज्ञातस्ततो गच्छेत्प्रासादं शस्त्रमुच्चरन् ॥ तद्गतान्प्रक्षिपेद्विघ्नान्हुम्फडन्तशराणुना ॥ ३ ॥ न मध्ये स्थापयेल्लिङ्गं वेधदोषविशङ्कया ॥ तस्मान्मध्यं परित्यज्य यवार्द्धेन यवेन वा ॥ ४ ॥ किञ्चिदीशानमाश्रित्य शिलामध्ये निवेशयेत् ॥ मूलेन तामनन्तारव्यां सर्वाधारस्वरूपिणीम् ॥ ५ ॥ सर्वेगां सृष्टियोगेन विन्यसेदचलां शिलाम् ॥ अथवानेन मन्त्रेण शिवस्यासनरूपिणीम् ॥ ६ ॥ ॐ नमो यापिनि भगवति स्थिरेऽचले ध्रुवे ह्रं लं ह्रीं स्वाहा ॥ त्वया शिवाज्ञया शक्ते स्थातव्यमिह सन्ततम् ॥ ७ ॥ इत्युक्त्वा च समभ्यर्च्य निरुध्याद्रोधमुद्रया ॥ वज्रादीनि च रत्नानि तथोशीरादिकौषधीः ॥ ८ ॥ लोहान्हेमादिकांस्यान्तान्हरितालादिकांस्तथा ॥ धान्यप्रभृतिसस्यांश्च पूर्वमुक्तानुक्रमात् ॥ ९ ॥ प्रभारागत्वदेहत्ववीर्य्यशक्तिमयानिमान् ॥ भावयन्नेकचित्तस्तु लोकपालेशशंवरैः ॥ १० ॥ पूर्वादिषु च गर्तेषु न्यसेदेकैकशः क्रमात् ॥ हेमजं तारजं कूर्म्मं वृषं वा द्वारसम्मुखम् ॥ ११ ॥ सारित्तटमृदा युक्तं पर्वताग्रमृदाथवा ॥ प्रक्षिपेन्मध्यगर्त्तादौ यद्वा मेरुं सुवर्णजम् ॥ १२ ॥ मधूकाक्षतसंयुक्तमञ्जनेन समन्वितम् ॥ पृथिवीं राजतीं यद्वा यद्वा हेमसमुद्भवाम् ॥ १३ ॥ सर्वबीजसुवर्णाभ्यां समायुक्तां विनिक्षिपेत् ॥ स्वर्णजं राजतं वापि सर्वलोहसमुद्भवम् ॥ १४ ॥ सुवर्णं कृशरायुक्तं पद्मनालं ततो न्यसेत् ॥ देवदेवस्य शक्त्यादिमूर्तिपर्य्यन्तमासनम् ॥ १५ ॥ प्रकल्प्य पायसेनाथ लिप्त्वा गुग्गुलुनाथ वा ॥ श्वभ्रमाच्छाद्य वस्त्रेण तनुत्रेणास्त्ररक्षितम् ॥ १६ ॥ दिक्पतिभ्यो बलिं दत्त्वा समाचान्तोऽथ देशिकः ॥ शिवेन वा शिलाश्वभ्रसंगदोषनिवृत्तये ॥ १७ ॥ शस्त्रेण वा शतं सम्यग्जुहुयात्पूर्णया सह ॥ एकैकाहुतिदानेन सन्तर्प्य वास्तुदेवताः ॥ १८ ॥ समुत्थाप्य हृदा देवमासनं मंगलादिभिः ॥ गुरुर्देवाग्रतो गच्छेन्मूर्त्तिपैश्च दिशि स्थितैः ॥ १९ ॥ चतुर्भिः सह कर्त्ता तु देवयज्ञस्य पृष्ठतः ॥ प्रासादादि परिभ्रम्य भद्रारव्यद्वारसम्मुखम् ॥ २० ॥ लिंगं संस्थाप्य दत्त्वार्घ्यं प्रासादं सन्निवेशयेत् ॥ द्वारेण द्वारबन्धेन द्वारदेशेन तच्छिला ॥ २१ ॥ द्वारबन्धे शिखाशून्ये तदर्द्धेनाथ तद्गते ॥ वर्जयन्द्वारसंस्पर्शं





द्वारेणैव महेश्वरम् ॥ २२ ॥ देवगृहसमारम्भे कोणेनापि प्रवेशयेत् ॥ अयमेव विधिर्ज्ञेयो व्यक्तलिंगेऽपि सर्वतः ॥ २२ ॥ गृहे प्रवेशनं द्वारे लोकैरपि समीरितम् ॥ अपद्वारप्रवेशेन विदुर्गोत्रक्षयं गृहम् ॥ २४ ॥ अथ पीठे च संस्थाप्य लिंगं द्वारस्य सम्मुखम् ॥ तूर्य्यमङ्गलनिर्घोषैर्दूर्व्वाक्षतसमान्वितम् ॥ २५ ॥ समुत्तिष्ठ हृदेत्युक्त्वा महापाशुपतं पठेत् ॥ अपनीय घटं श्वभ्रा-देशिको मूर्त्तिपैः सह ॥ २६ ॥ मन्त्रं सन्धारयित्वा तु विलिप्तं कुङ्कुमादिभिः ॥ शक्तिशक्तिमतोरैक्यं ध्यात्वा चैव तु रक्षितम् ॥ ॥ २७ ॥ लयान्तं मूलमुच्चार्य्य स्पृष्ट्वा श्वभ्रे निवेशयेत् ॥ अंशेन ब्रह्मभागस्य यद्वा अंशद्वयेन च ॥ २८ ॥ अर्द्धेन वाष्टमांशेन सर्वस्याथ प्रवेशनम् ॥ पिधाय सीसकं नाभिर्दीर्घाभिः सुसमाहितः ॥ २९ ॥ श्वभ्रं वालुकयापूर्य्य बूयात्स्थिरीभवेति च ॥ ततो लिङ्गे स्थिरीभूते ध्यात्वा सकलरूपिणम् ॥ ३० ॥ मूलमुच्चार्य्य शक्त्यन्तं स्पृष्ट्वा च निष्कलं न्यसेत् ॥ स्थाप्यमानं यदा लिंगं यां यां दिशमथाश्रयेत् ॥ ३१ ॥ तत्तद्दिगीशमन्त्रेण पूर्णान्तं दक्षिणान्वितम् ॥ सव्ये स्थाने च वक्रे च चलिते स्फुटितेऽपि वा ॥ ३२ ॥ जुहुयान्मलमन्त्रेण बहुरूपेण वा शतम् ॥ किञ्चान्येष्वपि दोषेषु शिवशान्ति समाश्रयेत् ॥ ३३ ॥ युक्तं न्यासादिभिर्लिङ्गं कुर्वन्नेवं न दोषभाक् ॥ पीठबन्धमतः कृत्वा लक्षणस्यांशलक्षणम् ॥ ३४ ॥ गौरीमन्त्रं लयं नीत्वा सृष्ट्या पिण्डीं च विन्यसेत् ॥ सम्पूर्य्य पार्श्वसंधिं च वालुकावज्रलेपनम् ॥ ३५ ॥ ततो मूर्त्तिधरैः सार्द्धं गुरुः शान्तिघटोर्घ्वतः ॥ संस्नाप्य कलशैरन्यैस्तद्वत्पञ्चामृतादिभिः ॥ ३६ ॥ विलिप्य चन्दनाद्यैश्च सम्पूज्य जगदीश्वरम् ॥ उमामहेश-मन्त्राभ्यां तौ स्पृशेल्लिङ्गमुद्रया ॥ ३७ ॥ ततस्त्रितत्त्वविन्यासं षडर्चादिपुरःसरम् ॥ कृत्वा मूर्तिं तदीशानामङ्गानां ब्रह्मणामथ ॥ ३८ ॥ ज्ञानी लिङ्गे क्रियापीठे विन्यस्य स्नापयेत्ततः ॥ गन्धैर्व्विलिप्य संधूप्य व्यापित्वेन शिवे न्यसेत् ॥ ३९ ॥ स्रग्धूपदीपनैवेद्यैर्हृदयेन फलानि च ॥ विनिवेद्य यथाशक्ति समाचम्य महेश्वरम् ॥ ४० ॥ दत्त्वार्घ्यं च जपं कृत्वा निवेद्य वरदे करे ॥ चन्द्रार्कतारकं यावन्मन्त्रेण शैवमूर्तिपैः ॥ ४१ ॥ स्वेच्छयैव त्वया नाथ स्थातव्यमिह मन्दिरे ॥ प्रणम्यैवं बहिर्गत्वा हृदा वा प्रणवेन वा ॥ ४२ ॥ संस्थाप्य वृषभं पश्चात्पूर्ववद्बलिमाचरेत् ॥ न्यूनादिदोषमोषाय ततो मृत्युजिता

शतम् ॥ ४३ ॥ शिवेन सशिवो हुत्वा शान्त्यर्थं पायसेन च ॥ ज्ञानाज्ञानकृतं यच्च तत्पूरय महाविभो ॥ ४४ ॥ हिरण्यपशु-
भूम्यादिगीतवाद्यादिहेतवे ॥ अम्बिकेशाय तद्वत्तया शक्त्या सर्वं निवेदयेत् ॥ ४५ ॥ दानं महोत्सवं पश्चात्कुर्य्यादिन-
चतुष्टयम् ॥ त्रिसन्ध्यं त्रिदिनं मन्त्री होमयेन्मूर्त्तिपैः सह ॥ ४६ ॥ चतुर्थेऽहनि पूर्णां च चरुकं बहुरूपिणा ॥ निवेद्य सर्वकुण्डेषु
सम्पाताहुतिशोधितम् ॥ ४७ ॥ दिनचतुष्टयं यावत्तन्निर्म्माल्यं तदूर्ध्वतः ॥ निर्म्माल्यापनयं कृत्वा स्नापयित्वा तु पूजयेत् ॥
॥ ४८ ॥ पूजा सामान्यलिङ्गेषु कार्य्या साधारणाणुभिः ॥ विहाय लिङ्गचैतन्यं कुर्य्यात्स्थाणुविसर्जनम् ॥ ४९ ॥
असाधारणलिङ्गेषु क्षमस्वेति विसर्ज्जनम् ॥ आवाहनमभिव्यक्तिर्विसर्गः शक्तिरूपता ॥ ५० ॥ प्रतिष्ठान्ते क्वचित्प्रोक्तं स्थिरा-
द्याहुतिसप्तकम् ॥ स्थिरस्तथाप्रमेयश्चानादिबोधस्तथैव च ॥ ५१ ॥ नित्योऽथ सर्वगश्चैवाविनाशी दृष्ट एव च ॥ एते गुणा
महेशस्य सन्निधानाय कीर्तिताः ॥ ५२ ॥ ॐ नमः शिवाय स्थिरो भवेत्याहुतीनां क्रमः ॥ एवमेतच्च सम्पाद्य विधाय शिव-
कुम्भवत् ॥ ५३ ॥ कुम्भद्वयं च तन्मध्यादेककुम्भाम्भसा भवम् ॥ संस्नाप्य तद्द्वितीयं तु कर्तृस्नानाय धारयेत् ॥ ५४ ॥
दत्त्वा बलिं समाचम्य बहिर्गच्छेच्छिवाज्ञया ॥ जगतीबाह्यतश्चण्डमैशान्यां दिशि मन्दिरे ॥ ५५ ॥ धामगर्भप्रमाणे च सुपीठे
कल्पितासने ॥ पूर्ववन्न्यासहोमादि विधाय ध्यानपूर्वकम् ॥ ५६ ॥ संस्थाप्य विधिवत्तत्र ब्रह्माङ्गैः पूजयेत्ततः ॥ अङ्गानि
पूर्वमुक्तानि ब्रह्माणि त्वर्चनां यथा ॥ ५७ ॥ एव सद्योजाताय ॐ ह्रूं फट् नमः ॥ ॐ विं वामदेवाय हूं फट् नमः । ॐ हुम्
अघोराय हूं फट् नमः । ओं वें तत्पुरुषाय ओंवोमीशानाय च हूं फट् नमः ॥ जपं निवेद्य सन्तर्प्य विज्ञाप्य नतिपूर्वकम् ॥
देवः सन्निहितो यावत्तावत्त्वं सन्निधौ भव ॥ ५८ ॥ न्यूनाधिकं च यत्किञ्चित्कृतमज्ञानतो मया ॥ त्वत्प्रसादेन चण्डेश तत्सर्वं
परिपूरय ॥ ५९ ॥ बाणलिङ्गे बाणरोहे सिद्धलिङ्गे स्वयंभुवि ॥ प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत् ॥ ६० ॥
अद्वैतभावनायुक्ते स्थण्डिलेशविधावपि ॥ अभ्यर्च्य चण्डं सप्तुतं यजमानं हि भार्य्यया ॥ ६१ ॥ पूर्वस्थापितकुम्भेन स्नापये-
त्स्नापकः स्वयम् ॥ स्नापकं यजमानोऽपि सम्पूज्य च महेशवत् ॥ ६२ ॥ वित्तशाठ्यं विना दद्याद्भूहिरण्यादिदक्षिणाम् ॥





मूर्तिपान्विधिवत्पश्चाज्जापकान्ब्राह्मणांस्तथा ॥ ६३ ॥ देवज्ञं शिल्पिनं प्राच्र्य दीनानाथादि भोजयेत् ॥ यदत्र सम्मुखीभावे
खेदितो भगवन् मया ॥ ६४ ॥ क्षमस्व नाथ तत्सर्वं कारुण्याम्बुनिधे मम ॥ इति विज्ञप्तिमुक्ताय यजमानाय सद्गुरुः ॥ ६५ ॥
प्रतिष्ठापुण्यसद्भावं स्फुरत्तारकसप्रभम् ॥ कुशपुष्पाक्षतोपेतं स्वकरेण समर्पयेत् ॥ ६६ ॥ ततः पाशुपतोपेतं प्रणम्य परमेश्वरम् ॥
ततोऽपि बलिभिर्भूतान्सन्निधाय निबोधयेत् ॥ ६७ ॥ स्थातव्यं भवता तावद्यावत्सान्निहितो हरः ॥ गुरुर्वस्त्रादिसंयुक्तं गृह्णी-
याद्यागमण्डपम् ॥ ६८ ॥ सर्वोपकरणं शिल्पी तथा स्नापनमण्डपम् ॥ अन्ये देवादयः स्थाप्या मन्त्रैरागमसंभवैः ॥ ६९ ॥
आदिवर्णस्य भेदाद्वा सुतत्त्वव्याप्तिभाविताः ॥ साध्यप्रमुखदेवाश्च सरिदोषधयस्तथा ॥ ७० ॥ क्षेत्रपाः किन्नराद्याश्च पृथिवी-
तत्त्वमाश्रिताः ॥ स्नानं सरस्वतीलक्ष्मीनदीनामम्भसि क्वचित् ॥ ७१ ॥ भुवनाधिपतीनां च स्थानं यत्र व्यवस्थितिः ॥
अण्डवृद्धिप्रधानान्तं त्रितत्त्वं ब्रह्मणः पदम् ॥ ७२ ॥ तन्मात्रादिप्रधानान्तं पदमेतत्त्रिकं हरेः ॥ नाथ्येशगणमातॄणां यक्षेशशर-
जन्मनाम् ॥ ७३ ॥ अण्डजाः शुद्धविद्यान्तं पदं गणपतेस्तथा ॥ मायांशदेशशक्त्यन्तं शिवाशिवोत्तरोचिषाम् ॥ ७४ ॥ पदमी-
श्वरपर्य्यन्तं व्यक्तार्चासु च कीर्तितम् ॥ कूर्माद्यं कीर्त्तितं यत्र यत्र रत्नादिपञ्चकम् ॥ ७५ ॥ प्रक्षिपेत्पीठगर्त्ते च पञ्च ब्रह्मशिलां
विना ॥ षड्भिर्विभाजिते गर्त्ते त्यक्त्वा भागं च पृष्ठतः ॥ ७६ ॥ स्थापनं पञ्चमांशे च यदि वा वसुभाजिते ॥ स्थापनं सप्तमे
भागे प्रतिमासु सुखावहम् ॥ ७७ ॥ धारणाभिर्विशुद्धिः स्यात्स्थापने लेपचित्रयोः ॥ स्नानादि मानसं तत्र शिलारत्नादिवेश-
नम् ॥ ७८ ॥ नेत्रोद्घाटनमन्त्रेण्मासनादिप्रकल्पनम् ॥ पूजा निरम्बुभिः पुष्पैर्यथा चित्रं न दुष्यति ॥ ७९ ॥ विधिस्तु
चललिङ्गेषु सम्प्रत्येव निगद्यते ॥ पञ्चभिर्वा त्रिभिर्वापि पृथक्कुर्य्याद्विभाजिते ॥ ८० ॥ भागत्रयेण भागांशो भवेद्भागद्वयेन वा ॥
स्वर्पीठेष्वपि तद्वत्स्याल्लिङ्गेषु तत्त्वभेदतः ॥ ८१ ॥ सृष्टिमन्त्रेण संस्कारो विधिवत्स्फाटिकादिषु ॥ किञ्च ब्रह्मशिलारत्नप्रभृतेश्चा-
निवेदनम् ॥ ८२ ॥ योजनं पिण्डिकायाश्च मनसा परिकल्पयेत् ॥ स्वयम्भुबाणलिङ्गादौ संस्कृतौ नियमो न हि ॥ ८३ ॥
स्नापनं संहितामन्त्रैर्न्यासं होमं च कारयेत् ॥ नदीसमुद्ररोहाणां स्थापनं पूर्ववन्मतम् ॥ ८४ ॥ ऐष्टिकं मृन्मयं लिंगं पिष्टकादि च

तत्क्षतम् ॥ कृत्वा संपूजयेच्छुद्धं दीक्षणादिविधानतः ॥८५॥ समादाय ततो मन्त्रानात्मानं सन्निधाय च ॥ तज्जले प्रक्षिपेल्लिंगं वत्सरात्कामदं भवेत् ॥८६॥ विष्ण्वादिस्थापनं चैव पृथङ्मन्त्रैः समाचरेत् ॥ इत्यादिमहापुराणे आग्नेये शिवप्रतिष्ठाविधिर्नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥ अथ गौरीप्रतिष्ठाविधानम् ॥ ईश्वर उवाच ॥ वक्ष्ये गौरीप्रतिष्ठां च पूजया सहितां शृणु ॥ मण्डपाद्यं पुरो यच्च संस्थाप्य चाधिरोपयेत् ॥ १ ॥ शय्यायां तांश्च विन्यस्य मन्त्रान्मूर्त्यादिकान्गुह ॥ आत्मविद्याशिवान्तं च कुर्यादीशानिवेशनम् ॥ २ ॥ शक्तिं परां ततो न्यस्य हुत्वा जप्त्वा च पूर्ववत् ॥ सन्धाय च तथा पिण्डीं क्रियाशक्तिस्वरूपिणीम् ॥ ३ ॥ सदेशव्यापिकां ध्यात्वा न्यस्ते रत्नादिकान्तथा ॥ एवं संस्थाप्य तां पश्चाद्देवीं तस्यां नियोजयेत् ॥४॥ परशक्तिस्वरूपां तां स्वाणुना शक्तियोगतः ॥ ततो न्यसेत्क्रियाशक्तिं पीठे ज्ञानं च विग्रहे ॥ ५ ॥ ततोऽपि व्यापिनीं शक्तिं समावाह्य नियोजयेत् ॥ अम्बिकां शिवनाम्नीं च समालभ्य प्रपूजयेत् ॥६॥ ओं आधारशक्तये नमः। ओं कूर्माय नमः। ओं स्कन्दाय च तथा नमः। ओं ह्रीं नारायणाय नमः। ओं ऐश्वर्याय नमः। ओं अं अधश्छदनाय नमः। ओं पद्मासनाय नमः। ओं ऊर्ध्वच्छदनाय नमः। ॐ पद्मासनाय नमः। अथ सम्पूज्याः केशवास्तथा। ओं ह्रीं कर्णिकायै नमः। ओं क्षं पुष्कराक्षेभ्य इहार्चयेत्। ॐ हां पुष्ट्यै ह्रीं च ज्ञानायै हूं क्रियायै ततो नमः। ओं नालाय नमः। रुं धर्माय नमः। रुं ज्ञानाय वै नमः। ओं वैराग्याय नमः। ओं वै अधर्माय नमः। ओं रुं अज्ञानाय वै नमः। ओं अवैराग्याय वै नमः। ओं अनैश्वर्याय नमः। हुं वाचे हुं च रागिण्यै क्षैं ज्वालिन्यै ततो नमः। ओं ह्रौं शमायै च नमः। हुं ज्येष्ठायै ततो नमः। ओं ह्रौं रौं क्रौं नवशक्त्यै गौं च गौर्यासनाय च गौं गौरीमूर्तये नमः। गौर्या मूलमथोच्यते। ओं ह्रीं साः महागौरि रुद्रदयिते स्वाहा गौर्यै नमः। गां हूं ह्रीं शिवो गूं स्वाञ्छिखायै कवचाय च। गौं नेत्राय च गोम् अस्त्राय ओं गौं विज्ञानशक्तये ॥ ७ ॥ ओं गूं क्रियाशक्तये नमः पूर्वादौ शकादिकान् ॥ ओं सुं सुभगायै नमः ह्रीं बीजललिता ततः ॥८॥ ओं ह्रीं कामिन्यै च नमः ओं हूं स्यात् कामशालिनी ॥ मन्त्रैर्गौरीं प्रतिष्ठाप्य प्रार्च्य जप्त्वाथ सर्वभाक् ॥ ९ ॥ इत्यादिमहापुराणे आग्नेये गौरीप्रतिष्ठाविधानं नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥ अथ सूर्यप्रतिष्ठाविधानम् ॥ ईश्वर उवाच ॥ वक्ष्ये सूर्यप्रतिष्ठां





च पूर्ववन्मण्डपादिकम् ॥ स्नानादिकं च सम्पाद्य पूर्वोक्तविधिना ततः ॥ १ ॥ विद्यामासनशय्यायां साङ्गं विन्यस्य भास्करम् ॥ त्रितत्त्वं विन्यसेत्तत्र सस्वरं खादिपञ्चकम् ॥ २ ॥ शुद्ध्यादि पूर्ववत्कृत्वा पिण्डीं संशोध्य पूर्ववत् ॥ सदेशपदपर्य्यन्तं विन्यस्य तत्तु पञ्चकम् ॥ ३ ॥ शक्त्या च सर्वतोमुख्या संस्थाप्य विधिवत्ततः ॥ खाणुना विधिवत्सूर्य्यं शक्त्यन्तं स्थापयेद्गुरुः ॥ ४ ॥ स्वाम्यन्तमथ वादित्यं पादान्तं नाम धारयेत् ॥ सूर्य्यमंत्रास्तु पूर्वोक्ता द्रष्टव्याः स्थापनेऽपि च ॥ ५ ॥ इत्यादिमहापुराणे आग्नेये सूर्यप्रतिष्ठाविधानं नाम नवनवतितमोऽध्यायः ॥ ९९ ॥ अथ द्वारप्रतिष्ठाविधानम् ॥ ईश्वर उवाच ॥ द्वाराश्रितप्रतिष्ठाया वक्ष्यामि विधिमप्यथ ॥ द्वाराङ्गाणि कषायाद्यैः संस्कृत्य शयने न्यसेत् ॥ १ ॥ मूलमध्याग्रभागेषु त्रयमात्मादिसेश्वरम् ॥ विन्यस्य सन्निवेश्याथ हुत्वा जस्वात्र रूपतः ॥ २ ॥ द्वारादथो यजेद्वास्तुं तत्रैवानन्तमन्त्रतः ॥ रत्नादिपञ्चकं न्यस्य शान्तिहोमं विधाय च ॥ ३ ॥ यवसिद्धार्थकाकान्ता ऋद्धिवृद्धिमहातिलाः ॥ गोमृत्सर्षपरागेन्द्रमोहनीलक्ष्मणाऽमृताः ॥ ४ ॥ रोचानारुग्वचादूर्वा प्रासादाधश्च पोटलीम् ॥ प्रकृत्योदुम्बरे बद्धा रक्षार्थं प्रणवेन तु ॥ ५ ॥ द्वारमुत्तरतः किञ्चिदाश्रितं सन्निवेशयेत् ॥ आत्मतत्त्वमधो न्यस्य विद्यातत्त्वं च शाखयोः ॥ ६ ॥ शिवमाकाशदेशे च व्यापकं सर्वमण्डले ॥ ततो महेशनाथं च विन्यसेन्मूलमंत्रतः ॥ ७ ॥ द्वाराश्रितांश्च तत्पादीन्कृतयुक्तैः स्वनामभिः ॥ जुहुयाच्छतमर्द्धं वा द्विगुणं शक्तितोऽथ वा ॥ ८ ॥ न्यूनादिदोषमोषार्थं हेतितो जुहुयाच्छतम् ॥ दिग्बालिं पूर्ववद्दत्त्वा प्रदद्याद्दक्षिणादिकम् ॥ ९ ॥ इत्यादिमहापुराणे आग्नेये द्वारप्रतिष्ठाविधानं नाम शततमोऽध्यायः ॥ १०० ॥ अथ प्रासादप्रतिष्ठाविधिः ॥ ईश्वर उवाच ॥ प्रासादस्थापनं वक्ष्ये तच्चैतन्यं स्वयोगतः ॥ शुकनासासमाप्तौ तु पूर्ववेद्याश्च मध्यतः ॥ १ ॥ आधारशक्तितः पद्मे विन्यस्ते प्रणवेन च ॥ स्वर्णाद्येकतमोद्भूतं पञ्चगव्येन संयुतम् ॥ २ ॥ मधुक्षीरयुतं कुम्भं न्यस्तरत्नादिपञ्चकम् ॥ स्रग्वस्त्रं गन्धलिप्तं च गन्धवत्पुष्पभूषितम् ॥ ३ ॥ चूतादिपल्लवानांच कृती कृत्यं च विन्यसेत् ॥ पूरकेण समादाय सकलीकृतविग्रहः ॥ ४ ॥ सर्वात्मभिन्नमात्मानं स्वाणुना स्वान्तमारुतः ॥ आज्ञया बोधयेच्छम्भो रेचकेन ततो गुरुः ॥ ५ ॥ द्वादशान्तात्समादाय स्फुरद्वह्निकणोपमम् ॥

निक्षपेत्कुम्भगर्भे च न्यस्ततन्त्रातिवाहिकम् ॥ ६ ॥ विग्रहं तद्गुणानां च बोधक च कलादिकम् ॥ क्षान्तं वागीश्वरं तनु त्रातं तत्र निवेशयेत् ॥ ७ ॥ दश नाडीर्दश प्राणानिन्द्रियाणि त्रयोदश ॥ तदधिपांश्च संयोज्य प्रणवाद्यैः स्वनामभिः ॥ ८ ॥ स्वकार्यकारणत्वेन मायाकाशनियामिकाः ॥ विद्येशान्प्रेरकाञ्छम्भुं व्यापिनं च सुसम्वरैः ॥ ९ ॥ अङ्गानि च विनिक्षिप्य निरुन्ध्याद्रोधमुद्रया ॥ सुवर्णाद्युद्भवं यद्वा पुरुषं पुरुषानुगम् ॥ १० ॥ पञ्चगव्यकषायाद्यैः पूर्ववत्संस्कृतं ततः ॥ शय्यायां कुम्भमारोप्य ध्यात्वा रुद्रमुमापतिम् ॥ ११ ॥ तस्मिंश्च शिवमन्त्रेण व्यापकत्वेन विन्यसेत् ॥ सन्निधानाय होमं च प्रोक्षणं स्पर्शनं जपम् ॥ १२ ॥ सान्निध्यबोधनं सर्वं भागत्रयविभागतः ॥ विधायैवं प्रकृत्यन्ते कुम्भे तं विनिवेशयेत् ॥ १३ ॥ इत्यादिमहापुराणे आग्नेये प्रासादप्रतिष्ठाविधानं नामैकाधिकशततमोऽध्यायः ॥ १०१ ॥ अथ ध्वजारोपणादिविधिः ॥ ईश्वर उवाच ॥ चूलके ध्वजदण्डे च ध्वजे देवकुले तथा ॥ प्रतिष्ठा च यथोद्दिष्टा तथा स्कन्द वदामि ते ॥ १ ॥ तडागार्द्धप्रवेशाद्वा यद्वा सर्वार्द्धवेशनात् ॥ ऐष्टके दारुजः शूलः शैलजे धाम्नि शैलजः ॥ २ ॥ वैष्णवादौ च चक्राख्यः कुम्भः स्यान्मूर्तिमानतः ॥ स च त्रिशूलयुक्तस्तु अग्रचूलाभिधो मतः ॥३॥ ईशशूलः समाख्यातो मूर्ध्नि लिङ्गसमन्वितः ॥ बीजपूरकयुक्तो वा शिवशास्त्रेषु तद्विधः ॥ ४ ॥ चित्रो ध्वजश्च जङ्घातो यथा जङ्घार्द्धतो भवेत् ॥ भवेद्वा दण्डमानस्तु यदि वा तद्यदृच्छया ॥ ५ ॥ महाध्वजः समाख्यातो यस्तु पीठस्य वेष्टकः ॥ शक्रैर्ग्रहे रसैर्वापि हस्तैर्दण्डस्तु सम्मितः ॥ ६ ॥ उत्तमादिक्रमेणैव विज्ञेयः सूरिभिस्ततः ॥ वंशजः शालजादिर्वा स दण्डः सर्वकामदः ॥७॥ अयमारोप्यमाणस्तु भङ्गमायाति वै यदि ॥ राज्ञोऽनिष्टं विजानीयाद्यजमानस्य वा तथा ॥८॥ मन्त्रेण बहुरूपेण पूर्ववच्छान्तिमाचरेत् ॥ द्वारपालादिपूजां च मन्त्राणां तर्पणं तथा ॥ ९ ॥ विधाय चूलकं दण्डं स्नापयेदस्त्रमन्त्रतः ॥ अनेनैव तु मन्त्रेण ध्वजं संप्रोक्ष्य देशिकः ॥ १० ॥ मृत्कषायादिभिः स्नानं प्रासादं कारयेत्ततः ॥ विलिप्य रसमाच्छाद्य शय्यायां न्यस्य पूर्ववत् ॥ ११ ॥ चूलके लिङ्गवन्न्यासो न च स्नानं न च क्रिया ॥ विशेषार्था चतुर्थी च न च कुण्डस्य कल्पना ॥ १२ ॥ दण्डे तथार्थतत्त्वं च विद्यातत्त्वं द्वितीयकम् ॥ सद्योजातादिवक्त्राणि शिवतत्त्वं पुनर्ध्वजे ॥ १३ ॥ निष्कलं च शिवं तत्र न्यस्याङ्गानि





प्रपूजयेत् ॥ चूलके च ततो मन्त्रो सान्निध्ये सहिताणुभिः ॥ १४ ॥ होमयेत्प्रतिभागं च ध्वजे तैस्तु फडन्तकैः ॥ अन्यथापि कृतं यच्च
ध्वजसंस्करणं क्वचित् ॥ १५ ॥ अस्त्रयागाविधावेवं तत्सर्वमुपदर्शितम् ॥ प्रासादे कारिते स्थाने स्रग्वस्त्रादिविभूषिते ॥ १६ ॥
जङ्घा वेदी तदूर्ध्वे तु त्रितत्त्वादि निवेश्य च ॥ होमादिकं विधायाथ शिवं संपूज्य पूर्ववत् ॥ १७ ॥ सर्वतत्त्वमयं ध्यात्वा शिवं
वै व्यापकं न्यसेत् ॥ अनन्तं कालरुद्रं च विभाव्य च पदाम्बुजे ॥ १८ ॥ कूष्माण्डहाटकौ पीठं पातालनरकैः सह ॥ भुवनैर्लो-
कपालैश्च शतरुद्रादिभिर्वृतम् ॥ १९ ॥ ब्रह्माण्डकमिदं ध्यात्वा जङ्घायां च विभावयेत् ॥ वारितेजोऽनिलव्योमपञ्चाष्टकसम-
न्वितम् ॥ २० ॥ सर्वावरणसञ्ज्ञं च बुद्धियोन्यष्टकान्वितम् ॥ योगाष्टकसमायुक्तं नासावधि गुणत्रयम् ॥ २१ ॥ पटस्थं पुरुषं
सिंहं वामं च परिभावयेत् ॥ मञ्जरीवेदिकायां च विद्यादिकचतुष्टयम् ॥ २२ ॥ कण्ठे मायां सरुद्रां च विद्याश्चामलसारके ॥
कलशे चेश्वरं बिन्दुं विद्येश्वरसमन्वितम् ॥ २३ ॥ जटाजूटं च तं विद्याच्छूलं चन्द्रार्द्धरूपकम् ॥ शक्तित्रयं च तत्रैव दण्डे नादं
विभाव्य च ॥२४॥ ध्वजे च कुण्डलीं शक्तिमिति धाम्नि विभावयेत् ॥ जगत्या वाथ सन्धाय लिङ्गं पिण्डिकयाथ वा ॥ २५ ॥
समुत्थाप्य सुमन्त्रैश्च विन्यस्ते शक्तिपङ्कजे ॥ न्यस्तरत्नादिके तत्र स्वाधारे विनिवेशयेत् ॥ २६ ॥ यजमानो ध्वजे लग्ने बन्धु-
मित्रादिभिः सह ॥ धाम प्रदक्षिणीकृत्य लभते फलमीहितम् ॥ २७ ॥ गुरुः पाशुपतं ध्यायन्स्थिरमन्त्राधिपैर्युतम् ॥ अधिपाञ्छ-
स्त्रयुक्तांश्च रक्षणाय निबोधयेत् ॥ २८ ॥ न्यूनादिदोषशान्त्यर्थं हुत्वा दत्त्वा च दिग्बलिम् ॥ गुरवे दक्षिणां दद्याद्यजमानो दिवं
व्रजेत् ॥ २९ ॥ प्रतिमालिङ्गवेदीनां यावन्तः परमाणवः ॥ तावद्युगसहस्राणि कर्त्तुर्भोगभुजः फलम् ॥ ३० ॥ इत्यादिमहापुराणे
आग्नेये ध्वजारोपणादिविधिर्नाम द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ अथ जीर्णोद्धारविधिः ॥ ईश्वर उवाच ॥ जीर्णादीनां
च लिङ्गानामुद्धारं विधिना वदे ॥ लक्ष्मोज्झितं च भग्नं च स्थूलं वज्रहतं तथा ॥ १ ॥ संपुटं स्फुटितं व्यङ्गं लिङ्गमित्येवमा-
दिकम् ॥ इत्यादिदुष्टलिङ्गानां योज्या पिण्डी तथा वृषः ॥ २ ॥ चालितं चलितं लिङ्गमत्यर्थं विषमास्थितम् ॥ दिङ्मूढं पातितं
*लिङ्गं मध्यस्थं पातितं तथा ॥ ३ ॥ एवंविधं च संस्थाप्य निर्व्रणं च भवेद्यदि ॥ नद्यादिकप्रवाहेण तदपाक्रियते यदि ॥ ४ ॥*

ततोऽन्यत्रापि संस्थाप्य विधिदृष्टेन कर्म्मणा ॥ सुस्थितं दुःस्थितं वापि शिवलिङ्गं न चालयेत् ॥ ५ ॥ शतेन स्थापनं कुर्य्यात्सहस्रेण तु चालनम् ॥ पूजादिभिश्च संयुक्तं जीर्णाद्यमपि सुस्थितम् ॥ ६ ॥ याम्ये मण्डपमीशे वा प्रत्यग्द्वारैकतोरणम् ॥ विधाय द्वारपूजादि स्थण्डिले मन्त्रपूजनम् ॥ ७ ॥ मन्त्रान्सन्तर्प्य सम्पूज्य वास्तुदेवांस्तु पूर्ववत् ॥ दिग्बलिं च बहिर्दत्त्वा समाचम्य स्वयं गुरुः ॥ ८ ॥ ब्राह्मणान्भोजयित्वा तु शम्भुं विज्ञापयेत्ततः ॥ दुष्टलिङ्गमिदं शम्भो शान्तिरुद्धरणस्य चेत् ॥ ९ ॥ रुचिस्तवादिविधिना अधितिष्ठस्व मां शिव ॥ एवं विज्ञाप्य देवेशं शान्तिहोमं समाचरेत् ॥ १० ॥ मध्वाज्यक्षीरदूर्वाभिर्मूलेनाष्टाधिकं शतम् ॥ ततो लिङ्गं च संस्थाप्य पूजयेत्स्थण्डिले तथा ॥ ११ ॥ ओं व्यापकेश्वरायेति नात्यन्तं शिववाहिना ॥ ओं व्यापकं हृदयेश्वराय नमः ॥ ओं व्यापकेश्वराय शिरसे नमः इत्याद्यङ्गमन्त्राः ॥ ततस्तत्राश्रितं तत्त्वं श्रावयेदस्त्रमन्त्रतः ॥ १२ ॥ सत्त्वः कोऽपीह यः कोऽपि लिङ्गमाश्रित्य तिष्ठति ॥ लिङ्गं त्यक्त्वा शिवाज्ञाभिर्यत्रेष्टं तत्र गच्छतु ॥ १३ ॥ विद्याविद्येश्वरैर्युक्तः स भवोऽत्र भविष्यति ॥ सहस्रं प्रतिभागे च ततः पाशुपताणुना ॥ १४ ॥ हुत्वा शान्त्यम्बुना प्रोक्ष्य स्पृष्ट्वा कुशैर्जपेत्ततः ॥ दत्त्वार्घ्यं च विलोमेन तत्त्वतत्त्वाधिपांस्तथा ॥ १५ ॥ अष्टमूर्त्तीश्वराल्लिङ्गपिण्डिकासंस्थितान्गुरुः ॥ विसृज्य स्वर्णपाशेन वृषस्कन्धस्थया तथा ॥ १६ ॥ रज्वा बद्धा तया नीत्वा शिवमन्त्रं गृणञ्छनैः ॥ तज्जले निक्षिपेन्मन्त्री पुष्ट्यर्थं जुहुयाच्छतम् ॥ १७ ॥ तृप्तये दिक्पतीनां च वास्तुशुद्ध्यै शतं शतम् ॥ रक्षां विधाय तद्धाम्नि महापाशुपतास्त्रतः ॥ १८ ॥ लिङ्गमन्यत्ततस्तत्र विधिवत्स्थापयेद्गुरुः ॥ असुरैर्मुनिभिर्गोत्रैस्तन्त्रविद्भिः प्रतिष्ठितम् ॥ १९ ॥ जीर्णं वाप्यथ वा भग्नं विधिनापि न चालयेत् ॥ एष एव विधिः कार्यो जीर्णधामसमुद्धृतौ ॥ २० ॥ खड्गे मन्त्रगणं न्यस्य कारयेन्मन्दिरान्तरम् ॥ सङ्कोचे मरणं प्रोक्तं विस्तारे तु धनक्षयः ॥ २१ ॥ तद्द्रव्यं श्रेष्ठद्रव्यं वा तत्कार्यं तत्प्रमाणकम् ॥ २२ ॥ इत्यादिमहापुराणे आग्नेये जीर्णोद्धारविधिर्नाम त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ अथ प्रासादलक्षणम् ॥ ईश्वर उवाच ॥ वक्ष्ये प्रासादसामान्यलक्षणं ते शिखिध्वज ॥ चतुर्भागे कृते क्षेत्रे भित्तेर्भागेन विस्तरात् ॥ १ ॥ अद्रिभागेन गर्भः स्यात्पिण्डिका पादविस्तरात् ॥ पञ्चभागीकृते क्षेत्रे ह्यन्तर्भागे तु पिण्डिका ॥ २ ॥





सुषिरं भागविस्तीर्णं भित्तयो भागविस्तरात् ॥ भागौ द्वौ मध्यमे गर्भे ज्येष्ठभागद्वयेन तु ॥ ३ ॥ त्रिभिस्तु कलशीगर्भः शेषो भित्तिरिति क्वचित् ॥ षोढा भक्तेऽथ वा क्षेत्रे भित्तिर्भागैकविस्तरात् ॥ ४ ॥ गर्भो भागेन विस्तीर्णो भागद्वयेन पिण्डिका ॥ विस्ताराद्द्विगुणो वापि सपादाद्द्विगुणोऽपि वा ॥ ५ ॥ अर्द्धार्द्धद्विगुणो वापि त्रिगुणः क्वचिदुच्छ्रयः ॥ जगती विस्तरार्द्धेन त्रिभागेन क्वचिद्भवेत् ॥ ६ ॥ नेमिः पादोनविस्तीर्णा प्रासादस्य समन्ततः ॥ परिधिरुयंशको मध्ये रथकांस्तत्र कारयेत् ॥ ७ ॥ चामुण्डं भैरवं तेषु नाट्येशं च निवेशयेत् ॥ प्रासादार्द्धेन देवानामष्टौ वा चतुरोऽपि वा ॥ ८ ॥ प्रदक्षिणावह्नाः कुर्यात्प्रासादादिषु वा न वा ॥ आदित्याः पूर्वतः स्थाप्याः स्कन्दोऽग्निर्वायुगोचरे ॥ ९ ॥ एवं यमादयो न्यस्याः स्वस्यां स्वस्यां दिशि स्थिताः ॥ चतुर्द्धा शिखरं कृत्वा शुकनासा द्विभागिका ॥ १० ॥ तृतीये वेदिका त्वग्नेः सकण्ठो मलसारकः ॥ वैराजः पुष्पकश्चान्यः कैलासो मणिकस्तथा ॥ ११ ॥ त्रिविष्टपं च पञ्चैव मेरुमूर्द्धनि संस्थिताः ॥ चतुरस्रस्तु तत्राद्यो द्वितीयोऽपि तदायतः ॥ १२ ॥ वृत्तो वृत्तायतश्चान्यो ह्यष्टास्रश्चापि पञ्चमः ॥ एकैको नवधा भेदैश्चत्वारिंशच्च पञ्च च ॥ १३ ॥ प्रासादः प्रथमो मेरुर्द्वितीयो मन्दरस्तथा ॥ विमानं च तथा भद्रः सर्वतोभद्र एव च ॥ १४ ॥ चरुको नन्दिको नन्दिवर्द्धमानस्तथापरः ॥ श्रीवत्सश्चेति वैराजान्ववाये च समुत्थिताः ॥ १५ ॥ वलभी गृहराजश्च शालागृहं च मन्दिरम् ॥ विशालश्च समो ब्रह्ममन्दिरं भुवनं तथा ॥ १६ ॥ प्रभवः शिबिका वेश्म नवैते पुष्पकोद्भवाः ॥ वलयो दुन्दुभिः पद्मो महापद्मक एव च ॥ १७ ॥ वर्द्धनी वान्य उष्णीषः शङ्खश्च कलशस्तथा ॥ खवृक्षश्च तथाप्येते वृत्ताः कैलाससम्भवाः ॥ १८ ॥ गजोऽथ वृषभो हंसो गरुत्मानृक्षनायकः ॥ भूषणो भूधरश्चान्ये श्रीजयः पृथिवीधरः ॥ १९ ॥ वृत्तायतात्समुद्भूता नवैते मणिकाह्वयात् ॥ वज्रं चक्रं तथा चान्यत्स्वस्तिकं वज्रस्वस्तिकम् ॥ २० ॥ चित्रं स्वस्तिकखड्गं च गदा श्रीकण्ठ एव च ॥ विजयो नामतश्चैते त्रिविष्टपसमुद्भवाः ॥ २१ ॥ नगराणामिमाः सञ्ज्ञा लाटादीनामिमास्तथा ॥ ग्रीवार्द्धेनोन्नतं चूलं पृथुलं च विभागतः ॥ २२ ॥ दशधा वेदिकां कृत्वा पञ्चभिः स्कन्धविस्तरः ॥ त्रिभिः कण्ठं तु कर्तव्यं चतुर्भिस्तु प्रचण्डकम् ॥ २३ ॥ दिक्षु

द्वाराणि कार्याणि न विदिक्षु कदाचन ॥ पिण्डिका कोणविस्तीर्णा मध्यमान्ता ह्युदाहृता ॥ २४ ॥ क्वचित्पञ्चमभागेन महतां गर्भपादतः ॥ उच्छ्राया द्विगुणास्तेषामन्यथा वा निगद्यते ॥ २५ ॥ षष्ट्याधिकांत्समारभ्य अङ्गुलानां शतादिह ॥ उत्तमान्यपि चत्वारि द्वाराणि दशहानितः ॥ २६ ॥ त्रीण्येव मध्यमानि स्युस्त्रीण्येव कनीयांस्यधः ॥ उच्छ्रायार्द्धेन विस्तारो ह्युच्छ्रायोऽभ्यधिकस्त्रिधा ॥ २७ ॥ चतुर्भिरष्टभिर्वापि दशभिरङ्गुलैस्ततः ॥ उच्छ्रायात्पादविस्तीर्णा विशाखास्तदुदुम्बरे ॥ २८ ॥ विस्तरार्द्धेन बाहुल्यं सर्वेषामेव कीर्त्तितम् ॥ द्विपञ्चसप्तनवभिः शाखाभिर्द्वारमिष्टदम् ॥ २९ ॥ अधःशाखाचतुर्थांशे प्रतीहारौ निवेशयेत् ॥ मिथुनैः पादवर्णाभिः शाखाशेषं विभूषयेत् ॥ ३० ॥ स्तम्भविद्धे भृत्यता स्याद्वृक्षविद्धे त्वभूतिता ॥ कूपविद्धे भयं द्वारे क्षेत्रविद्धे धनक्षयः ॥३१॥ प्रासादगृहशालादिमार्गविद्धेषु बन्धनम् ॥ सभाविद्धेन दारिद्र्यं वर्णविद्धे निराकृतिः ॥ ३२ ॥ उलूखलेन दारिद्र्यं शिलाविद्धेन शत्रुताम् ॥ छायाविद्धेन दारिद्र्यं वेधदोषो न जायते ॥ ३३ ॥ छेदादुत्पाटनाद्वापि तथा प्राकारलक्षणात् ॥ सीमाया द्विगुणत्यागाद्वेधदोषो न जायते ॥ ३४॥ इत्यादिमहापुराणे आग्नेये सामान्यप्रासादलक्षणं नाम चतुराधिकशततमोऽध्यायः ॥ १०४ ॥ अथ नगरादिवास्तुनिरूपणम् ॥ ईश्वर उवाच ॥ नगरग्रामदुर्गाद्या गृहप्रासादवृद्धये ॥ एकाशीतिपदैर्वास्तुं पूजयेत्सिद्धये ध्रुवम ॥ १ ॥ प्रागास्या दशधा नाड्यस्तासां नामानि च ब्रुवे ॥ शान्ता यशोवती कान्ता विशाला प्राणवाहिनी ॥ २ ॥ सती वसुमती नन्दा सुभद्राथ मनोरमा ॥ उत्तरा द्वादशान्याश्च एकाशीत्यंघ्रिकारिका ॥ ३ ॥ हरिणी सुप्रभा लक्ष्मीर्विभूतिर्विमला प्रिया ॥ जया ज्वाला विशोका च स्मृतास्तत्र च पादतः ॥ ४ ॥ ईशाद्यष्टाष्टकं दिक्षु यजेदीशं धनञ्जयम् ॥ शक्रमर्कं तथा सत्यं भृशं व्योम च पूर्वतः ॥ ५ ॥ हव्यवाहं च पूषाणं वितथं भौममेव च ॥ कृतान्तमथ गन्धर्वं भृङ्गं मृगं च दक्षिणे ॥ ६ ॥ पितरं द्वारपालं च सुग्रीवं पुष्पदन्तकम् ॥ वरुणं दैत्यशेषौ च यक्ष्माणं पश्चिमे सदा ॥ ७ ॥ रोगाहिमुख्यौ भल्लाटः सौभाग्यमदितिर्दितिः ॥ नवान्तः पदगो ब्रह्मा पूज्योऽर्द्धे च षडंघ्रिगाः ॥ ८ ॥ ब्रह्मेशान्तरकोष्ठस्थमायाख्यां तु पदद्वये ॥ तदधश्चापवत्साख्यं केन्द्रान्तरेषु षट्पदे ॥ ९ ॥ मरीचिकाग्निमध्ये तु सविता द्विपदस्थितः ॥ सावित्री तदधो द्व्यंशे





विवस्वान्षट्पदे त्वधः ॥ १० ॥ पितृब्रह्मान्तरे विष्णुमिन्दुमिन्द्रं त्वधो जयम् ॥ वरुणब्रह्मणोर्म्मध्ये मित्राख्यं षट्पदे यजेत् ॥ ११ ॥
रोगब्रह्मान्तरे नित्यं द्विपश्च रुद्रदासकम् ॥ तदधो द्व्यंघ्रिगं यक्ष्म षट् सौम्येषु धराधरम् ॥ १२ ॥ चरकीं स्कन्दविकटं विदारीं
पूतनां क्रमात् ॥ जम्भं पापं पिलिपिच्छं यजेदीशादिबाह्यतः ॥ १३ ॥ एकाशीतिपदं वेश्म मण्डपश्च शतांघ्रिकः ॥ पूर्ववदे-
वताः पूज्या ब्रह्मा तु षोडशांशके ॥ १४ ॥ मरीचिश्च विवस्वांश्च मित्रं पृथ्वीधरस्तथा ॥ दशकोष्ठस्थिता दिक्षु त्वन्ये वेशादिको-
णगाः ॥ १५ ॥ दैत्यमाता तथेशाग्नी मृगाख्यौ पितरौ तथा ॥ पापयक्ष्मानिलौ देवाः सर्वे सार्द्धांशके स्थिताः ॥ १६ ॥ यत्पा-
द्यौकः प्रवक्ष्यामि संक्षेपेण क्रमाद्गुह ॥ स दिग्विंशतिकैर्दैर्घ्यादष्टाविंशति विस्तरात् ॥ १७ ॥ शिवाश्रयः शिवाख्यश्च रुद्रहीनः
सदोभयोः ॥ रुद्रद्विगुणितानाहाः पृथुष्णोभिर्विना त्रिभिः ॥ १८ ॥ स्याद्गुहद्विगुणं दैर्घ्यात्तिथिभिश्चैव विस्तरात् ॥ सावित्रः
शालयः कुडचास्तथा त्रिंशांशतः पृथक् ॥ १९ ॥ कुडचपृथूपजङ्घोच्चात्कुड्यं तु त्रिगुणोच्छ्रयम् ॥ कुडचसूत्रसमा पृथ्वी वीथिभे-
दादनेकधा ॥ २० ॥ भद्रे तुल्यं च वीथीभिर्द्वारवीथी विनाग्रतः ॥ श्रीजयं पृष्ठतो हीनं भद्रोऽयं पार्श्वयोर्विना ॥ २१ ॥ गर्भपृ-
थुसमा वीथी तदर्द्धार्द्धेन वा क्वचित् ॥ वीथ्यर्द्धेनोपवीथ्याद्यमेकद्वित्रिपुरान्वितम् ॥ २२ ॥ सामान्यान्यगृहं वक्ष्ये सर्वेषां सर्व-
कामदम् ॥ एकद्वित्रिचतुःशालमष्टशालं यथाक्रमात् ॥ २३ ॥ एकं याम्ये च सौम्यास्यं द्वे चेत्पश्चात्पुरोमुखम् ॥ चतुःशालं तु
साम्मुख्यात्तयोरिन्द्रेन्द्रमुक्तयोः ॥ २४ ॥ शिवास्यमम्बुपास्यैष इन्द्रास्ये यमसूर्यकम् ॥ प्राक्सौम्यस्थे च दण्डाख्यं प्राग्याम्ये
वातसंज्ञकम् ॥ २५ ॥ आप्येन्द्रौ गृहबल्याख्यं त्रिशूलं तद्विनार्द्धिकृत् ॥ पूर्वशालाविहीनं स्यात्सुक्षेत्रं वृद्धिदायकम् ॥ २६ ॥
याम्ये हीने भवेच्छूली त्रिशालं वृद्धिकृत् परम् ॥ यक्षघ्नं जलहीनौकः सुतघ्नं बहुशत्रुकृत ॥ २७ ॥ इन्द्रादिक्रमतो वच्मि ध्वजा-
द्यष्टौ गृहाण्यहम् ॥ प्रक्षालानुस्रगावासमग्नौ तस्य महानसम् ॥ २८ ॥ याम्ये रसक्रिया शय्या धनुःशस्त्राणि रक्षसि ॥ धनुभुक्तय-
म्बुपेशाख्ये सम्यगन्धौ च मारुते ॥ २९ ॥ सौम्ये धनपशू कुर्य्यादीशे दीक्षावरालयम् ॥ स्वामिहस्तमितं वेश्म विस्तारायाम-
पिण्डिकम् ॥ ३० ॥ त्रिगुणं हस्तसंयुक्तं कृत्वाष्टांशेर्हृतं तथा ॥ तच्छेषोऽयं स्थितस्तेन वायसान्तं ध्वजादिकम् ॥ ३१ ॥ त्रय:

पक्षाग्निवेदेषु रसर्षिवसुतो भवेत् ॥ सर्वनाशकरं वेश्म मध्ये चान्ते च संस्थितम् ॥ ३२ ॥ तस्माच्च नवमे भागे शुभकृन्निलयो मतः ॥ तन्मध्ये मण्डपः शस्तः समो वा द्विगुणायतः ॥ ३३ ॥ प्रत्यगाप्ये चेन्दुयमे हट्ट एव गृहावली ॥ एकैकभवनाख्यानि दिक्ष्वष्टाष्टकसंख्यया ॥ ३४ ॥ ईशाद्यादितिकान्तानि फलान्येषां यथाक्रमम् ॥ भयं नारी चलत्वं च जयो वृद्धिः प्रतापकः ॥ ३५ ॥ धर्मः कलिश्च नैःस्व्यं च प्राग्द्वारेष्वष्टसु ध्रुवम् ॥ दाहोऽसुखं सुहृन्नाशो धननाशो मृतिर्धनम् ॥ ३६ ॥ शिल्पित्वं तनयः स्याच्च याम्यद्वारफलाष्टकम् ॥ आयुः प्राव्राज्यसस्यानि धनशान्त्यर्थसङ्क्षयाः ॥ ३७ ॥ शोषं भोगं चापत्यं च जलद्वारफलानि च ॥ रोगो मदार्त्तिमुख्यत्वं चार्थायुः कृशता मतिः ॥ मानं च द्वारतः पूर्वं उत्तरस्यां दिशि क्रमात् ॥ ३८॥ इत्यादिमहापुराणे आग्नेये गृहादिवास्तुर्नाम पञ्चाऽधिकशततमोऽध्यायः ॥ १०५ ॥ अथ नगरादिकवास्तुकथनम् ॥ ईश्वर उवाच ॥ नगरादिकवास्तुं च वक्ष्ये राज्यादिवृद्धये ॥ योजनं योजनार्द्धं वा तदर्थं स्थानमाश्रयेत् ॥ १ ॥ अभ्यर्च्य वास्तुनगरं प्राकाराद्यं तु कारयेत् ॥ ईशादित्रिंशत्पदके पूर्वद्वारं च सूर्यके ॥ २ ॥ गन्धर्वाभ्यां दक्षिणे स्याद्वारुण्ये पश्चिमे तथा ॥ सौम्यद्वारं सौम्यपदे कार्या हट्टास्तु विस्तराः ॥ ३ ॥ येनेभादि सुखं गच्छेत्कुर्याद्द्वारं तु षट्करम् ॥ छिन्नकर्णं विभिन्नं च चन्द्रार्द्धाभं पुरं न हि ॥ ॥ ४ ॥ वज्रसूचीमुखं नेष्टं सकृद्द्वित्रिसमागमम् ॥ चापाभं वज्रनागाभं पुरारम्भे हि शान्तिकृत् ॥ ५ ॥ प्रार्च्य विष्णुहरार्कादीन्नत्वा दद्याद्बलिं बली ॥ आग्नेये स्वर्णकर्मारान्पुरस्य विनिवेशयेत् ॥ ६ ॥ दक्षिणे नृत्यवृत्तीनां वेश्यास्त्रीणां गृहाणि च ॥ नटानां चक्रिकादीनां कैवर्त्तादेश्च नैर्ऋते ॥ ७ ॥ रथानामायुधानां च कृपाणानां च वारुणे ॥ शौण्डिकाः कर्माधिकृता वायव्ये परिकर्मिणः ॥ ८ ॥ ब्राह्मणा यतयः सिद्धाः पुण्यवन्तस्तथोत्तरे ॥ फलाद्यादिविक्रयिण ईशाने च वणिग्जनाः ॥ ९ ॥ पूर्वतश्च बलाध्यक्षा आग्नेये विविधं बलम् ॥ स्त्रीणामादेशिनो दक्षे काण्डारान्नैर्ऋते न्यसेत् ॥ १० ॥ पश्चिमे च महामात्यान्कोशपालांश्च कारुकान् ॥ उत्तरे दण्डनाथांश्च नायकद्विजसङ्कुलान् ॥ ११ ॥ पूर्वतः क्षत्रियान्दक्षे वैश्याञ्छूद्रां च पश्चिमे ॥ दिक्षु वैद्यान्वाजिनश्च बलानि च चतुर्दिशम् ॥ १२ ॥ पूर्वेण चरलिङ्ग्याद्यांश्छ्मशानादीनि दक्षिणे ॥ पश्चिमे गोधनाद्यं च कृषिकर्तॄंस्तथोत्तरे ॥ १३॥

न्यसेन्म्लेच्छांश्च कोणेषु ग्रामादिषु तथा स्थितम् ॥ श्रियं वैश्रवणं द्वारि पूर्व्वे तौ पश्यतां श्रियम् ॥ १४ ॥ देवादीनां
पश्चिमतः पूर्वास्यानि गृहाणि हि ॥ पूर्वतः पश्चिमास्यानि दक्षिणे चोत्तराननान् ॥ १५ ॥ नाकेशविष्ण्वादिधामानि रक्षार्थं
नगरस्य च ॥ निर्दैवतं तु नगरग्रामदुर्गगृहादिकम् ॥ १६ ॥ भुज्यते तत्पिशाचाद्यै रोगाद्यैः परिभूयते ॥ नगरादि सदैवं हि
जयदं भुक्तिमुक्तिदम् ॥ १७ ॥ पूर्वायां श्रीगृहं प्रोक्तमाग्नेय्यां वै महानसम् ॥ शयनं दक्षिणस्यां तु नैर्ऋत्यामायुधाश्रयम् ॥ १८ ॥
भोजनं पश्चिमायां तु वायव्यां धान्यसंग्रहः ॥ उत्तरे द्रव्यसंस्थानमैशान्यां देवतागृहम् ॥ १९ ॥ चतुःशालं त्रिशालं वा द्विशालं
चैकशालकम् ॥ चतुःशालगृहाणां तु शालालिन्दकभेदतः ॥ २० ॥ शतद्वयं तु जायन्ते पञ्चाशत्पंच तेष्वपि ॥ त्रिशालानि तु
चत्वारि द्विशालानि तु पञ्चधा ॥ २१ ॥ एकशालानि चत्वारि एकालिन्दानि वच्मि च ॥ अष्टाविंशत्यलिन्दानि गृहाणि
नगराणि च ॥ २२ ॥ चतुर्भिः सप्तभिश्चैव पञ्चपञ्चाशदेव तु । षडलिन्दानि विंशैव अष्टाभिर्विंश एव हि ॥ अष्टालिन्दं
भवेदेवं नगरादौ गृहाणि हि ॥ २३ ॥ इत्यादिमहापुराणे आग्नेये नगरादिवास्तुर्नाम षडधिकशततमोऽध्यायः ॥ १०६ ॥
अथ स्वायम्भुवसर्गकथनम् ॥ अग्निरुवाच ॥ वक्ष्ये भुवनकोशं च पृथ्वीद्वीपादिलक्षणम् ॥ अग्नीध्रश्चाग्निबाहुश्च वपुष्मान्द्यु-
तिमांस्तथा ॥ १ ॥ मेधा मेधातिथिर्भव्यः सवनः पुत्र एव च ॥ ज्योतिष्मान्दशमस्तेषां सत्यनामा सुतोऽभवत् ॥ २ ॥
प्रियव्रतसुताः ख्याताः सप्तद्वीपान्ददौ पिता ॥ जम्बूद्वीपमथाग्नीध्रे प्लक्षं मेधातिथेर्ददौ ॥ ३ ॥ वपुष्मते शाल्मलं च ज्योतिष्मते
कुशाह्वयम् ॥ क्रौञ्चद्वीपं द्युतिमते शाकं भव्याय दत्तवान् ॥ ४ ॥ पुष्करं सवनायादादग्नीध्रेऽदात्सुते शतम् ॥ जम्बूद्वीपं पिता
लक्षं नाभेर्दत्तं हिमाह्वयम् ॥ ५ ॥ हेमकूटं किम्पुरुषे हरिवर्षाय नैषधम् ॥ इलावृते मेरुमध्यं रम्ये नीलाचलाश्रितम् ॥ ६ ॥ ॥ ८१ ॥
हिरण्वते श्वेतवर्षं कुरूंस्तु कुरवे ददौ ॥ भद्राश्वाय च भद्राश्वं केतुमालाय पश्चिमम् ॥ ७ ॥ मेरोः प्रियव्रतः पुत्रानभिषिच्य ययौ
वनम् ॥ शालग्रामे तपस्तप्त्वा ययौ विष्णोर्लयं नृपः ॥ ८ ॥ यानि किम्पुरुषाद्यानि ह्यष्टवर्षाणि सत्तम ॥ तेषां स्वाभाविकी
सिद्धिः सुखप्राया ह्ययत्नतः ॥ ९ ॥ जरामृत्युभयं नास्ति धर्माधर्मौ युगादिकम् ॥ नाधमं मध्यमं तुल्या हिमाद्देशात्तु

नाभितः ॥१०॥ ऋषभो मेरुदेव्यां च ऋषभाद्भरतोऽभवत् ॥ ऋषभो दत्तश्रीः पुत्रे शालग्रामे हरिं गतः ॥११॥ भरताद्भारतं वर्षं भरतात्सुमतिस्त्वभूत् ॥ भरतो दत्तलक्ष्मीकः शालग्रामे हरिं गतः ॥ १२ ॥ स योगी योगप्रस्तावे वक्ष्ये तच्चरितं पुनः ॥ सुमतेस्तेजसस्तस्मादिन्द्रद्युम्नो व्यजायत ॥ १३ ॥ परमेष्ठी ततस्तस्मात्प्रतीहारस्तदन्वयः ॥ प्रतीहारात्प्रतिहर्त्ता प्रतिहर्त्तुर्भुवस्ततः ॥ ॥ १४ ॥ उद्गीतोऽथ च प्रस्तारो विभुः प्रस्तारतः सुतः ॥ पृथुश्चैव ततो नक्तो नक्तस्यापि गयः सुतः ॥ १५ ॥ नरो गयस्य तनयस्तत्पुत्रोऽभूद्विराट् ततः ॥ तस्य पुत्रो महावीर्यो धीमांस्तस्मादजायत ॥१६॥ महान्तस्तत्सुतश्चाभून्मनस्यस्तस्य चात्मजः ॥ त्वष्टा त्वष्टुश्च विरजा रजस्तस्याप्यभूत्सुतः ॥ १७ ॥ सत्याजिद्रजसस्तस्य जज्ञे पुत्रशतं मुने ॥ विश्वज्योतिःप्रधानास्ते भारतं तैर्विवर्द्धितम् ॥ कृतत्रेतादिसर्गेण सर्गः स्वायम्भुवः स्मृतः ॥ १८ ॥ इत्यादिमहापुराणे आग्नेये स्वायम्भुवसर्गो नाम सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ अथ भुवनकोशनिरूपणम् ॥ अग्निरुवाच ॥ जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो महान् ॥ कुशः क्रौञ्चस्तथा शाकः पुष्करश्चेति सप्तमः ॥ १ ॥ एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः ॥ लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ॥ २ ॥ जम्बूद्वीपो द्वीपमध्ये तन्मध्ये मेरुरुच्छ्रितः ॥ चतुरशीतिसाहस्रो भूयिष्ठः षोडशाद्रिराट् ॥ ३ ॥ द्वात्रिंशन्मूर्ध्नि विस्तारात्षोडशाधः सहस्रवान् ॥ भूयस्तस्यास्य शैलोऽसौ कर्णिकाकारसंस्थितः ॥ ४ ॥ हिमवान्हेमकूटश्च निषधश्चास्य दक्षिणे ॥ नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥ ५ ॥ लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथापरे ॥ सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ॥ ६ ॥ भारतं प्रथमं वर्षं ततः किम्पुरुषं स्मृतम् ॥ हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥ ७ ॥ रम्यकं चोत्तरे वर्षं तथैवान्यद्धिरण्यकम् ॥ उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥ ८ ॥ नवसाहस्रमेकैकमेतेषां मुनिसत्तम ॥ इलावृतं च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः ॥ ९ ॥ मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम् ॥ इलावृतं महाभाग चत्वारश्चात्र पर्वताः ॥ १० ॥ विष्कम्भा रचिता मेरोर्योजनायुतविस्तृताः ॥ पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ॥ ११ ॥ विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः ॥ कदंबस्तेषु जंबूश्च पिप्पलो वट एव च ॥ १२ ॥ एकादश शतायामाः पादपा

गिरिकेतवः ॥ जंबूद्वीपेति संज्ञा स्यात्फलं जम्ब्वा गजोपमम् ॥ १३ ॥ जंबूनदीरसेनास्यात्त्विदं जांबूनदं परम् ॥ सुपार्श्वः पूर्वतो
मेरोः केतुमालस्तु पश्चिमे ॥ १४ ॥ वनं चैत्ररथं पूर्व्वे दक्षिणे गन्धमादनः ॥ वैभ्राजं पश्चिमे सौम्ये नन्दनं च सरांस्यथ ॥
॥ १५ ॥ अरुणोदं महाभद्रं शीतोदं मानसं तथा ॥ सिताम्भश्चक्रमुञ्जाद्याः पूर्वतः केशराचलाः ॥ १६ ॥ दक्षिणेऽद्रेस्त्रिकूटाद्याः
शिशिवासमुखा जले ॥ शंखकूटादयः सौम्ये मेरौ च ब्रह्मणः पुरी ॥ १७ ॥ चतुर्दशसहस्राणि योजनानां च दिक्षु च ॥
इन्द्रादिलोकपालानां समन्ताद्ब्रह्मणः पुरः ॥ १८ ॥ विष्णुपादात्प्लावयित्वा चन्द्रं स्वर्गात्पतन्त्यपि ॥ पूर्वेण शीता भद्राश्वाच्छै-
लाच्छैलाद्गतार्णवम् ॥ १९ ॥ तथैवालकनन्दापि दक्षिणेनैव भारतम् ॥ प्रयाति सागरं कृत्वा सप्तभेदाथ पश्चिमम् ॥ २० ॥
अब्धिं च चक्षुःसौम्याब्धिं भद्रोत्तरकुरूनपि ॥ आनीलनिषधायामौ माल्यवद्गन्धमादनौ ॥ २१ ॥ तयोर्मध्यगतो मेरुः कर्णि-
काकारसंस्थितः ॥ भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ॥ २२ ॥ पत्राणि लोकपद्मस्य मर्य्यादाशैलबाह्यतः ॥ जठरो
देवकूटश्च मर्य्यादापर्वतावुभौ ॥ २३ ॥ तौ दक्षिणोत्तरायामावानीलनिषधायतौ ॥ गन्धमादनकैलासौ पूर्वपश्चायतावुभौ ॥
॥ २४ ॥ अशीतियोजनायामावर्णवान्तर्व्यवस्थितौ ॥ निषधः पारियात्रश्च मर्य्यादापर्वतावुभौ ॥ २५ ॥ मेरोः पश्चिमदिग्भागे
यथा पूर्वे तथा स्थितौ ॥ त्रिशृंगो रुधिरश्चैव उत्तरौ वर्षपर्वतौ ॥ २६ ॥ पूर्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ ॥ जाठराद्याश्च
मर्य्यादाशैला मेरोश्चतुर्दिशम् ॥ २७ ॥ केसरादिषु या द्रोण्यस्तासु सन्ति पुराणि हि ॥ लक्ष्मीविष्ण्वग्निसूर्य्यादिदेवानां मुनि-
सत्तम ॥ २८ ॥ भौमानां स्वर्गधर्माणां न पापास्तत्र यान्ति च ॥ भद्राश्वेऽस्ति हयग्रीवो वराहः केतुमालके ॥ २९ ॥ भारते
कूर्मरूपी च मत्स्यरूपः कुरुष्वपि ॥ विश्वरूपेण सर्वत्र पूज्यते भगवान्हरिः ॥ ३० ॥ किम्पुरुषाद्यष्टसु क्षुद्भीशोकादिकं न च ॥
चतुर्विंशतिसाहस्रं प्रजा जीवन्त्यनामयाः ॥ ३१ ॥ कृतादिकल्पना नास्ति भौमान्यंभासि नांबुदाः ॥ सर्वेष्वेतेषु वर्षेषु सप्त सप्त
कुलाचलाः ॥ ३२ ॥ नद्यश्च शतशस्तेभ्यस्तीर्थभूताः प्रजज्ञिरे ॥ भारते यानि तीर्थानि तानि तीर्थानि वच्मि ते ॥ ३३ ॥
इत्यादिमहापुराणे आग्नेये भुवनकोशनिरूपणं नामाष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ अथ तीर्थयात्रामाहात्म्यम् ॥ अग्निरुवाच ॥

माहात्म्यं सर्वतीर्थानां वक्ष्ये यद्भुक्तिमुक्तिदम् ॥ यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥ १ ॥ विद्या तपश्च कीर्तिश्च स तीर्थ-
फलमश्नुते ॥ प्रतिग्रहादुपावृत्तो लघ्वाहारो जितेन्द्रियः ॥ २ ॥ निष्पापस्तीर्थयात्री तु सर्वयज्ञफलं लभेत् ॥ अनुपोष्य त्रिरात्राणि
तीर्थान्यनभिगम्य च ॥ ३ ॥ अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ॥ तीर्थाभिगमने तत्स्याद्यद्यज्ञेनाप्यते फलम् ॥ ४ ॥
पुष्करं परमं तीर्थं सान्निध्यं हि त्रिसन्ध्यकम् ॥ दशकोटिसहस्राणि तीर्थानां विप्र पुष्करे ॥ ५ ॥ ब्रह्मा सह सुरैरास्ते मुनयः
सर्वमिच्छवः ॥ देवाः प्राप्ताः सिद्धिमत्र स्नाताः पितृसुरार्चकाः ॥ ६ ॥ अश्वमेधफलं प्राप्य ब्रह्मलोकं प्रयान्ति ते ॥ कार्त्तिक्यामन्नदानाच्च
निर्म्मलो ब्रह्मलोकभाक् ॥ ७ ॥ पुष्करे दुष्करं गन्तुं पुष्करे दुष्करं तपः ॥ दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करम् ॥ ८ ॥
तत्र वासाज्जपाच्छ्राद्धात्कुलानां शतमुद्धरेत् । जम्बूमार्गश्च तत्रैव तीर्थं तण्डुलिकाश्रमम् ॥ ९ ॥ कण्वाश्रमं कोटितीर्थं नर्म्मदा
चार्बुदं परम् ॥ तीर्थं चर्म्मण्वती सिन्धुः सोमनाथः प्रभासकम् ॥ १० ॥ सरस्वत्यब्धिसङ्गश्च सागरं तीर्थमुत्तमम् ॥ पिण्डारकं
द्वारका च गोमती सर्वसिद्धिदा ॥ ११ ॥ भूमितीर्थं ब्रह्मतुङ्गं तीर्थं पञ्चनदं परम् ॥ भीमतीर्थं गिरीन्द्रं च देविका पापनाशिनी ॥ १२ ॥
तीर्थं विनशनं पुण्यं नागोद्भेदमघार्दनम् ॥ तीर्थं कुमारकोटिश्च सर्वदानीरितानि च ॥ १३ ॥ कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ॥
य एवं सततं ब्रूयात्सोऽमलः प्राप्नुयाद्दिवम् ॥ १४ ॥ तत्र विष्ण्वादयो देवास्तत्र वासाद्धरिं व्रजेत् ॥ सरस्वत्यां सन्निहि ( ह ) त्यां
स्नानकृद्ब्रह्मलोकभाक् ॥ १५ ॥ पांसवोऽपि कुरुक्षेत्रे नयन्ति परमां गतिम् ॥ धर्म्मतीर्थं सुवर्णाख्यं गङ्गाद्वारमनुत्तमम् ॥ १६ ॥
तीर्थं कनखलं पुण्यं भद्रकर्णह्रदं तथा ॥ गङ्गासरस्वतीसङ्गं ब्रह्मावर्त्तमघार्दनम् ॥ १७ ॥ भृगुतुङ्गं च कुब्जाम्रं गङ्गोद्भेदमघान्तकम् ॥
वाराणसी वरं तीर्थमविमुक्तमनुत्तमम् ॥ १८ ॥ कपालमोचनं तीर्थं तीर्थराजं प्रयागकम् ॥ गोमतीगङ्गयोः सङ्गं गङ्गा सर्वत्र नाकदा ॥
॥ १९ ॥ तीर्थं राजगृहं पुण्यं शालग्राममघान्तकम् ॥ वटेशं वामनं तीर्थं कालिकासङ्गमुत्तमम् ॥ २० ॥ लौहित्यं करतोयाख्यं शोणं
चार्षभं परम् ॥ श्रीपर्वतं कोल्वगिरिं सह्याद्रिर्म्मलयो गिरिः ॥ २१ ॥ गोदावरी तुङ्गभद्रा कावेरी वरदा नदी ॥ तापी पयोष्णी रेवा च
दण्डकारण्यमुत्तमम् ॥ २२ ॥ कालञ्जरं मुञ्जवटं तीर्थं मूर्पारकं परम् ॥ मन्दाकिनी चित्रकूटं शृङ्गवेरपुरं परम् ॥ २३ ॥

अवन्ती परमं तीर्थमयोध्या पापनाशिनी ॥ नैमिषं परमं तीर्थं भुक्तिमुक्तिप्रदायकम् ॥ २४ ॥ इत्यादिमहापुराणे आग्नेये तीर्थयात्रामाहात्म्यं नाम नवाधिकशततमोऽध्यायः ॥ १०९ ॥ अथ गङ्गामाहात्म्यम् ॥ अग्निरुवाच ॥ गङ्गामाहात्म्यमाख्यास्ये सेव्या सा भुक्तिमुक्तिदा ॥ येषां मध्ये याति गङ्गा ते देशाः पावना वराः ॥ १ ॥ गतिर्गङ्गा तु भूतानां गतिमन्वेषतां सदा ॥ गङ्गा तारयते चोभौ वंशौ नित्यं हि सेविता ॥ २ ॥ चान्द्रायणसहस्राच्च गङ्गाम्भःपानमुत्तमम् ॥ गङ्गां मासं तु संसेव्य सर्वयज्ञफलं लभेत् ॥ ३ ॥ सकलाघहरी देवी स्वर्गलोकप्रदायिनी ॥ यावदस्थि च गङ्गायां तावत्स्वर्गे स तिष्ठति ॥ ४ ॥ अन्धादयस्तु तां सेव्य देवैर्गच्छन्ति तुल्यताम् ॥ गङ्गातीर्थसमुद्भूतमृद्धारी सोऽघहार्कवत् ॥ ५ ॥ दर्शनात्स्पर्शनात्पानात्तथा गङ्गेतिकीर्त्तनात् ॥ पुनाति पुण्यपुरुषाञ्छतशोऽथ सहस्रशः ॥ ६ ॥ इत्यादिमहापुराणे आग्नेये गङ्गामाहात्म्यं नाम दशाऽधिकशततमोऽध्यायः ॥ ११० ॥ अथ प्रयागमाहात्म्यम् ॥ अग्निरुवाच ॥ वक्ष्ये प्रयागमाहात्म्यं भुक्तिमुक्तिप्रदं परम् ॥ प्रयागे ब्रह्मविष्ण्वाद्या देवा मुनिवराः स्थिताः ॥ १ ॥ सरितः सागराः सिद्धा गन्धर्वाप्सरसस्तथा ॥ तत्र त्रीण्यग्निकुण्डानि तेषां मध्ये तु जाह्नवी ॥ २ ॥ वेगेन समतिक्रान्ता सर्वतीर्थपुरस्कृता ॥ तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुता ॥ ३ ॥ गङ्गायमुनयोर्म्मध्यं पृथिव्या जघनं स्मृतम् ॥ प्रयागं जघनस्यान्तरुपस्थमृषयो विदुः ॥ ४ ॥ प्रयागं सप्रतिष्ठानं कम्बलाश्वतरावुभौ ॥ तीर्थं भोगवती चैव वेदी प्रोक्ता प्रजापतेः ॥ ५ ॥ तत्र वेदाश्च यज्ञाश्च मूर्तिमन्तः प्रयागके ॥ स्तवनादस्य तीर्थस्य नामसङ्कीर्त्तनादपि ॥ ६ ॥ मृत्तिकालम्भनाद्वापि सर्वपापैः प्रमुच्यते ॥ प्रयागे संगमे दानं श्राद्धं जप्यादि चाक्षयम् ॥ ७ ॥ न वेदवचनाद्विप्र न लोकवचनादपि ॥ मतिरुत्क्रमणीयाऽन्ते प्रयागे मरणं प्रति ॥ ८ ॥ दशतीर्थसहस्राणि षष्टिकोट्यस्तथापराः ॥ तेषां सान्निध्यमत्रैव प्रयागं परमं ततः ॥ ९ ॥ वासुकेर्भोगवत्यत्र हंसप्रपतनं परम् ॥ गवां कोटिप्रदानाद्यत्र्यहं स्नानस्य तत्फलम् ॥ १० ॥ प्रयागे माघमासे तु एवमाहुर्म्मनीषिणः ॥ सर्वत्र सुलभा गंगा त्रिषु स्थानेषु दुर्लभा ॥ ११ ॥ गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥ अत्र दानाद्दिवं याति राजेन्द्रो जायतेऽत्र च ॥ १२ ॥ वटमूले सङ्गमादौ मृतो विष्णुपुरीं व्रजेत् ॥ उर्वशीपुलिनं रम्यं

तीर्थं सन्ध्यावटस्तथा ॥ १३ ॥ कोटितीर्थं चाश्वमेधं गङ्गायमुनमुत्तमम् ॥ मानसं रजसा हीनं तीर्थं वासरकं परम् ॥ १४ ॥ इत्या-
*दिमहापुराणे आग्नेये प्रयागमाहात्म्यं नाम एकादशाऽधिकशततमोऽध्यायः ॥ १११ ॥ अथ वाराणसीमाहात्म्यम् ॥ अग्निरुवाच ॥*
वाराणसी परं तीर्थं गौर्य्यै प्राह महेश्वरः ॥ भुक्तिमुक्तिप्रदं पुण्यं वसतां गृणतां हरिम् ॥ १ ॥ रुद्र उवाच ॥ गौरि क्षेत्रं न मुक्तं वै अवि-
मुक्तं ततः स्मृतम् ॥ जप्तं तप्तं हुतं दत्तमविमुक्ते किलाक्षयम् ॥ २ ॥ अश्मना चरणौ हत्वा वसेत्काशीं न हि त्यजेत् ॥ हरिश्चन्द्रं परं गुह्यं
गुह्यमाम्रातकेश्वरम् ॥ ३ ॥ जप्येश्वरं परं गुह्यं गुह्यं श्रीपर्वतं तथा ॥ महालयं परं गुह्यं भृगुश्च ( भूमिच ) ण्डेश्वरं तथा ॥ ४ ॥ केदारं
परमं गुह्यमष्टौ सन्त्यविमुक्तके ॥ गुह्यानां परमं गुह्यमविमुक्तं परं मम ॥ ५ ॥ द्वियोजनं तु पूर्वं स्याद्योजनार्द्धं तदन्यथा ॥ वरणा च नदी
चासीन्मध्ये वाराणसी तयोः ॥ ६ ॥ अत्र स्नानं जपो होमो मरणं देवपूजनम् ॥ श्राद्धं दानं निवासश्च यद्यत्स्याद्भुक्तिमुक्तिदम् ॥ ७ ॥
इत्यादिमहापुराणे आग्नेये वाराणसीमाहात्म्यं नाम द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ अथ नर्मदादिमाहात्म्यम् ॥ अग्निरुवा-
च ॥ नर्मदादिकमाहात्म्यं वक्ष्येहं नर्मदां पराम् ॥ सद्यः पुनाति गाङ्गेयं दर्शनाद्वारि नार्म्मदम् ॥ १ ॥ विस्तराद्योजनशतं योजनद्वय-
मायता ॥ षष्टिस्तीर्थसहस्राणि षष्टिकोट्यस्तथापराः ॥ २ ॥ पर्वतस्य समन्तात्तु तिष्ठन्त्यमरकण्टके ॥ कावेरीसङ्गमं पुण्यं श्रीपर्वतमतः
शृणु ॥ ३ ॥ गौरी श्रीरूपिणी तेपे तपस्तामब्रवीद्धरिः ॥ अवाप्स्यसि त्वमध्यात्मनाम्ना श्रीपर्वतस्तव ॥ ४ ॥ समन्ताद्योजनशतं महापुण्यं
भविष्यति ॥ अत्र दानं तपो जप्यं श्राद्धं सर्वमथाक्षयम् ॥ ५ ॥ मरणं शिवलोकाय सर्वदं तीर्थमुत्तमम् ॥ हरोऽत्र क्रीडते देव्या हिरण्य-
कशिपुस्तथा ॥ तपस्तप्त्वा बली चाभून्मुनयः सिद्धिमाप्नुवन् ॥ ६ ॥ इत्यादिमहापुराणे आग्नेये नर्मदाश्रीपर्वतादिमाहात्म्यं नाम त्रयो-
दशाऽधिकशततमोऽध्यायः ॥ ११३ ॥ अथ गयामाहात्म्यम् ॥ अग्निरुवाच ॥ गयामाहात्म्यमाख्यास्ये गयातीर्थोत्तमोत्तमम् ॥ गया-
सुरस्तपस्तेपे तत्तपस्तापिभिः सुरैः ॥ १ ॥ उक्तः क्षीराब्धिगो विष्णुः पालयास्मान्गयासुरात् ॥ तथेत्युक्त्वा हरिर्दैत्यं वरं ब्रूहीति चाब्र-
वीत् ॥ २ ॥ दैत्योऽब्रवीत्पवित्रोऽहं भवेयं सर्वतीर्थतः ॥ तथेत्युक्त्वा गतो विष्णुर्दैत्यं दृष्ट्वा न वा हरिम् ॥ ३ ॥ गताः शून्या मही स्वर्गे
देवा ब्रह्मादयः सुराः ॥ गता ऊचुर्हरिं देवाः शून्या भूस्त्रिदिवं हरे ॥ ४ ॥ दैत्यस्य दर्शनादेव ब्रह्माणं चाब्रवीद्धरिः ॥ यागार्थं दैत्यदेहं त्वं







प्रार्थय त्रिदशैः सह ॥ ५ ॥ तच्छ्रुत्वा ससुरो ब्रह्मा गयासुरमथाब्रवीत् ॥ अतिथिः प्रार्थयामि त्वां देहं यागाय पावनम् ॥ ६ ॥ गयासुर
स्तथेत्युक्त्वापतत्तस्य शिरस्यथ ॥ यागं चकार चलिते देहि पूर्णाहुतिं विभुः ॥ ७ ॥ पुनर्ब्रह्माब्रवीद्विष्णुं पूर्णकालेऽसुरोऽचलत् ॥ विष्णु
धर्ममथाहूय प्राह देवमयीं शिलाम् ॥ ८ ॥ धारयध्वं सुराः सर्वे यस्यामुपरि सन्तु ते ॥ गदाधरो मदीयाथ मूर्त्तिः स्थास्यति सामरैः ॥९॥
धर्मः शिलां देवमयीं तच्छ्रुत्वाऽधारयत्पराम् ॥ या धर्माद्धर्मवत्यां च जाता धर्मव्रता सुता ॥ १० ॥ मरीचिर्ब्रह्मणः पुत्रस्तामुवाह तपो-
न्विताम् ॥ यथा हरिः श्रिया रेमे गौर्य्यां शम्भुस्तथा तया ॥ ११ ॥ कुशपुष्पाद्यरण्याच्च ह्यानीयातिश्रमान्वितः ॥ भुक्त्वा धर्मव्रतां प्राह
पादसंवाहनं कुरु ॥ १२ ॥ विश्रान्तस्य मुनेः पादौ तथेत्युक्त्वा प्रियाकरोत् ॥ एतस्मिन्नन्तरे ब्रह्मा मुनौ सुप्ते तथाऽऽगतः ॥ १३ ॥
धर्मव्रताचिन्तयच्च किं ब्रह्माणं समर्चये ॥ पादसंवाहनं कुर्वे ब्रह्मा पूज्यो गुरोर्गुरुः ॥ १४ ॥ विचिन्त्य पूजयामास ब्रह्माणं चार्हणादिभिः ॥
मरीचिस्तामपश्यत्स शशापोक्तिव्यतिक्रमात् ॥ १५ ॥ शिला भविष्यसि क्रोधाद्धर्मव्रताऽब्रवीच्च तम् ॥ पादाभ्यङ्गं परित्यज्य त्वद्गुरुः
पूजितो मया ॥ १६ ॥ अदोषाहं यतस्त्वं हि शापं प्राप्स्यसि शङ्करात् ॥ धर्मव्रता पृथक् शापं धारयित्वाग्निमध्यगात् ॥१७॥ तपश्चचार
वर्षाणां सहस्राण्ययुतानि च ॥ ततो विष्ण्वादयो देवा वरं ब्रूहीति चाब्रुवन् ॥१८॥ धर्मव्रताऽब्रवीद्देवाञ्छापं निर्वर्त्तयन्तु मे ॥ देवा ऊचुः ॥
दत्तो मरीचिना शापो भविष्यति न चान्यथा ॥१९॥ शिला पवित्रा देवाङ्घ्रिलक्षिता त्वं भविष्यसि ॥ देवव्रता देवशिला सर्वदेवादिरूपिणी
॥२०॥ सर्वदेवमयी पुण्या निश्चला यासुरस्य हि ॥ देवव्रतोवाच॥ यदि तुष्टाः स्थ मे सर्वे मयि तिष्ठन्तु सर्वदा॥२१॥ब्रह्मा विष्णुश्च रुद्राद्या
गौरीलक्ष्मीमुखाः सुराः॥ अग्निरुवाच ॥ देवव्रतावचः श्रुत्वा तथेत्युक्त्वा दिवं गताः ॥२२॥ सा धर्मेणासुरस्यास्य धृता देवमयी शिला ॥
साशिलश्चालितो दैत्यः स्थिता रुद्रादयस्ततः ॥ २३ ॥ सदेवश्चालितो दैत्यस्ततो देवैः प्रसादितः ॥ क्षीराब्धिगो हरिः प्रादात्स्वमूर्त्तिं श्रीग-
दाधरम् ॥ २४ ॥ गच्छन्तु भोः स्वयं यास्यो मूर्त्या वै देवगम्यया ॥ स्थितो गदाधरो देवो व्यक्ताव्यक्तोभयात्मकः ॥ २५ ॥ निश्चलार्थं
स्वयं देवः स्थित आदिगदाधरः ॥ गदो नामासुरो दैत्यः स हतो विष्णुना पुरा ॥ २६ ॥ तदस्थिनिर्मिता चाद्या गदा या विश्वकर्मणा ॥
आद्यया गदया हेतिप्रमुखा राक्षसा हताः॥२७॥ गदाधरेण विधिवत्तस्मादादिगदाधरः ॥ देवमय्यां शिलायां च स्थिते चादिगदाधरे॥२८॥

गयासुरे निश्चलेऽथ ब्रह्मा पूर्णाहुतिं ददौ ॥ गयासुरोऽब्रवीद्देवान्किमर्थं वञ्चितो ह्यहम् ॥२९॥ विष्णोर्वचनमात्रेण किं न स्यां निश्चलो ह्यहम् ॥
आक्रान्तो यद्यहं देवा दातुमर्हत मे वरम् ॥ ३० ॥ देवा ऊचुः ॥ तीर्थस्य करणे यत्त्वमस्माभिर्निश्चलीकृतः ॥ विष्णुः शम्भोर्ब्रह्मणश्च क्षेत्रं
तव भविष्यति ॥ ३१ ॥ प्रसिद्धं सर्वतीर्थेभ्यः पित्रादेर्ब्रह्मलोकदम् ॥ इत्युक्त्वा ते स्थिता देवा देव्यस्तीर्थादयः स्थिताः ॥ ३२ ॥ यागं
कृत्वा ददौ ब्रह्मा ऋत्विग्भ्यो दक्षिणां तदा ॥ पञ्चक्रोशं गयाक्षेत्रं पञ्चाशत्पञ्च चार्पयेत् ॥ ३३ ॥ ग्रामान्स्वर्णगिरीन्कृत्वा नदीर्दुग्धम-
धुस्रवाः ॥ सरोवराणि दध्याज्यैर्बहूनन्नादिपर्वताम् ॥ ३४ ॥ कामधेनुं कल्पतरुं स्वर्णरूप्यगृहाणि च ॥ न याचयन्तु विप्रेन्द्रा-
अल्पानुक्त्वा ददौ प्रभुः ॥ ३५ ॥ धर्मयागे प्रलोभात्तु प्रतिगृह्य धनादिकम् ॥ स्थिता यदा गयायां ते शप्तास्ते ब्रह्मणा तदा ॥ ३६ ॥
विद्याविवर्जिता यूयं तृष्णायुक्ता भविष्यथ ॥ दुग्धादिवर्जिता नद्यः शैलाः पाषाणरूपिणः ॥३७॥ ब्रह्माणं ब्राह्मणाश्चोचुर्नष्टं शापेन चाखि-
लम् ॥ जीवनाय प्रसादं नः कुरु विप्रांश्च सोऽब्रवीत् ॥ ३८ ॥ तीर्थोपजीविका यूयमाचन्द्रार्कं भविष्यथ ॥ ये युष्मान्पूजयिष्यन्ति गया-
यामागता नराः ॥ ३९ ॥ हव्यकव्यैर्धनैः श्राद्धैस्तेषां कुलशतं व्रजेत् ॥ नरकात्स्वर्गलोकाय स्वर्गलोकात्परां गतिम् ॥ ४० ॥ गयोऽपि
चाकरोद्यागं बह्वन्नं बहुदक्षिणम् ॥ गया पुरी तेन नाम्ना पाण्डवा ईजिरे हरिम् ॥४१॥ इत्यादिमहापुराणे आग्नेये गयामाहात्म्यं नाम चतु-
र्दशाधिकशततमोऽध्यायः ॥११४॥ अथ गयायात्राविधिः ॥ अग्निरुवाच ॥ उद्यतश्चेद्गयां यातुं श्राद्धं कृत्वा विधानतः ॥ विधाय कार्पटीवेषं
ग्रामस्यापि प्रदक्षिणम् ॥ १ ॥ कृत्वा प्रतिदिनं गच्छेत्संयतश्चाप्रतिग्रही ॥ गृहाच्चलितमात्रस्य गयाया गमनं प्रति ॥ २ ॥ स्वर्गारोहणसोपानं
पितॄणां तु पदे पदे ॥ ब्रह्मज्ञानेन किं कार्यं गोगृहे मरणेन किम् ॥३॥ किं कुरुक्षेत्रवासेन यदा पुत्रो गयां व्रजेत् ॥ गयाप्राप्तं सुतं दृष्ट्वा पितॄ-
णामुत्सवो भवेत् ॥४॥ पद्भ्यामपि जलं स्पृष्ट्वा अस्मभ्यं किं न दास्यति ॥ ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा ॥५॥ वासः पुंसां कुरुक्षेत्रे
मुक्तिरेषा चतुर्विधा ॥ कांक्षन्ति पितरः पुत्रं नरकाद्भयभीरवः ॥ ६ ॥ गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति ॥ मुण्डनं चोपवासश्च
सर्वतीर्थेष्वयं विधिः ॥ ७ ॥ न कालादिर्गयातीर्थे दद्यात्पिण्डांश्च नित्यशः ॥ पक्षत्रयनिवासी च पुनात्यासप्तमं कुलम् ॥ ८ ॥ अष्टकासु
च वृद्धौ च गयायां मृतवासरे ॥ अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥ ९ ॥ पित्रादिनवदैवत्यं तथा द्वादशदैवतम् ॥ प्रथमे दिवसे









स्नायात्तीर्थे ह्युत्तरमानसे ॥ १० ॥ उत्तरे मानसे पुण्ये आयुरारोग्यवृद्धये ॥ सर्वाघौघविघाताय स्नानं कुर्य्याद्विमुक्तये ॥ ११ ॥ सन्तर्प्य देवपित्रादीञ्छ्राद्धकृत्पिण्डदो भवेत् ॥ दिव्यान्तरिक्षभौमस्थान्देवान्सन्तर्पयाम्यहम् ॥ १२ ॥ दिव्यान्तरिक्षभौमादि पितृमात्रादि तर्पयेत् ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ १३ ॥ माता पितामही चैव तथैव प्रपितामही ॥ मातामहः प्रमातामहो वृद्धप्रमातामहः ॥ १४ ॥ तेभ्योऽन्येभ्य इमान्पिण्डानुद्धाराय ददाम्यहम् ॥ ओं नमः सूर्य्यदेवाय सोमभौमज्ञरूपिणे ॥ १५ ॥ जीवशुक्रशनैश्चारिराहुकेतुस्वरूपिणे । उत्तरे मानसे स्नात उद्धरेत्सकलं कुलम् ॥ १६ ॥ सूर्य्यं नत्वा व्रजेन्मौनी नरो दक्षिणमानसम् ॥ दक्षिणे मानसे स्नानं करोमि पितृतृप्तये ॥ १७ ॥ गयायामागतः स्वर्गं यान्तु मे पितरोऽखिलाः । श्राद्धं पिण्डं ततः कृत्वा सूर्यं नत्वा वदेदिदम् ॥ १८ ॥ ओं नमो भानवे भर्त्रे भवाय भव मे विभो ॥ भुक्तिमुक्तिप्रदः सर्वपितृणां भवभावितः ॥ १९ ॥ कव्यवाहोऽनलः सोमो यमश्चैवार्य्यमा तथा ॥ अग्निष्वात्ता बर्हिषद आज्यपाः पितृदेवताः ॥ २० ॥ आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह ॥ मदीयाः पितरो ये च मातृमातामहादयः ॥ २१ ॥ तेषां पिण्डप्रदाताहमागतोऽस्मि गयामिमाम् ॥ उदीच्यां मुण्डपृष्ठस्य देवर्षिगणपूजितम् ॥ २२ ॥ नाम्ना कनखलं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ सिद्धानां प्रीतिजननैः पापानां च भयङ्करैः ॥ २३ ॥ लेलिहानैर्महानागै रक्ष्यते चैव नित्यशः ॥ तत्र स्नात्वा दिवं यान्ति क्रीडन्ते भुवि मानवाः ॥ २४ ॥ फल्गुतीर्थं ततो गच्छेन्महानद्यां स्थितं परम् ॥ नागाज्जनार्दनात्कूपाद्वटाच्चोत्तरमानसात् ॥ २५ ॥ एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ॥ मुण्डपृष्ठनगाद्याश्च सारात्सारमथान्तरम् ॥ २६ ॥ यस्मिन्फलति श्रीर्गौर्वा कामधेनुर्जलं मही ॥ दृष्टिरम्यादिकं यस्मात्फल्गुतीर्थं न फल्गुवत् ॥ २७ ॥ फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम्॥ एतेन किं न पर्य्याप्तं नृणां सुकृतकारिणाम् ॥ २८ ॥ पृथिव्यां यानि तीर्थानि आसमुद्रात्सरांसि च ॥ फल्गुतीर्थं गमिष्यन्ति वारमेकं दिने दिने ॥ २९ ॥ फल्गुतीर्थे तीर्थराजे करोति स्नानमादृतः ॥ पितृणां ब्रह्मलोकाप्त्यै आत्मनो भुक्तिमुक्तये ॥ ३० ॥ स्नात्वा श्राद्धी पिण्डदोऽथ नमेद्देवं पितामहम् ॥ कलौ माहेश्वरा लोका अत्र देवो गदाधरः ॥ ३१ ॥ पितामहो लिङ्गरूपी तन्नमामि महेश्वरम् ॥ गदाधरं बलं काममनिरुद्धं नरायणम् ॥ ३२ ॥ ब्रह्मविष्णुनृसिंहाख्यं वराहादिं नमाम्यहम् ॥ ततो

गदाधरं दृष्ट्वा कुलानां शतमुद्धरेत् ॥ ३३ ॥ धर्मारण्यं द्वितीयेऽह्नि मतङ्गस्याश्रमे वरे ॥ मतङ्गवाप्यां संस्नाय श्राद्धकृत्पिण्डदो भवेत् ॥ ३४ ॥ मतङ्गेशं सुसिद्धेशं नत्वा चेदमुदीरयेत् ॥ प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः ॥ ३५ ॥ मयागत्य मतङ्गेऽस्मिन्पितॄणां निष्कृतिः कृता ॥ स्नानतर्पणश्राद्धादिर्ब्रह्मतीर्थेऽथ कूपके ॥ ३६ ॥ तत्कूपयूपयोर्मध्ये श्राद्धं कुलशतोद्धृतौ ॥ महाबोधतरुं नत्वा धर्मवान्स्वर्गलोकभाक् ॥ ३७ ॥ तृतीये ब्रह्मसरसि स्नानं कुर्य्याद्यतव्रतः ॥ स्नानं ब्रह्मसरस्तीर्थे करोमि ब्रह्मभूतये ॥ ३८ ॥ पितॄणां ब्रह्मलोकाय ब्रह्मर्षिगणसेविते ॥ तर्पणं श्राद्धकृत्पिण्डं प्रदद्यात्तु प्रसेचनम् ॥ कुर्य्याच्च वाजपेयार्थी ब्रह्मयूपप्रदक्षिणम् ॥ ३९ ॥ एको मुनिः कुम्भकुशाग्रहस्त आम्रस्य मूले सलिलं ददाति ॥ आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रिया द्व्यर्थकरी प्रसिद्धा ॥ ४० ॥ ब्रह्माणं च नमस्कृत्य कुलानां शतमुद्धरेत् ॥ फल्गुतीर्थे चतुर्थेऽह्नि स्नात्वा देवादितर्पणम् ॥ ॥ ४१ ॥ कृत्वा श्राद्धं सपिण्डं च गयाशिरसि कारयेत् ॥ पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ॥ ४२ ॥ तत्र पिण्डप्रदानेन कुलानां शतमुद्धरेत् ॥ मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ॥ ४३ ॥ मुण्डपृष्ठे शिरः साक्षाद्गयाशिर उदाहृतम् ॥ साक्षाद्गयाशिरस्तत्र फल्गुतीर्थाश्रमं कृतम् ॥ ४४ ॥ अमृतं तत्र वहति पितॄणां दत्तमक्षयम् ॥ स्नात्वा दशाश्वमेधे तु दृष्ट्वा देवं पितामहम् ॥ ४५ ॥ रुद्रपादं नरः स्पृष्ट्वा नेह भूयोऽभिजायते ॥ शमीपत्रप्रमाणेन पिण्डं दत्त्वा गयाशिरे ॥ ४६ ॥ नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ॥ पायसेनाथ पिष्टेन सक्तुना चरुणा तथा ॥ ४७ ॥ पिण्डदानं तण्डुलैश्च गोधूमैस्तिलमिश्रितैः ॥ पिण्डं दत्त्वा रुद्रपदे कुलानां शतमुद्धरेत् ॥ ॥ ४८ ॥ तथा विष्णुपदे श्राद्धपिण्डदो ह्यृणमुक्तिकृत् ॥ पित्रादीनां शतकुलं स्वात्मानं तारयेन्नरः ॥ ४९ ॥ तथा ब्रह्मपदे श्राद्धी ब्रह्मलोकं नयेत्पितॄन् ॥ दक्षिणाग्निपदे तद्वद्गार्हपत्यपदे तथा ॥ ५० ॥ पदे वाऽऽहवनीयस्य श्राद्धी यज्ञफलं लभेत् ॥ आवसथ्यस्य चन्द्रस्य सूर्यस्य च गणस्य च ॥ ५१ ॥ अगस्त्यकार्त्तिकेयस्य श्राद्धी तारयते कुलम् ॥ आदित्यस्य रथं नत्वा कर्णादित्यं नमेन्नरः ॥ ५२ ॥ कनकेशपदं नत्वा गयाकेदारकं नमेत् ॥ सर्वपापविनिर्मु[illegible]ितॄन्ब्रह्मपुरं नयेत् ॥ ५३ ॥ विशालोऽपि गयाशीर्षे पिण्डदोऽभूच्च पुत्रवान् ॥ विशालायां विशालोऽभूद्राजपुत्रोऽब्रवीद्द्विजान् ॥ ५४ ॥ क[illegible] पुत्रादयः स्युर्मे द्विजा ऊचुर्विशालकम् ॥ गयायां



पिण्डदानेन तव सर्वं भविष्याति ॥ ५५ ॥ विशालोऽपि गयाशीर्षे पितृपिण्डान्ददौ ततः ॥ दृष्ट्वाकाशे सितं रक्तं पुरुषांस्तांश्च पृष्टवान्
॥ ५६ ॥ के यूयं तेषु चैवैकः सितः प्रोचे विशालकम् ॥ अहं सितस्ते जनक इन्द्रलोकं गतः शुभात् ॥ ५७ ॥ मम रक्तः पिता पुत्र
कृष्णश्चैव पितामहः ॥ अब्रवीन्नरकं प्राप्तास्त्वया मुक्तीकृता वयम् ॥ ५८ ॥ पिण्डदानाद्ब्रह्मलोकं व्रजाम इति ते गताः ॥ विशालः
प्राप्तपुत्रादिः राज्यं कृत्वा हरिं ययौ ॥ ५९ ॥ प्रेतराजः स्वमुक्त्यै च वणिजं चेदमब्रवीत् ॥ प्रेतैः सर्वैः सहार्तः सन्सुकृतं भुज्यते फलम्
॥ ६० ॥ श्रवणद्वादशीयोगे कुम्भः सान्नश्च सोदकः ॥ दत्तः पुरा स मध्याह्ने जीवनायोपतिष्ठते ॥ ६१ ॥ धनं गृहीत्वा मे गच्छ गयायां
पिण्डदो भव ॥ वणिग्धनं गृहीत्वा तु गयायां पिण्डदोऽभवत् ॥ ६२ ॥ प्रेतराजः सह प्रेतैर्मुक्तो नीतो हरेः पुरम् ॥ गयाशीर्षे पिण्ड-
दानादात्मानं स्वपितॄंस्तथा ॥ ६३ ॥ पितृवंशे मृता ये च मातृवंशे तथैव च ॥ गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥ ६४ ॥ ये
मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ॥ क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा ॥ ६५ ॥ विरूपा आमगर्भा ये ज्ञाताज्ञाताः कुले
मम ॥ तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ ६६ ॥ ये केचित्प्रेतरूपेण तिष्ठन्ति पितरो मम ॥ ते सर्वे तृप्तिमायान्तु पिण्ड-
दानेन सर्वदा ॥ ६७ ॥ पिण्डो देयस्तु सर्वेभ्यः सर्वैर्वै कुलतारकैः ॥ आत्मनस्तु तथा देयो ह्यक्षयं लोकमिच्छता ॥ ६८ ॥ पञ्चमे-
ऽह्नि गदालोले स्नायान्मन्त्रेण बुद्धिमान् ॥ गदाप्रक्षालने तीर्थे गदालोलेऽतिपावने ॥ ६९ ॥ स्नानं करोमि संसारगदशान्त्यै जनार्दन ॥
नमोऽक्षयवटायैव अक्षयस्वर्गदायिने ॥ ७० ॥ पित्रादीनामक्षयाय सर्वपापक्षयाय च ॥ श्राद्धं वटतले कुर्याद्ब्राह्मणानां च भोजनम्
॥ ७१ ॥ एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ किम्पुनर्बहुभिर्भुक्तैः पितॄणां दत्तमक्षयम् ॥ ७२ ॥ गयायामन्नदाता यः पितर-
स्तेन पुत्रिणः ॥ वटं वटेश्वरं नत्वा पूजयेत्प्रपितामहम् ॥ ॥ ७३ ॥ अक्षयाँल्लभते लोकान्कुलानां शतमुद्धरेत् ॥ क्रमतोऽक्रमतो वापि
गयायात्रा महाफला ॥ ७४ ॥ इत्यादिमहापुराणे आग्नेये गयामाहात्म्ये गयायात्रा नाम पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥
तदेव ॥ अग्निरुवाच ॥ गायत्र्यैव महानद्यां स्नातः सन्ध्यां समाचरेत् ॥ गायत्र्या अग्रतः प्रातः श्राद्धपिण्डमथाक्षयम् ॥ १ ॥ मध्याह्ने
संध्यां स्नात्वा गतिवाद्यैर्बाम्य च ॥ मावित्रीपुरतः सन्ध्यां पिण्डदानं च तत्पदे ॥ २ ॥ अगस्त्यस्य पदे कुर्याद्योनिद्वारं प्रविश्य च ॥

निर्गतो न पुनर्योनिं प्रविशेन्मुच्यते भवात् ॥ ३ ॥ बलिं काकशिलायां च कुमारं च नमेत्ततः ॥ स्वर्गद्वार्य्यां सोमकुण्डे वायुतीर्थेऽथ पिण्डदः ॥ ४ ॥ भवेदाकाशगङ्गायां कपिलायां च पिण्डदः ॥ कपिलेशं शिवं नत्वा रुक्मिकुण्डे च पिण्डदः ॥ ५ ॥ कोटीतीर्थे च कोटीशं नत्वामोघपदे नरः ॥ गदालोले वानरके गोप्रचारे च पिण्डदः ॥ ६ ॥ नत्वा गावं वैतरण्यामेकविंशकुलोद्धृतिः ॥ श्राद्धपिण्डप्रदाता स्यात्क्रौञ्चपादे च पिण्डदः ॥ ७ ॥ तृतीयायां विशालायां निश्चिरायां च पिण्डदः ॥ ऋणमोक्षे पापमोक्षे भस्मकुण्डेऽथ भस्मना ॥ ८ ॥ स्नानकृन्मुच्यते पापान्नमेदेवं जनार्दनम् ॥ एष पिण्डो मया दत्तस्तव हस्ते जनार्दन ॥ ९ ॥ परलोकगते मह्यमक्षय्यमुपतिष्ठताम् ॥ गयायां पितृरूपेण स्वयमेव जनार्दनः ॥ १० ॥ तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते वै ऋणत्रयात् ॥ मार्कण्डेयेश्वरं नत्वा नमेद्गृध्रेश्वरं नरः ॥ ११ ॥ मूलक्षेत्रे महेशस्य धारायां पिण्डदो भवेत् ॥ गृध्रकूटे गृध्रवटे धौतपादे च पिण्डदः ॥ १२ ॥ पुष्करिण्यां कर्दमाले रामतीर्थे च पिण्डदः ॥ प्रभासेशं नमेत्प्रेतशिलायां पिण्डदो भवेत् ॥ १३ ॥ दिव्यान्तरिक्षभूमिष्ठाः पितरो बान्धवादयः ॥ प्रेतादिरूपा मुक्ताः स्युः पिण्डैर्दत्तैर्मयाखिलाः ॥ १४ ॥ स्थानत्रये प्रेतशिला गयाशिरसि पावनी ॥ प्रभासे प्रेतकुण्डे च पिण्डदस्तारयेन्कुलम् ॥ १५ ॥ वशिष्ठेशं नमस्कृत्य तदग्रे पिण्डदो भवेत् ॥ गयानाभौ सुषुम्णायां महाकोष्ट्यां च पिण्डदः ॥ १६ ॥ गदाधराग्रतो मुण्डपृष्ठे देव्याश्च सन्निधौ ॥ मुण्डपृष्ठं नमेदादौ क्षेत्रपालादिसंयुतम् ॥ १७ ॥ पूजयित्वा भयं न स्याद्विषरोगादिनाशनम् ॥ ब्रह्माणं च नमस्कृत्य ब्रह्मलोकं नयेत्कुलम् ॥ १८ ॥ सुभद्रां बलभद्रं च प्रपूज्य पुरुषोत्तमम् ॥ सर्वकामसमायुक्तः कुलमुद्धृत्य नाकभाक् ॥ ॥ १९ ॥ हृषीकेशं नमस्कृत्य तदग्रे पिण्डदो भवेत् ॥ माधवं पूजयित्वा च देवो वैमानिको भवेत् ॥ २० ॥ महालक्ष्मीं प्राच्य गौरीं मङ्गलां च सरस्वतीम् ॥ पितॄनुद्धृत्य स्वर्गस्थो भुक्तभोगोऽत्र शास्त्रधीः ॥ २१ ॥ द्वादशादित्यमभ्यर्च्य वह्निं रेवन्तमिन्द्रकम् ॥ रोगादिमुक्तः स्वर्गी स्याच्छ्रीकपर्दिविनायकम् ॥ २२ ॥ प्रपूज्य कार्त्तिकेयं च निर्विघ्नः सिद्धिमाप्नुयात् ॥ सोमनाथं च कालेशं केदारं प्रपितामहम् ॥ २३ ॥ सिद्धेश्वरं च रुद्रेशं रामेशं ब्रह्मकेश्वरम् ॥ अष्टलिङ्गानि गुह्यानि पूजयित्वा तु सर्वभाक् ॥ २४ ॥ नारायणं वराहं च नारसिंहं नमेच्छ्रिये ॥ ब्रह्मविष्णुमहेशाख्यं त्रिपुरघ्नमशेषदम् ॥ २५ ॥ सीतां रामं च गरुडं वामनं सम्प्रपूज्य च ॥ सर्वकामानवाप्नोति

ब्रह्मलोकं नयेत्पितॄन् ॥ २६ ॥ देवैः सार्द्धं सम्प्रपूज्य देवमादिगदाधरम् ॥ ऋणत्रयविनिर्मुक्तस्तारयेत्सकलं कुलम् ॥ २७ ॥ देवरूपा
शिला पुण्या तस्माद्देवमयी शिला ॥ गयायां न हि तत्स्थानं यत्र तीर्थं न विद्यते ॥ २८ ॥ यन्नाम्ना पातयेत्पिण्डं तन्नयेद्ब्रह्म शाश्वतम् ॥
फल्ग्वीशं फल्गुचण्डी च प्रणम्याङ्गारकेश्वरम् ॥ २९ ॥ मतङ्गस्य पदे श्राद्धी भरताश्रमके भवेत् ॥ हंसतीर्थे कोटितीर्थे यत्र पाण्डु-
शिलान्नदः ॥ ३० ॥ तत्र स्यादग्निधारायां मधुस्रवासि पिण्डदः ॥ रुद्रेशं किलिकिलेशं नमेद्वृद्धि विनायकम् ॥ ३१ ॥ पिण्डदो धेनु-
कारण्ये पदे धेनोर्नमेच्च गाम् ॥ सर्वान्पितॄंस्तारयेच्च सरस्वत्यां च पिण्डदः ॥ ३२ ॥ सन्ध्यामुपास्य सायाह्ने नमेद्देवीं सरस्वतीम् ॥
त्रिसन्ध्याकृद्भवेद्विप्रो वेदवेदाङ्गपारगः ॥ ३३ ॥ गयां प्रदक्षिणीकृत्य गयाविप्रान्प्रपूज्य च ॥ अन्नदानादिकं सर्वं कृतं तत्राक्षयं भवेत् ॥
॥ ३४ ॥ स्तुत्वा सम्प्रार्थयेद्देवमादिदेवं गदाधरम् ॥ गदाधरं गयावासं पित्रादीनां गतिप्रदम् ॥ ३५ ॥ धर्म्मार्थकाममोक्षार्थं योगदं
प्रणमाम्यहम् ॥ देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितम् ॥ ३६ ॥ नित्यशुद्धं बुद्धियुक्तं सत्यं ब्रह्म नमाम्यहम् ॥ आनन्दमद्वयं देवं देवदानव-
वन्दितम् ॥ ३७ ॥ देवदेवीवृन्दयुक्तं सर्वदा प्रणमाम्यहम् ॥ कलिकल्मषकालार्त्तिदमनं वनमालिनम् ॥ ३८ ॥ पालिताखिललोकेशं
कुलोद्धरणमानसम् ॥ व्यक्ताव्यक्तविभक्तात्माविभक्तात्मानमात्मनि ॥ ३९ ॥ स्थितं स्थिरतरं सारं वन्दे घोराघमर्दनम् ॥ आगतोऽस्मि
गयां देव पितृकार्य्ये गदाधर ॥ ४० ॥ त्वं मे साक्षीभवाद्येह अनृणोऽहमृणत्रयात् ॥ साक्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा ॥
॥ ४१ ॥ मया गयां समासाद्य पितॄणां निष्कृतिः कृता ॥ गयामाहात्म्यपठनाच्छ्राद्धादौ ब्रह्मलोकभाक् ॥ पितॄणामक्षयं श्राद्धमक्षयं
ब्रह्मलोकदम् ॥ ४२ ॥ इत्यादिमहापुराणे आग्नेये गयामाहात्म्यं नाम षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ अथ श्राद्धकल्पः ॥
अग्निरुवाच ॥ कात्यायनो मुनीनाह यथा श्राद्धं तथा वदे ॥ श्राद्धं गयादौ कुर्वीत संक्रान्त्यादौ विशेषतः ॥ १ ॥ कालेवाऽपरपक्षे च
चतुर्थ्यामूर्ध्वमेव वा ॥ सम्पाद्य च पदर्क्षे च पूर्वेद्युश्च निमन्त्रयेत् ॥ २ ॥ यतीन्गृहस्थसाधून्वा स्नातकाञ्छ्रोत्रियान्द्विजान् ॥ अनवद्यान्कर्म्म-
निष्ठाञ्शिष्टानाचारसंयुतान् ॥ ३ ॥ वर्जयेच्छ्वित्रिकुष्ठ्यादीन्न गृह्णीयान्निमन्त्रितान् ॥ स्नाताञ्छुचींस्तथा दान्तान्प्राङ्मुखान्देवकर्म्मणि ॥ ॥ ८७ ॥
॥ ४ ॥ उपवेशयेत्त्रीन्पित्र्यादीनेकैकमुभयत्र वा ॥ एवं मातामहादेश्च शाकैरपि च कारयेत् ॥ ५ ॥ तदह्नि ब्रह्मचारी स्यादकोपोऽत्वरितो

मृदुः ॥ सत्योऽप्रमत्तोऽनघन्यो अस्वाध्यायश्च वाग्यतः ॥ ६ ॥ सर्वांश्च पङ्क्तिमूर्द्धन्यान्पृच्छेत्प्रश्ने तथासने ॥ दर्भानास्तीर्य्य द्विगुणान्पित्रे
देवादिकं चरेत् ॥ ७ ॥ विश्वान्देवानावाहयिष्ये पृच्छेदावाहयेति च ॥ विश्वेदेवास आगत्य विकीर्य्याथ यवाञ्जपेत् ॥ ८ ॥ विश्वेदेवाः
शृणुतेमं पितॄनावाहयिष्ये च ॥ पृच्छेदावाहयेत्युक्त उशन्तस्त्वा समाह्वयेत् ॥ ९ ॥ तिलान्विकीर्य्याथ जपेदायन्त्वित्यादि पैतृके ॥ सपवित्रे
निषिञ्चेद्वा शन्नो देवीरभित्यृचा ॥ १० ॥ यवोऽसीति यवान्दत्त्वा पित्रे सर्वत्र वै तिलान् ॥ तिलोऽसि सोमदेवत्यो गोसवो देवनिर्म्मितः ॥
प्रत्नवद्भिः प्रत्तः स्वधयेहि इमान्पितॄन् लोकान् प्रीणाहि नः स्वधा नमः इति ॥ श्रीश्च ते इति दद्यात्पुष्पं पात्रे हैमेऽथ राजते ॥ ११ ॥
औदुम्बरे वा खड्गे वा पर्णपात्रे प्रदक्षिणम् ॥ देवानामपसव्यं तु पितॄणां सव्यमाचरेत् ॥ १२ ॥ एकैकस्य चैकैकेन सपवित्रकरेषु च ॥
या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्ष उत पार्थिवीर्य्याः ॥ हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शं स्योनाः सुहवा भवन्तु ॥
विश्वेदेवा एष वोऽर्घः स्वाहा च पितरेप ते ॥ १३ ॥ स्वधैवं पितामहादेः संस्रवात्प्रथमे चरेत् ॥ पितृभ्यः स्थानमसीति न्युब्जपात्रं करो-
त्यधः ॥ १४ ॥ अत्र गन्धपुष्पधूपदीपाच्छादनदानकम् ॥ घृताक्तमन्नमुद्धृत्य पृच्छत्यग्नौ करिष्ये च ॥ १५ ॥ कुरुष्वेत्यभ्यनुज्ञातो
जुहुयात्साग्निको नमेत् ॥ अनग्निकः पितृहस्ते सपवित्रे तु मन्त्रतः ॥ १६ ॥ अग्नये कव्यवाहनाय स्वाहेति प्रथमाहुतिः ॥ सोमाय
पितृमतेऽथ यमायाङ्गिरसे परे ॥ १७ ॥ हुतशेषं चान्नपात्रे दत्त्वा पात्रं समालभेत् ॥ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्त्वा मुखे
अमृते अमृतं जुहोमि स्वाहेति ॥ जप्त्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ॥ १८ ॥ अपहतेति च तिलान् विकीर्य्यान्नं प्रदापयेत् ॥
जुषध्वमिति चोक्त्वाथ गायत्र्यादि ततो जपेत् ॥ १९ ॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥ नमः स्वधायै स्वाहायै
नित्यमेव नमो नमः ॥ २० ॥ तृप्ताञ्ज्ञात्वान्नं विकिरेदपो दद्यात्सकृत्सकृत् ॥ गायत्रीं पूर्ववज्जप्त्वा मधु मध्विति वै
जपेत् ॥ २१ ॥ तृप्ताः स्थ इति सम्पृच्छेत्तृप्ताः स्म इति वै वदेत् ॥ शेषमन्नमनुज्ञाप्य सर्वमन्नमथैकतः ॥ २२ ॥
उद्धृत्योच्छिष्टपार्श्वे तु कृत्वा चैवावनेजनम् ॥ दद्यात्कुशेषु त्रीन्पिण्डानाचान्तेषु परे जगुः ॥ २३ ॥ आचान्तेषूदकं
पुष्पाण्यक्षतानि प्रदापयेत् ॥ अक्षय्योदकमेवाथ आशिषः प्रार्थयेन्नरः ॥ २४ ॥ अघोराः पितरः सन्तु गोत्रं नो वर्द्धतां सदा ॥ दातारो

नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥ २५ ॥ श्रद्धा च नो माव्यगमद्वहु देयं च नोऽस्त्विति ॥ अन्नं च नो बहु भवेदातिथींश्च लभेमहि ॥
॥ २६ ॥ याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ॥ स्वधावाचनीयान्कुशानास्तीर्य्य सपवित्रकान् ॥ २७ ॥ स्वधां वाचयिष्ये
पृच्छेदनुज्ञातश्च वाच्यताम् ॥ पितृभ्यः पितामहेभ्यः प्रपितामहमुख्यके ॥ २८ ॥ स्वधोच्यतामस्तु स्वधा उच्यमानस्तथैव च ॥ अपो
निषिञ्चेदुत्तानं पात्रं कृत्वाथ दाक्षिणाम् ॥ २९ ॥ यथाशक्ति प्रदद्याच्च दैवे पैत्रेऽथ वाचयेत् ॥ विश्वेदेवाः प्रीयन्तां च वाजे वाजे विसर्ज-
येत् ॥ ३० ॥ आमावाजस्येत्यनुव्रज्य कृत्वा विप्रान्प्रदक्षिणम् ॥ गृहे विशेदमावास्यां मासि मासि चरेत्तथा ॥ ३१ ॥ एकोद्दिष्टं प्रवक्ष्यामि
श्राद्धं पूर्ववदाचरेत् ॥ एकं पवित्रमेकार्घमेकं पिण्डं प्रदापयेत् ॥ ३२ ॥ नावाहनाग्नौकरणं विश्वेदेवा न चात्र हि ॥ तृप्तिप्रश्ने स्वदित-
मिति वदेत्सुस्वदितं द्विजः ॥ ३३ ॥ उपतिष्ठतामित्यक्षय्ये विसर्गे चाभिरम्यताम् ॥ अभिरताः स्म इत्यपरे शेषं पूर्ववदाचरेत् ॥ ३४ ॥
सपिण्डीकरणं वक्ष्ये अब्दान्ते मध्यतोऽपि वा ॥ पितॄणां त्रीणि पात्राणि एकं प्रेतस्य पात्रकम् ॥ ३५ ॥ सपवित्राणि चत्वारि तिलपुष्प-
युतानि च ॥ गन्धोदकेन युक्तानि पूरयित्वाभिषिञ्चति ॥ ३६ ॥ प्रेतपात्रं पितृपात्रे ये समाना इति द्वयात् ॥ पूर्ववत्पिण्डदानादि प्रेतानां
पितृता भवेत् ॥ ३७ ॥ अथाभ्युदयिकं श्राद्धं वक्ष्ये सर्वं तु पूर्ववत् ॥ जपेत्पितृमन्त्रवर्ज्जं पूर्वाह्णे तत्प्रदक्षिणम् ॥ ३८ ॥ उपचारा
ऋजुकुशास्तिलार्थैश्च यवैरिह ॥ तृप्तिप्रश्नस्तु सम्पन्नं सुसम्पन्नं वदेद्द्विजः ॥ ३९ ॥ दध्यक्षतवदराद्याः पिण्डा नान्दीमुखान्पितॄन् ॥
आवाहयिष्ये पृच्छेच्च प्रीयन्तामिति चाक्षये ॥ ४० ॥ नान्दीमुखाश्च पितरो वाचयिष्येऽथ पृच्छति ॥ नान्दीमुखान्पितृगणा-
न्प्रीयन्तामित्यथो वदेत् ॥ ४१ ॥ नान्दीमुखाश्च पितरस्तत्पिता प्रपितामहः ॥ मातामहः प्रमातामहो वृद्धप्रमातामहः ॥ ४२ ॥
स्वधाकारं न युञ्जीत युग्मान्विप्रांश्च भोजयेत् ॥ तृप्तिं वक्ष्ये पितॄणां च ग्राम्यैरोपाधिभिस्तथा ॥ ४३ ॥ मासं तृप्तिस्तथारण्यैः कन्दमू-
लफलादीभिः ॥ मत्स्यैर्मासद्वयं मार्गैस्त्रयं वै शाकुनेन च ॥ ४४ ॥ चतुरो रौरवेणाथ पञ्च षट् छागलेन तु ॥ कौर्मेण सप्त चाष्टौ च
वाराहेण नवैव तु ॥ ४५ ॥ मेषमांसेन दश च माहिषैः पार्वतैः शिवैः ॥ संवत्सरं तु गव्येन पयसा पायसेन वा ॥४६॥ वार्ध्रीनसस्य मांसेन
तृप्तिर्द्वादशवार्षिकी ॥ खड्गमांसं कालशाकं लोहितच्छागलो मधु ॥४७॥ महाशल्काश्च वर्षासु मघाश्राद्धमथाक्षयम् ॥ मन्त्राध्याय्यग्निहोत्री च

॥ ८८ ॥

शाखाध्यायी षडङ्गवित् ॥ ४८ ॥ त्रिणाचिकेतः त्रिमधुर्धर्मद्रोणस्य पाठकः ॥ त्रिसुपर्णज्यष्ठसामज्ञानी स्युः पंक्तिपावनाः ॥ ४९ ॥
काम्यानां कल्पमाख्यास्ये प्रतिपत्सु धनं बहु ॥ स्त्रियः परा द्वितीयायां चतुर्थ्यां धर्मकामदः ॥ ५० ॥ पञ्चम्यां पुत्रकामस्तु षष्ठ्यां
च श्रैष्ठ्यभागपि ॥ कृषिभागी च सप्तम्यामष्टम्यामर्थलाभकः ॥ ५१ ॥ नवम्यां च एकशफा दशम्यां गोगणो भवेत् ॥ एकादश्यां
परिवारी द्वादश्यां धनधान्यकम् ॥ ५२ ॥ ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां च शस्त्रतः ॥ मृतानां श्राद्धं सर्वासममावास्यां समीरितम् ॥
॥ ५३ ॥ सप्त व्याधा दशारण्ये मृगाः कालञ्जरे गिरौ ॥ चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥ ५४ ॥ तेऽपि जाताः कुरुक्षेत्रे
ब्राह्मणा वेदपारगाः ॥ प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदत ॥ ५५ ॥ श्राद्धादौ पठिते श्राद्धं पूर्णं स्याद्ब्रह्मलोकदम् ॥ श्राद्धं कुर्याच्च
पुत्रादिः पितुर्जीवति तत्पितुः ॥ ५६ ॥ तत्पितुस्तत्पितुः कुर्य्याज्जीवति प्रपितामहे ॥ पितुः पितामहस्याथ परस्य प्रपितामहात् ॥ ५७ ॥
एवं मात्रादिकस्यापि तथा मातामहादिके ॥ श्राद्धकल्पं पठेद्यस्तु स लभेच्छ्राद्धकृत्फलम् ॥ ५८ ॥ तीर्थे युगादौ मन्वादौ श्राद्धं
दत्तमथाक्षयम् ॥ आश्वयुक्छुक्लनवमी द्वादशी कार्त्तिके तथा ॥ ५९ ॥ तृतीया चैव माघस्य तथा भाद्रपदस्य च ॥ फाल्गुनस्याप्य-
मावास्या पौषस्यैकादशी तथा ॥ ६० ॥ आषाढस्यापि दशमी माघमासस्य सप्तमी ॥ श्रावणे चाष्टमी कृष्णा तथाषाढे च पूर्णिमा ॥
॥ ६१ ॥ कार्त्तिकी फाल्गुनी तद्वज्ज्येष्ठे पञ्चदशी सिता ॥ स्वायंभुवाद्या मनवस्तेषामाद्याः किलाक्षयाः ॥ ६२ ॥ गया प्रयागो गङ्गा च
कुरुक्षेत्रं च नर्म्मदा ॥ श्रीपर्वतः प्रभासश्च शालग्रामो वाराणसी ॥ गोदावरी तेषु श्राद्धं श्रीपुरुषोत्तमादिषु ॥ ६३ ॥ इत्यादिमहापुराणे
आग्नेये श्राद्धकल्पो नाम सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ अथ भारतवर्षवर्णनम् ॥ अग्निरुवाच ॥ उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव
दक्षिणम् ॥ वर्षं तद्भारतं नाम नवसाहस्रविस्तृतम् ॥ १ ॥ कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम् ॥ महेन्द्रो मलयः सह्यः शुक्तिमान्हेम-
पर्वतः ॥ २ ॥ विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः ॥ इन्द्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान् ॥ ३ ॥ नागद्वीपस्तथा सौम्यो
गान्धर्वस्त्वथ वारुणः ॥ अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ॥ ४ ॥ योजनानां सहस्राणि द्वीपोऽयं दक्षिणोत्तरात् । नव भेदा भारत-
स्य मध्यभेदेऽथ पूर्वतः ॥ ५ ॥ किराता यवनाश्चापि ब्राह्मणाद्याश्च मध्यतः ॥ वेदस्मृतिमुखा नद्यः पारियात्रोद्भवास्तथा ॥ ६ ॥





विन्ध्याच्च नर्मदाद्याः स्युः सह्यात्तापी पयोष्णिका । गोदावरी भीमरथी कृष्णवेणादिकास्तथा ॥ ७ ॥ मलयात्कृतमालाद्यास्त्रिसामाद्या
महेन्द्रजाः । कुमाराद्याः शुक्तिमतो हिमाद्रेश्चन्द्रभागका ॥ पश्चिमे कुरुपाञ्चालमध्यदेशादयः स्थिताः ॥ ८ ॥ इत्यादिमहापुराणे
आग्नेये भारतवर्षवर्णनं नामाऽष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥ अथ महाद्वीपादिवर्णनम् ॥ अग्निरुवाच ॥ लक्षयो-
जनविस्तारं जम्बूद्वीपं समावृतम् ॥ लक्षयोजनमानेन क्षारोदेन समन्ततः ॥ १ ॥ संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः ॥
सप्त मेधातिथेः पुत्रा प्लक्षद्वीपेश्वरास्तथा ॥ २ ॥ स्याच्छान्तभयः शिशिरः सुखोदय इतः परः ॥ आनन्दश्च शिवः
क्षेमो ध्रुवस्तन्नामवर्षकम् ॥ ३ ॥ मर्य्यादाशैलो गोमेधश्चन्द्रो नारददुन्दुभी ॥ सोमकः सुमनाः शैलो वैभ्राजास्तज्जनाः शुभाः ॥
॥ ४ ॥ नद्यः प्रधानाः सप्तात्र प्लक्षाच्छाकान्तिकेषु च ॥ जीवनं पञ्चसाहस्रं धर्मो वर्णाश्रमात्मकः ॥ ५ ॥ आर्य्यकाः कुरवश्चैव विविंशा
भाविनश्च ते ॥ विप्राद्यास्तैश्च सोमोऽर्च्यो द्विलक्षश्चाब्धिलक्षकः ॥ ६ ॥ मानेनेक्षुरसोदेन वृतो द्विगुणशाल्मलः ॥ वपुष्मतः सप्त पुत्राः
शाल्मलेशास्तथाभवन् ॥ ७ ॥ श्वेतोऽथ हारितश्चैव जीमूतो लोहितः क्रमात् ॥ वैद्युतो मानसश्चैव सुप्रभो नाम वर्षकः ॥ ८ ॥ द्विगुणो
द्विगुणेनैव सुरोदेन समावृतः ॥ कुमुदश्चानलश्चैव तृतीयस्तु बलाहकः ॥ ९ ॥ द्रोणः कङ्कोऽथ महिषः ककुद्मान् सप्त निम्नगाः ॥ कपिला-
श्चारुणाः पीताः कृष्णाः स्युर्ब्राह्मणादयः ॥ १० ॥ वायुरूपं यजन्ति स्म सुरोदेनायमावृतः ॥ ज्योतिष्मतः कुशेशाः स्युरुद्भिदो धेनुमान्
सुतः ॥ ११ ॥ द्वैरथो लम्बनो धैर्य्यः कपिलश्च प्रभाकरः ॥ विप्राद्या दधिमुख्यास्तु ब्रह्मरूपं यजन्ति ते ॥ १२ ॥ विद्रुमो हेमशैलश्च
द्युतिमान्पुष्पवांस्तथा ॥ कुशेशयो हरिः शैलो वर्षार्थं मन्दराचलः ॥ १३ ॥ वेष्टितोऽयं घृतोदेन क्रौञ्चद्वीपेन सोऽप्यथ ॥ क्रौञ्चेश्वराः
द्युतिमतः पुत्रास्तन्नामवर्षकाः ॥ १४ ॥ कुशलो मनोनुगश्चोष्णः प्रधानोऽथान्धकारकः ॥ मुनिश्च दुन्दुभिः सप्त सप्त शैलाश्च निम्नगाः ॥
॥ १५ ॥ क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः ॥ देवावृत्पुण्डरीकश्च दुन्दुभिर्द्विगुणो मिथः ॥ १६ ॥ द्वीपा द्वीपेषु ये शैला यथा-
द्वीपानि ते तथा ॥ पुष्कराः पुष्कला धन्यास्तीर्था विप्रादयो हरिम् ॥ १७ ॥ यजन्ति क्रौञ्चद्वीपस्तु दधिमण्डोदकावृतः ॥ संवृतः शाक-
द्वीपेन हव्याच्छाकेश्वराः सुताः ॥ १८ ॥ जलदश्च कुमारश्च सुकुमारो मणीवकः ॥ कुशोत्तरोऽथ मोदाकी द्रुमस्तन्नामवर्षकाः ॥ १९ ॥

उदयाख्यो जलधरो रैवतः श्यामकोद्रको ॥ आम्बिकेयस्तथा रम्यः केसरी सप्त निम्नगाः ॥ २० ॥ मगा मगधमानस्या मन्दगाश्च द्विजातयः ॥ यजन्ति सूर्य्यरूपं तु शाकः क्षीराब्धिना वृतः ॥ २१ ॥ पुष्करेणावृतः सोऽपि द्वौ पुत्रौ सवनस्य च ॥ महावीतो धातकिश्च वर्षे द्वे नामचिह्निते ॥२२॥ एकोऽद्रिर्म्मानसाख्योऽत्र मध्यतो वलयाकृतिः ॥ योजनानां सहस्राणि विस्तारोच्छ्रायतः समः ॥२३ ॥ जीवनं दशसाहस्रं सुरैर्ब्रह्मात्र पूज्यते ॥ स्वादूदकेनोदधिना वेष्टितो द्वीपमानतः ॥२४॥ ऊनातिरिक्तता चापां समुद्रेषु न जायते ॥ उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥२५॥ दशोत्तराणि पञ्चैव अङ्गुलानां शतानि वै ॥ अपां वृद्धिक्षयौ दृष्टौ सामुद्राणां महामुने ॥ २६ ॥ स्वादूदका बहुगुणा भूर्हैमी जन्तुवर्ज्जिता ॥ लोकालोकस्ततः शैलो योजनायुतविस्तृतः ॥२७॥ लोकालोकस्तु तमसाऽऽवृतोऽथाण्डकटाहतः ॥ भूमिः साण्डकटाहेन पञ्चाशत्कोटिविस्तृता ॥२८॥ इत्यादिमहापुराणे आग्नेये महाद्वीपादिवर्णनं नामैकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९॥

अथ भुवनकोशवर्णनम् ॥ अग्निरुवाच ॥ विस्तारस्तु स्मृतो भूमेः सहस्राणि च सप्ततिः ॥ उच्छ्रायो दशसाहस्रं पातालं चैकमेककम् ॥ ॥ १ ॥ अतलं वितलं चैव नितलं च गभस्तिमत् ॥ महाख्यं सतलं चाग्र्यं पातालं चापि सप्तमम् ॥ २ ॥ कृष्णपीतारुणाः शुक्लशर्करा-शैलकाञ्चनाः ॥ भूमयस्तेषु रम्येषु सन्ति दैत्यादयः सुखम् ॥ ३ ॥ पातालानामधश्चास्ते शेषो विष्णुश्च तामसः ॥ गुणानन्त्यान्स चानन्तः शिरसा धारयन्महीम् ॥ ४ ॥ भुवोऽधो नरका नैके न पतेत्तत्र वैष्णवः ॥ रविणा भासिता पृथ्वी यावत्तावन्नभो मतम् ॥ ५ ॥ भूमेर्योजनलक्षं तु वसिष्ठ रविमण्डलम् ॥ रवेर्लक्षेण चन्द्रश्च लक्षान्नाक्षत्रमिन्दुतः ॥६॥ द्विलक्षाद्भाद्बुधश्चास्ते बुधाच्छुक्रो द्विलक्षतः ॥ द्विलक्षेण कुजः शुक्राद्भौमाद्विलक्षतो गुरुः ॥७॥ गुरोर्द्विलक्षतः सौरिर्लक्षात्सप्तर्षयः शनेः ॥ लक्षाद्ध्रुवो ह्यृषिभ्यस्तु त्रैलोक्यं चोच्छ्रयेण च ॥ ॥ ८ ॥ ध्रुवात्कोट्या महर्ल्लोको यत्र ते कल्पवासिनः ॥ जनो द्विकोटितस्तस्माद्यत्रासन्सनकादयः ॥ ९ ॥ जनात्तपश्चाष्टकोट्या वैराजा यत्र देवताः ॥ षण्णवत्या तु कोटीनां तपसः सत्यलोककः ॥ १० ॥ अपुनर्म्मारका यत्र ब्रह्मलोको हि स स्मृतः ॥ पादगम्यस्तु भूर्ल्लोको भुवः सूर्य्यान्तरः स्मृतः ॥ ११ ॥ स्वर्गलोको ध्रुवान्तस्तु नियुतानि चतुर्दश ॥ एतदण्डकटाहेन वृतो ब्रह्माण्डविस्तरः ॥ १२ ॥ वारि-वह्न्यनिलाकाशैस्ततो भूतादिना बहिः ॥ वृतं दशगुणैरण्डं भूतादिर्म्महता तथा ॥ १३ ॥ दशोत्तराणि शेषाणि एकैकस्मान्महामुने ॥

महान्तं च समावृत्य प्रधानं समवस्थितम् ॥ १४ ॥ अनन्तस्य न तस्यान्तः सङ्ख्यानां नापि विद्यते ॥ हेतुभूतमशेषस्य प्रकृतिः सा परा
मुने ॥ १५ ॥ असंख्यातानि चाण्डानि तत्र जातानि चेदृशाम् ॥ दारुण्यग्निर्यथा तैलं तिले तद्वत्पुमानिति ॥ १६ ॥ प्रधाने च स्थितो
व्यापी चेतनात्मात्मवेदनः ॥ प्रधानं च पुमांश्चैव सर्व्वभूतात्मभूतया ॥ १७ ॥ विष्णुशक्त्या महाप्राज्ञ वृतौ संश्रयधर्म्मिणौ ॥ तयोः सैव
पृथग्भावे कारणं संश्रयस्य च ॥ १८ ॥ क्षोभकारणभूतश्च सर्गकाले महामुने ॥ १९ ॥ जगच्छक्तिस्तथाविष्णोः प्रधानप्रतिपादिकाम् ॥
विष्णुशक्तिं समासाद्य देवाद्याः सम्भवन्ति हि ॥ २० ॥ स च विष्णुः स्वयं ब्रह्म यतः सर्व्वमिदं जगत् ॥ योजनानां सहस्राणि भास्क-
रस्य रथो नव ॥२१॥ ईशादण्डस्तथैवास्य द्विगुणो मुनिसत्तम ॥ सार्द्धकोटिस्तथा सप्त नियुतान्यधिकानि वै ॥२२॥ योजनानां तु तस्या-
क्षस्तत्र चक्रं प्रतिष्ठितम् ॥ त्रिनाभी मतिपञ्चारं षण्णेमि द्व्ययनात्मकम् ॥२३॥ संवत्सरमयं कृत्स्नं कालचक्रं प्रतिष्ठितम् ॥ चत्वारिंशत्स-
हस्राणि द्वितीयाक्षो विवस्वतः ॥२४॥ पञ्चान्यानि तु सार्द्धानि स्यन्दनस्य महामते ॥ अक्षप्रमाणमुभयोः प्रमाणं तद्युगार्द्धयोः ॥२५॥ ह्रस्वोऽ-
क्षस्तद्युगार्द्धं च ध्रुवाधारं रथस्य वै ॥ हयाश्च सप्त च्छन्दांसि गायत्र्यादीनि सुव्रत ॥ २६ ॥ उदयास्तमनं ज्ञेयं दर्शनादर्शनं रवेः ॥ यावन्मा-
त्रप्रदेशे तु वसिष्ठाऽवस्थितो ध्रुवः ॥ २७ ॥ स्वयमायाति तावत्तु भूमेराभूतसंप्लवे ॥ ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः ॥ २८ ॥
एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम् ॥ निर्धूतदोषपङ्कानां यतीनां स्थानमुत्तमम् ॥ २९ ॥ ततो गङ्गा प्रभवति सर्वपापप्रणाशि-
नी ॥ दिवि रूपं हरेर्ज्ञेयं शिशुमाराकृति प्रभो ॥ ३० ॥ स्थितः पुच्छे ध्रुवस्तत्र भ्रमन्भ्रामयति ग्रहान् ॥ स रथोऽधिष्ठितो देवैरादि-
त्यैर्ऋषिभिर्वरैः ॥ ३१ ॥ गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः ॥ हिमोष्णवारिवर्षाणां कारणं भगवान्रविः ॥ ३२ ॥ ऋग्वेदादिमयो विष्णुः
स शुभाशुभकारणम् ॥ रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः ॥ ३३ ॥ वामदक्षिणतो युक्ता दश तेन चरत्यसौ ॥ त्रयस्त्रिंश-
त्सहस्राणि त्रयस्त्रिंशच्छतानि च ॥ ३४ ॥ त्रयस्त्रिंशत्तथा देवाः पिबन्ति क्षणदाकरम् ॥ एकां कलां च पितर एकामारश्मिसंस्थिताः ॥
॥ ३५ ॥ वाय्वग्निद्रव्यसम्भूतो रथश्चन्द्रसुतस्य च ॥ अष्टाभिस्तुरगैर्युक्तो बुधस्तेन चरत्यपि ॥ ३६ ॥ शुक्रस्यापि रथोऽष्टाश्वो भौम-
स्यापि रथस्तथा ॥ बृहस्पते रथोऽष्टाश्वः शनेरष्टाश्वको रथः ॥ ३७ ॥ स्वर्भानोश्च रथोऽष्टाश्वः केतोश्चाष्टाश्वको रथः ॥ यत्र

वैष्णवः कायस्ततो विप्र वसुन्धरा ॥ ३८ ॥ पद्माकारा समुद्भूता पर्वताद्यादिसंयुता ॥ ज्योतिर्भुवननद्यदिसमुद्रवनकं हरिः ॥ ३९ ॥ यदस्ति नास्ति तद्विष्णुर्विष्णुज्ञानविजृम्भितम् ॥ न विज्ञानमृते किञ्चिज्ज्ञानं विष्णुः परम्पदम् ॥ ४० ॥ तत्कुर्य्याद्येन विष्णुः स्यात्सत्यं ज्ञानमनन्तकम् ॥ पठेद्भुवनकोशं हि यः सोऽवाप्तसुखात्मभाक् ॥ ज्योतिःशास्त्रादिविद्याश्च शुभाशुभाधिपो हरिः ॥ ४१ ॥ इत्यादिमहापुराणे आग्नेये भुवनकोशवर्णनं नाम विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥ अथ ज्योतिःशास्त्रसारः ॥ अग्निरुवाच ॥ ज्योतिःशास्त्रं प्रवक्ष्यामि शुभाशुभविवेकदम् ॥ चातुर्लक्षस्य सारं यत्तज्ज्ञात्वा सर्वविद्भवेत् ॥ १ ॥ षडष्टके विवाहो न न च द्विद्वादशे स्त्रियाः ॥ न त्रिकोणे ह्यथ प्रीतिः शेषे च समसतके ॥ २ ॥ द्विद्वादशे त्रिकोणे च मैत्रीक्षेत्रपयोर्यदि ॥ भवेदेकाधिपत्यं च ताराप्रीतिरथापि वा ॥ ॥ ३ ॥ तथापि कार्य्यः संयोगो न तु षट्काष्टके पुनः ॥ जीवे भृगौ चास्तमिते म्रियते च पुमान्स्त्रिया ॥ ४ ॥ गुरुक्षेत्रगते सूर्ये सूर्य्यक्षेत्रगते गुरौ ॥ विवाहं न प्रशंसन्ति कन्यावैधव्यकृद्भवेत् ॥ ५ ॥ अतिचारे त्रिपक्षं स्याद्वक्रे मासचतुष्टयम् ॥ व्रतोद्वाहौ न कुर्व्वीत गुरोर्वक्रातिचारयोः ॥ ६ ॥ चैत्रे पौषे न रिक्तासु हरौ सुते कुजे रवौ ॥ चन्द्रक्षये चाशुभं स्यात्सन्ध्याकालः शुभावहः ॥ ७ ॥ रोहिणी चोत्तरा मूलं स्वाती हस्तोऽथ रेवती ॥ तुले न ( च ) मिथुने शस्तो विवाहः परकीर्त्तितः ॥८॥ विवाहे कर्णवेधे च व्रते पुंसवने तथा ॥ प्राशने चाद्यचूडायां विद्धर्क्षं च विवर्जयेत् ॥ ९ ॥ श्रवणे मूलपुष्ये च सूर्य्यमङ्गलजीवके ॥ कुम्भे सिंहे च मिथुने कर्म्म पुंसवनं स्मृतम् ॥ १० ॥ हस्ते मूले मृगे पौष्णे बुधे शुक्रे च निष्कृतिः ॥ अर्केन्दुजीवभृगुजे मूले ताम्बूलभक्षणम् ॥ ११ ॥ अन्नस्य प्राशनं शुक्रे जीवे मृगे च मीनके ॥ हस्तादिपञ्चके पुष्ये कृत्तिकादित्रये तथा ॥ १२ ॥ आश्विन्यामथ रेवत्यां नवान्नफलभक्षणम् ॥ पुष्यो हस्तस्तथा ज्येष्ठा रोहिणी श्रवणाश्विनौ ॥ १३ ॥ स्वातिसौम्ये च भैषज्यं कुर्य्यादन्यत्र वर्जयेत् ॥ पूर्वात्रयं मघा याम्यं पावनं श्रवणत्रयम् ॥ १४ ॥ भौमादित्ये शनैर्वारे स्नातव्यं रोगमुक्तितः ॥ पार्थिवे चाष्टहींकारं मध्ये नाम च दिक्षु च ॥ १५ ॥ हीं पुटं पार्थिवे दिक्षु हीं विदिक्षु लिखेद्वसून् ॥ गोरोचनाकुंकुमेन भूर्जे वस्त्रे गले धृतम् ॥ १६ ॥ शत्रवो वशमायान्ति मन्त्रेणानेन निश्चितम् ॥ श्रीं हीं सम्पुटं नाम श्रीं हीं पत्राष्टके क्रमात् ॥ १७ ॥ गोरोचनाकुंकुमेन भूर्जेऽथ सुभगावृते ॥ गोमध्यवागमः पत्रे हरिद्राया रसेन च ॥ १८ ॥ शिलापटेऽरीन्स्तम्भ-

याति भूमावधोमुखीकृतम् ॥ ॐ हूँ सः सम्पुटं नाम ॐ हूं सः पत्राष्टके क्रमात् ॥ १९ ॥ गोरोचनाकुङ्कुमेन भूर्जे मृत्युनिवारणम् ॥ एक-
पञ्चनवप्रीत्यै द्विषड्द्वादशयोगकः ॥ २० ॥ त्रिसप्तैकादशे लाभो वेदाष्टद्वादशे रिपुः ॥ तनुर्धनं च सहजः सुहृत्सुतो रिपुस्तथा ॥ २१ ॥
जाया निधनधर्म्मौ च कर्म्मायव्ययकं क्रमात् ॥ स्फुटं मेषादिलग्नेषु नवताराबलं वदेत् ॥ २२ ॥ जन्म सम्पद्विपत्क्षेमं प्रत्यारिः साधकः
क्रमात् ॥ निधनं मित्रपरमामित्रं ताराबलं विदुः ॥ २३ ॥ वारे ज्ञगुरुशुक्राणां सूर्य्याचन्द्रमसोस्तथा ॥ माघादिमासषट्के तु क्षौरमाद्यं
प्रशस्यते ॥ २४ ॥ कर्णवेधो बुधे जीवे पुष्ये श्रवणचित्रयोः ॥ पञ्चमेऽब्दे चाध्ययनं षष्ठीं प्रतिपदं त्यजेत् ॥ २५ ॥ रिक्तां पञ्चदर्शी
भौमं प्राच्यं वार्णीं हरिं श्रियम ॥ माघादिमासषट्के तु मेखलाबन्धनं शुभम् ॥ २६ ॥ चूडाकरणकार्यं च श्रावणादौ न शस्यते ॥
अस्तं याते गुरौ शुक्रे क्षीणे च शशलाञ्छने ॥ २७ ॥ उपनीतस्य विप्रस्य मृत्युं जाड्यं विनिर्दिशेत् ॥ क्षौरर्क्षे शुभवारे च समावर्त-
नमिष्यते ॥ २८ ॥ शुभक्षेत्रे विलग्नेषु शुभयुक्तेक्षितेषु च ॥ अश्विनीमघाचित्रासु स्वातीयाम्योत्तरासु च ॥ ,२९ ॥ पूनर्वसौ तथा पुष्ये
धनुर्वेदः प्रशस्यते ॥ भरण्यार्द्रा मघाश्लेषा वह्निभर्गर्क्षयोस्तथा ॥ ३० ॥ जिजीविषुर्न्न कुर्वीत वस्त्रप्रावरणं नरः ॥ गुरौ शुक्रे बुधे वस्त्रं
विवाहादौ न भादिकम् ॥ ३१ ॥ रेवत्यश्विधनिष्ठासु हस्तादिषु च पञ्चसु ॥ शंखविद्रुमरत्नानां परिधानं प्रशस्यते ॥ ३२ ॥ याम्य-
सर्पधनिष्ठासु त्रिषु पूर्वेषु वारुणे ॥ क्रीतं हानिकरं द्रव्यं विक्रीतं हानिकृद्भवत् ॥ ३३ ॥ आश्विनीस्वातीचित्रासु रेवत्यां वारुणे हरौ ॥
क्रीतं लाभकरं द्रव्यं विक्रीतं हानिकृद्भवत् ॥ ३४ ॥ भरणी त्रीणि पूर्वाणि आर्द्राश्लेषामघानिलाः ॥ वह्निज्येष्ठाविशाखासु स्वामिनो
नोपतिष्ठते ॥ ३५ ॥ द्रव्यं दत्तं प्रयुक्तं वा यत्र निक्षिप्यते धनम् ॥ उत्तरे श्रवणे शाक्रे कुर्याद्राजाभिषेचनम् ॥ ॥ ३६ ॥ चैत्रं ज्येष्ठं तथा
भाद्रमाश्विनं पौषमेव च ॥ माघं चैव परित्यज्य शेषमासे गृहं शुभम् ॥ ३७॥ अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम् ॥ स्वाती
हस्तानुराधा च गृहारम्भे प्रशस्यते ॥ ३८ ॥ आदित्यभौमवर्जं तु वापीप्रासादके तथा ॥ सिंहराशिगते जीवे गुर्वादित्ये मलिम्लुचे ॥
॥ ३९ ॥ बाले वृद्धेऽस्तगे शुक्रे गृहकर्म्म विवर्जयेत् ॥ अग्निदाहो भयं रोगो राजपीडा धनक्षतिः ॥ ४० ॥ संग्रहे तृणकाष्ठानां कृते
श्रवणपञ्चके ॥ गृहप्रवेशनं कुर्य्याद्धनिष्ठोत्तरवारुणे ॥ ४१ ॥ नौकाया घटने द्वित्रिपञ्चसप्तत्रयोदशी ॥ नृपदर्शो धनिष्ठासु हस्तपौष्णा- ॥ ९१ ॥

श्विनीषु च ॥ ४२ ॥ पूर्वात्रयं धनिष्ठार्द्रा वह्निः सौम्यविशाखयोः ॥ आश्लेषा चाश्विनी चैव यात्रासिद्धिस्तु सम्पदा ॥ ४३ ॥ त्रिषू-
त्तरेषु रोहिण्यां सिनिवाली चतुर्दशी ॥ श्रवणं चैव हस्तो वै चित्रा वै वैष्णवी तथा ॥ ४४ ॥ गोष्ठयात्रां न कुर्वीत
प्रवेशं नैव कारयेत् ॥ अनिलोत्तररोहिण्यां मृगमूलपुनर्वसौ ॥ ४५ ॥ पुष्यश्रवणहस्तेषु कृषिकर्म्म समाचरेत् ॥ पुनर्वसूत्तरास्वाती-
भगमूलेन्द्रवारुणे ॥ ४६ ॥ गुरोः शुक्रस्य वारे वा वारे वा सोमभास्वतोः ॥ वृषलग्ने च कर्त्तव्यं कन्यायां मिथुने तथा ॥ ४७ ॥ द्विपञ्च
दशमी सप्त तृतीया च त्रयोदशी ॥ रेवतीरोहिणीन्द्राग्निहस्तमैत्रोत्तरेषु च ॥ ४८ ॥ मन्दारवर्ज्जबीजानि वापयेत्सम्पदर्थ्यपि ॥ रेवतीहस्त-
मूलेषु श्रवणे भगमैत्रयोः ॥ ४९ ॥ पितृदैवे तथा सौम्ये धान्यच्छेदं मृगोदये ॥ हस्तचित्रादितिस्वातीरेवतीश्रवणत्रये ॥ ५० ॥ स्थिरे
लग्ने गुरोर्वारेऽथ वा भार्गवसौम्ययोः ॥ याम्यादितिमघाज्येष्ठासूत्तरेषु प्रवेशयेत् ॥ ५१ ॥ ओं धनदाय सर्व्वधनेशाय देहि मे धनं स्वाहा ॥
ओं नवे वर्षे इलादेवि लोकसंवर्द्धनि कामरूपिणि देहि मे धनं (धान्यं) स्वाहा ॥ पत्रस्थं लिखितं धान्यराशिस्थं धान्यवर्द्धनम् ॥
त्रिपूर्वासु विशाखायां धनिष्ठावारुणेऽपि च ॥ ५२ ॥ एतेषु पट्सु विज्ञेयं धान्यनिष्क्रमणं बुधैः ॥ देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ
॥ ५३ ॥ मिथुनस्थे रवौ दर्शाद्यदि स्याद्द्वादशी तिथिः । सदा तत्रैव कर्त्तव्यं शयनं चक्रपाणिनः ॥ ५४॥ सिंहं तौलिं गते चार्के दर्शाद्द्वा-
दशीद्वयम् ॥ आदाविन्द्रसमुत्थानं प्रबोधश्च हरेः क्रमात् ॥ ५५ ॥ तथा कन्यागते भानौ दुर्गोत्थाने तथाष्टमी ॥ त्रिपादेषु च ऋक्षेपु
यदा भद्रा तिथिर्भवेत् ॥ ५६ ॥ भौमादित्यशनैश्चारि विज्ञेयं तत्त्रिपुष्करम् ॥ सर्वकर्म्मण्युपादेया विशुद्धिश्चन्द्रतारयोः ॥ ५७ ॥ जन्मा-
श्रितास्त्रिषष्ठश्च सप्तमो दशमस्तथा ॥ एकादशः शशी येषां तेषामेव शुभं वदेत् ॥ ५८ ॥ शुक्लपक्षे द्वितीयश्च पञ्चमो नवमः शुभः ॥
मित्रातिमित्रसाधकसम्पत्क्षेमादितारकाः ॥ ५९ ॥ जन्मना मृत्युमाप्नोति विपदा धनसङ्क्षयम् ॥ प्रत्यरौ मरणं विद्यान्निधने याति पञ्चताम्
॥ ६० ॥ कृष्णाष्टमीदिनादूर्द्ध्वं यावच्छुक्लाष्टमीदिनम् ॥ तावत्कालं शशी क्षीणः पूर्णस्तत्रोपरि स्मृतः ॥ ६१ ॥ वृषे च मिथुने भानौ जीवे
चन्द्रेन्द्रदैवते ॥ पौर्णमासी गुरोर्वारे महाज्येष्ठी प्रकीर्त्तिता ॥ ६२ ॥ ऐन्द्रो गुरुः शशी चैव प्राजापत्ये रविस्तथा ॥ पूर्णिमा ज्येष्ठमासस्य
महाज्यैष्ठी प्रकीर्तिता ॥ ६३ ॥ स्वात्यन्तरे यन्त्रनिष्ठे शक्रस्योत्थापयेद्ध्वजम् ॥ हर्य्यृक्षपादे चाश्विन्यां सप्ताहान्ते विसर्जयेत् ॥ ६४ ॥

सर्वं हेमसमं दानं सर्वे ब्रह्मसमा द्विजाः ॥ सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ॥ ६५ ॥ ध्वाङ्क्षी महोदरी घोरा मन्दा मन्दाकिनी
द्विजाः ॥ राक्षसी च क्रमेणार्कात्संक्रान्तिर्नामभिः स्मृता ॥ ६६ ॥ बालवे कौलवे नागे-तैतिले करणे यदि ॥ उत्तिष्ठन्सङ्क्रमत्यर्कस्तदा
लोकः सुखी भवेत् ॥ ६७ ॥ गरे बवे वणिग्विष्टौ किंस्तुघ्ने शकुनौ व्रजेत् ॥ राज्ञो दोषेण लोकोऽयं पीड्यते सम्पदा समम्
॥ ६८ ॥ चतुष्पाद्विष्टिवाणिज्ये शायितः सङ्क्रमेद्रविः ॥ दुर्भिक्षं राजसङ्ग्रामो दम्पत्योः संशयो भवेत् ॥ ६९ ॥ आधाने
जन्मनक्षत्रे व्याधौ क्लेशादिकं भवेत् ॥ कृत्तिकायां नवादिनं त्रिरात्रं रोहिणीषु च ॥ ७० ॥ मृगशिरः पञ्चरात्रमार्द्रासु प्राणनाशनम् ॥ पुन-
र्वसौ च पुष्ये च सप्तरात्रं विधीयते ॥ ७१ ॥ नवरात्रं तथाश्लेषा श्मशानान्तं मघासु च ॥ द्वौ मासौ पूर्वफाल्गुन्यामुत्तरासु त्रिपञ्चकम् ॥
॥ ७२ ॥ हस्ते तु दृश्यते चित्रा ह्यर्द्धमासं तु पीडनम् ॥ मासद्वयं तथा स्वातीविशाखा विंशतिर्दिनम् ॥ ७३ ॥ मैत्रे चैव दशाहानि
ज्येष्ठास्वेवार्द्धमासकम् ॥ मूले न जायते मोक्षः पूर्वाषाढा त्रिपञ्चकम् ॥ ७४ ॥ उत्तरा दिनाविंशत्या द्वौ मासौ श्रवणेन च ॥ धनिष्ठा
चार्द्धमासं च वारुणे च दशाहकम् ॥ ७५ ॥ न च भाद्रपदे मोक्ष उत्तरासु त्रिपञ्चकम् ॥ रेवती दशरात्रं च अहोरात्रं तथाश्विनी
॥ ७६ ॥ भरण्यां प्राणहानिः स्याद्गायत्रीहोमतः शुभम् । पञ्चधान्यतिलाज्याद्यैर्धेनुदानं द्विजे शुभम् ॥ ७७ ॥ दशा सूर्यस्य षष्ठाब्दा
इन्दोः पञ्चदशैव तु ॥ अष्टौ वर्षाणि भौमस्य दशसप्त दशा बुधे ॥ ७८ ॥ दशाब्दानि दशा पङ्गोरूनविंशद्गुरोर्दशा ॥ राहोर्द्वादश
वर्षाणि भार्गवस्यैकविंशतिः ॥ ७९ ॥ इत्यादिमहापुराणे आग्नेये ज्योतिःशास्त्रसारो नामैकाविंशत्याधिकशततमोऽध्यायः ॥ १२१ ॥
अथ कालगणनम् ॥ अग्निरुवाच ॥ कालः समागणो वक्ष्ये गणितं कालबुद्धये ॥ कालः समागणोऽर्कघ्नो मासैश्चैत्रादिभिर्युतः ॥ १ ॥
द्विघ्नो द्विष्ठः सवेदः स्यात्पञ्चाङ्गाष्टयुतो गुणः ॥ त्रिष्ठो मध्यो वसुगुणः पुनर्वेदगुणश्च सः ॥ २ ॥ अष्टरन्ध्राग्निहीनः स्यादधः सैकरसाष्टकैः ॥
मध्यो हीनः षष्टिहतो लब्धयुक्तस्तथोपरि ॥ ३ ॥ न्यूनः सप्तकृतो वारस्तदधस्तिथिनाडयः ॥ सुगुणो द्विगुणश्चोर्द्ध त्रिभिरूनो गुणः पुनः ॥
॥ ४ ॥ अधः खरामसंयुक्तो रसार्काष्टफलैर्युतः ॥ अष्टाविंशच्छेषपिण्डस्तिथिनाड्या अधः स्थितः ॥ ५ ॥ गुणस्तिसृभिरूनोर्द्ध द्वाभ्यां
च गुणयेत्पुनः ॥ मध्ये रुद्रगुणः कार्य्यो ह्यधः सैको नवाग्निभिः ॥ ६ ॥ लब्धहीनो भवेन्मध्यो द्वाविंशतिविवर्जितः ॥ षष्टिशेषे ऋणं ज्ञेयं

लब्धमूर्द्धं विनिःक्षिपेत् ॥ ७ ॥ सप्तविंशतिशेषस्तु ध्रुवो नक्षत्रयोगयोः ॥ मासि मासि क्षिपेद्वारं द्वात्रिंशद्घटिकास्तिथौ ॥ ८ ॥ द्वे पिण्डे द्वे च नक्षत्रे नाड्य एकादश ह्यृणे ॥ वारस्थाने तिथिं दद्यात्सप्तभिर्भागमाहरेत् ॥ ९ ॥ शेषवाराश्च सूर्य्याद्या घटिकासु च पातयेत् ॥ पिण्डकेषु तिथिं दद्याद्धरेच्चैव चतुर्दश ॥ १० ॥ ऋणं धनं धनमृणं क्रमाज्ज्ञेयं चतुर्दशे ॥ प्रथमे त्रयोदशे पञ्च द्वितये द्वादशे दश ॥ ११ ॥ पञ्चदशस्तृतीये च तथा चैकादशे स्मृतम् ॥ चतुर्थे दशमे चैव भवेदेकोनविंशतिः ॥ १२ ॥ पञ्चमे नवमे चैव द्वाविंशतिरुदाहृताः ॥ षष्ठाष्टमे त्वखण्डाः स्युश्चतुर्विंशतिरेव च ॥ १३ ॥ सप्तमे पञ्चविंशः स्यात्खण्डशः पिण्डकाद्भवेत् ॥ कर्कटादौ हरेद्राशिमृतुवेदत्रयैः क्रमात् ॥ १४ ॥ तुलादौ प्रातिलोम्येन त्रयो वेदरसाः क्रमात् ॥ मकरादौ दीयते च रसवेदत्रयः क्रमात् ॥ १५ ॥ मेषादौ प्रातिलोम्येन त्रयो वेदरसाः क्रमात् ॥ खेषवः खयुगा मैत्रं मेषादौ विकला धनम् ॥ १६ ॥ कर्कटे प्रातिलोम्यं स्यादृणमेतत्तुलादिके ॥ चतुर्गुणा तिथिर्ज्ञेया विकलाश्चेह सर्वदा ॥ १७ ॥ हन्याल्लिप्तागतागामिपिण्डसङ्ख्याफलान्तरैः ॥ षष्ट्याप्तं प्रथमोच्चार्य्यैं हानौ देयं धने धनम् ॥ १८ ॥ द्वितीयोच्चारिते वर्गे वैपरीत्यमिति स्थितिः ॥ तिथिर्द्विगुणिता कार्य्या षड्भागपरिवर्जिता ॥ १९ ॥ रविकर्म्मविपरीता तिथिनाडीसमायुता ॥ ऋणे शुद्धे तु नाड्यः स्युरृणं शुध्येत नो यदा ॥ २० ॥ सषष्टिकं प्रदेयं तत्षष्ट्याधिक्ये च तत्त्यजेत् ॥ नक्षत्रं तिथिमिश्रं स्याच्चतुर्भिर्गुणिता तिथिः ॥ २१ ॥ तिथिस्त्रिभागसंयुक्ता ह्यृणेन च तथान्विता ॥ तिथिरत्र चिता कार्य्या तद्भेदाद्योगशोधनम् ॥ २२ ॥ रविचन्द्रौ समौ कृत्वा योगो भवति निश्चलः ॥ एकोना तिथिर्द्विगुणा सप्तभिन्नाकृतिर्द्विधा ॥ २३ ॥ तिथिश्च द्विगुणैकोना कृताङ्गैः करणं निशि ॥ कृष्ण-चतुर्दश्यन्ते शकुनिः पर्वणीह चतुष्पदम् ॥ प्रथमे तिथ्यर्द्धतो हि किंस्तुघ्नं प्रतिपन्मुखे ॥ २४ ॥ इत्यादिमहापुराणे आग्नेये कालगणनं नाम द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥ अथ युद्धजयार्णवे नानायोगाः ॥ अग्निरुवाच ॥ वक्ष्ये जयशुभाद्यर्थं सारं युद्धजयार्णवे ॥ अइउएओ स्वराः स्युः क्रमान्नन्दादिका तिथिः ॥ १ ॥ कादिहान्ता भौमरवी ज्ञसोमौ गुरुभार्गवौ ॥ शनिर्दक्षिणनाड्यां तु भौमार्कशनयः परे ॥ २ ॥ स्वार्णवः स्वरसैर्गुण्यो रुद्रैर्भागं समाहरेत् ॥ रसाहतं तु तत्कृत्वा पूर्वभागेन भाजयेत् ॥ ३ ॥ वह्निभिश्चाहतं कृत्वा रूपं तत्रैव निःक्षिपेत् ॥ स्पन्दनं नाड्याः पलानि सप्राणस्पन्दनं पुनः ॥ ४ ॥ अनेनैव तु मानेन ह्युदयन्ति दिने दिने ॥ स्फुरणैस्त्रिभि-

रुच्छ्वास उच्छ्वासैस्तु पलं स्मृतम् ॥ ५ ॥ षष्टिभिश्च पलैर्लिप्ता लिप्ताषष्टिस्त्वहर्निशम् ॥ पञ्चमार्द्धोदये बालकुमारयुववृद्धकाः ॥ ६ ॥
मृत्युर्येनोदयस्तेन चास्तमेकादशांशकैः ॥ कुलागमे भवेद्भङ्गः समृत्युः पञ्चमोऽपि वा ॥ ७ ॥ स्वरोदयचक्रम् ॥ शनिचक्रे चार्द्धमासं
ग्रहाणामुदयः क्रमात् ॥ विभागैः पञ्चदशभिः शनिभागस्तु मृत्युदः ॥ ८ ॥ इति शनिचक्रम् ॥ दशकोटिसहस्राणि ह्यर्बुदान्यर्बुदं हरेत् ॥
त्रयोदशे च लक्षाणि प्रमाणं कूर्म्मरूपिणः ॥ ९ ॥ मघादौ कृत्तिकाद्यन्तस्तद्देशान्तः शनिस्थितौ ॥ इति कूर्म्मचक्रम् ॥ राहुचक्रे च
सप्तोर्ध्वमधः सप्त च संलिखेत्॥ १० ॥ वाय्वग्न्योश्चैव नैर्ऋत्ये पूर्णिमाग्नेयभागतः ॥ अमावास्यां वायवे च राहुर्वै तिथिरूपकः ॥ ११ ॥
रकारं दक्षभागे तु हकारं वायवे लिखेत ॥ प्रतिपदादौ ककारादीन्सकारं नैर्ऋते पुनः ॥ १२ ॥ राहोर्मुखे तु भङ्गः स्यादिति राहुरुदा-
हृतः ॥ विष्टिरग्नौ पौर्णमास्यां करालीन्द्रे तृतीयकम् ॥ १३ ॥ घोरा याम्यां तु सप्तम्यां दशम्यां रौद्रसौम्यगा ॥ चतुर्दश्यां तु वायव्ये
चतुर्थ्यां वरुणाश्रये ॥ १४ ॥ शुक्लाष्टम्यां दक्षिणे च एकादश्यां भृशं त्यजेत् ॥ रौद्रश्चैव तथा श्वेतो मैत्रः सारभटस्तथा ॥ १५ ॥
सावित्रो विरोचनश्च जयदेवोऽभिजित्तथा ॥ रावणो विजयश्चैव नन्दी वरुण एव च ॥ १६ ॥ यमसौम्यौ भवश्चान्ते दशपञ्चमुहूर्त्तकाः ॥
रौद्रे रौद्राणि कुर्वीत श्वेते स्नानादिकं चरेत् ॥ १७ ॥ मैत्रे कन्याविवाहादि शुभं सारभटे चरेत् ॥ सावित्रे स्थापनाद्यं वा विरोचने नृप-
क्रिया ॥ १८ ॥ जयदेवे जयं कुर्य्याद्रावणे रणकर्म्म च ॥ विजये कृषिवाणिज्यं पट्टबन्धं च नान्दिनि ॥ १९ ॥ वरुणे च तडागादि नाश-
कर्म्म यमे चरेत् ॥ सौम्ये सौम्यादि कुर्वीत भवेल्लग्नमहर्दिवा ॥ २० ॥ योगा नाम्ना विरुद्धाः स्युर्योगा नाम्नैव शोभनाः ॥ राहुरिन्द्रा-
त्समीरं च वायोर्दक्षं यमाच्छिवम् ॥ २१ ॥ शिवादाप्यजलादग्निरग्नेः सौम्यं ततस्त्रयम् ॥ ततश्च संक्रमं हन्ति चतस्रो घटिका भ्रमन्
॥ २२ ॥ इति राहुचक्रम् ॥ चण्डीन्द्राणी वाराही च मुसली गिरिकर्णिका ॥ बला चातिबला क्षीरी मल्लिकाजातियूथिकाः ॥ २३ ॥
यथालाभं धारयेत्ताः श्वेतार्कश्च शतावरी ॥ गुडूची वागुरी दिव्या ओषध्यो धारिता जये ॥ २४ ॥ ओं नमो भैरवाय खड्गपरशुहस्ताय
ओं हूं विघ्नविनाशाय ओ हूं फट् ॥ अनेनैव तु मन्त्रेण शिखाबन्धादिकृज्जये ॥ तिलकं चाञ्जनं चैव धूपलेपनमेव च ॥२५॥ स्नानपानानि
तैलानि योगधूलिमतः शृणु ॥ सुभगा मनःशिला तालं लाक्षारससमन्वितम् ॥ २६ ॥ तरुणीक्षीरसंयुक्तो ललाटे तिलको वशे ॥

विष्णुक्रान्ता च सर्पाक्षी सहदेवं च रोचना ॥ २७॥ अजादुग्धेन संपिष्टं तिलको वश्यकारकः ॥ 'प्रियङ्गु कुङ्कुमं कुष्ठं मोहनी तगरं घृतम् ॥ २८ ॥ तिलको वश्यकृत्तच्च रोचना रक्तचन्दनम् ॥ निशा मनःशिला तालं प्रियङ्गु सर्षपास्तथा ॥ २९ ॥ मोहिनी हरिता कान्ता सहदेवी शिखा तथा ॥ मातुलङ्गरसैः पिष्टं ललाटे तिलको वशे ॥ ३० ॥ सेन्द्राः सुरा वशं यान्ति किं पुनः क्षुद्रमानुषाः ॥ माञ्जिष्ठा चन्दनं रक्तं कटुकन्दा विलासिनी ॥ ३१ ॥ पुनर्नवासमायुक्तो लेपोऽयं भास्करो वशे । चन्दनं नागपुष्पं च माञ्जिष्ठा तगरं वचा ॥ लोध्रं प्रियङ्गु रजनी मांसीतिलं वशङ्करम् ॥ ३२ ॥ इत्यादिमहापुराणे आग्नेये युद्धजयार्णवे नानायोगा नाम त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३॥

अथ युद्धजयार्णवे ज्योतिःशास्त्रसारः॥ अग्निरुवाच ॥ ज्योतिःशास्त्रादिसारं च वक्ष्ये युद्धजयार्णवे ॥ विना मन्त्रौपधाद्यं च यथोमामीश्वरोऽब्रवीत् ॥ १ ॥ देव्युवाच ॥ देवैर्जिता दानवाश्च येनोपायेन तद्वद ॥ शुभाशुभविवेकाद्यं ज्ञानं युद्धजयार्णवम् ॥ २ ॥ ईश्वर उवाच ॥ मूलदेवेच्छया जाता शक्तिः पञ्चादशाक्षरा ॥ चराचरं ततो जातं यमाराध्याखिलार्थवित् ॥ ३ ॥ मन्त्रपीठं प्रवक्ष्यामि पञ्चमन्त्रसमुद्भवम् ॥ ते मन्त्राः सर्वमन्त्राणां जीविते मरणे स्थिताः ॥ ४ ॥ ऋग्यजुःसामाथर्वाख्यवेदमन्त्राः क्रमेण ते ॥ सद्योजातादयो मन्त्रा ब्रह्मा विष्णुश्च रुद्रकः ॥ ५ ॥ ईशः सप्तशिखा देवाः शक्राद्याः पञ्च च स्वराः ॥ अइउएओ कलाश्च मूलं ब्रह्मेति कीर्त्तितम् ॥ ६ ॥ काष्ठमध्ये यथा वह्निरप्रवृद्धो न दृश्यते ॥ विद्यमाना तथा देहे शिवशक्तिर्न दृश्यते ॥ ७ ॥ आदौ शक्तिः समुत्पन्ना ओङ्कारस्वरभूषिता ॥ ततो बिन्दुर्महादेवि एकारेण व्यवस्थितः ॥ ८ ॥ जातो नाद उकारस्तु नदते हृदि संस्थितः ॥ अर्द्धचन्द्र इकारस्तु मोक्षमार्गस्य बोधकः ॥ ९ ॥ अकारो व्यक्त उत्पन्नो भोगमोक्षप्रदः परः ॥ अकार ऐश्वरे भूमिर्निवृत्तिश्च कला स्मृता ॥ १० ॥ गन्धो नवीजः प्राणाख्य इडाशक्तिः स्थिरा स्मृता ॥ इकारश्च प्रतिष्ठाख्यो रसो पालश्च पिङ्गला ॥ ११ ॥ क्रूरा शक्तिरीबीजः स्याद्धरबीजोऽग्निरूपवान् ॥ विद्या समाना गान्धारी शक्तिश्च दहनी स्मृता ॥ १२ ॥ प्रशान्तिर्वायुर्युस्पर्शी यश्चोदानश्चला क्रिया ॥ ओङ्कारः शान्त्यतीताख्यः खशब्दयूथपाणिनः ॥ १३ ॥ पञ्च वर्गाः स्वरा जाताः कुजज्ञगुरुभार्गवाः ॥ शनिः क्रमादकाराद्याः ककाराद्यास्त्वधः स्थिताः ॥ १४ ॥ एतन्मूलमतः सर्वं ज्ञायते सचराचरम् ॥ विद्यापीठं प्रवक्ष्यामि प्रणवः शिव ईरितः ॥ १५ ॥ उमा सोमः

स्वयं शक्तिर्नामा ज्येष्ठा च रौद्रयापं ॥ ब्रह्मा विष्णुः क्रमाद्रुद्रो गुणाः सर्गादयस्त्रयः ॥ १६ ॥ रत्ननाडीत्रयं चैव स्थूलः सूक्ष्मः परोऽपरः ॥ चिन्तयेच्छ्वेतवर्णं तं मुच्यमानं परामृतम् ॥ १७ ॥ प्लाव्यमानं यथात्मानं चिन्तयेत्तं दिवानिशम् ॥ अजरत्वं भवेद्देवि शिवत्वमुगपच्छाति ॥ १८ ॥ अङ्गुष्ठादौ न्यसेदङ्गान्नेत्रं मध्येऽथ देहके ॥ मृत्युञ्जयं ततः प्राच्यं रणादौ ।जयो भवेत् ॥ १९ ॥ शून्यो निरालयः शब्दः स्पर्शं तिर्यङ्गतं स्पृशेत् ॥ रूपस्योर्द्ध्वगतिः प्रोक्ता जलस्याधः समाश्रिता ॥ २० ॥ सर्वस्थानविनिर्मुक्तो गन्धो मध्ये च मूलकम् ॥ नाभिमूले स्थितं कन्दं शिवरूपं तु मण्डितम् ॥ २१ ॥ शक्तिव्यूहेन सोमोऽर्कौ हरिस्तत्र व्यवस्थितः ॥ दशवायुसमोपेतं पञ्चतन्मात्रमण्डितम् ॥ २२ ॥ कालानलसमाकारं प्रस्फुरन्तं शिवात्मकम् ॥ तज्जीवं जीवलोकस्य स्थावरस्य चरस्य च ॥ तस्मिन्नष्टे मृतं मन्ये मन्त्रपीठेऽनिलात्मकम् ॥ २३ ॥ इत्यादिमहापुराणे आग्नेये युद्धजयार्णवे जोतिःशास्त्रसारो नाम चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

अथ युद्धजयार्णवे नानाचक्राणि ॥ ईश्वर उवाच ॥ ओं ह्रीं कर्णमोटनि बहुरूपे बहुदंष्ट्रे हूं फट् ॥ ओं हः ओं ग्रस ग्रस कृन्त कृन्त छक छक हूं फट् नमः ॥ पठ्यमानो ह्ययं मन्त्रः क्रुद्धैः संरक्तलोचनैः ॥ मारणे पातने वापि मोहनोच्चाटने भवेत् ॥ १ ॥ कर्णमोटीमहाविद्या सर्ववर्णेषु रक्षिका ॥ नानाविद्या ॥ पञ्चोदयं प्रवक्ष्यामि स्वरोदयसमाश्रितम् ॥ २ ॥ नाभिहृदान्तरं यावत्तावच्चरति मारुतः ॥ उच्चाटयेद्रणादौ तु कर्णाक्षीणि प्रभेदयेत् ॥ ३ ॥ करोति साधकः क्रुद्धो जपहोमपरायणः ॥ हृदयात्पायुकं कण्ठं ज्वरदाहारिमारणे ॥ ४ ॥ कण्ठोद्भवो रसो वायुः शान्तिकं पौष्टिकं रसम् ॥ दिव्यं स्तम्भं समाकर्षं गन्धो नासान्तिको ध्रुवः ॥ ५ ॥ गन्धलीनं मनः कृत्वा स्तम्भयेन्नात्र संशयः ॥ स्तम्भनं कीलनाद्यं च करोत्येव हि साधकः ॥ ६ ॥ चण्डघण्टा कराली च सुमुखी दुर्मुखी तथा ॥ रेवती प्रथमा घोरा वायुचक्रेषु ता यजेत् ॥ ७ ॥ उच्चाटकारिका देव्यः स्थितास्तेजासि संस्थिताः ॥ सौम्या च भीषणा देवी जया च विजया तथा ॥ ८ ॥ अजिता चापराजिता महाकोटी च रौद्रया ॥ शुष्ककाया प्राणहरा रसचक्रे स्थिता अमूः ॥ ९ ॥ विरूपाक्षी परा दिव्यास्तथा चाकाशमातरः ॥ संहारी जातहारी च दंष्ट्राला शुष्करेवती ॥ १० ॥ पिपीलिका पुष्टिहारा महापुष्टिप्रवर्द्धना ॥ भद्रकाली सुभद्रा च भद्रभीमा सुभद्रिका ॥ ११ ॥ स्थिरा च निष्ठुरा दिव्या निष्कम्पा गदिनी तथा ॥ द्वात्रिंशन्मातरश्चक्रे ह्यष्टाष्ट क्रमशः स्थिताः ॥ १२ ॥ एक एव रविश्चन्द्र एकश्चैकैक-

शाक्तिका ॥ भूतभेदेन तीर्थानि यथा तोयं महीतले ॥ १३ ॥ प्राण एको मण्डलैश्च भिद्यते भूतपञ्जरे ॥ वामदक्षिणयोगेन दशधा सम्प्रवर्त्तते ॥ १४ ॥ बिन्दुमुण्डविचित्रं च तत्त्ववस्त्रेण वेष्टितम् ॥ ब्रह्माण्डेन कपालेन पिबेत्तु परमामृतम् ॥ १५ ॥ पञ्चवर्गबलाद्युद्धे जयो भवति तच्छृणु । अआकचटतपयाः श आद्यो वर्ग ईरितः ॥ १६ ॥ इईखछठथफराः सो वर्गश्च द्वितीयकः ॥ उऊगजडदबलाः सो वर्गश्च तृतीयकः ॥ १७ ॥ एऐघझढधभवा होवर्गश्च चतुर्थकः ॥ ओ औ अं अः ङञणनमा मोवर्गः पञ्चमो भवेत् ॥ १८ ॥ वर्णाश्चाभ्युदये नृणां चत्वारिंशच्च पञ्च च ॥ बालः कुमारो युवा स्याद्वृद्धो मृत्युश्च नामतः ॥ १९ ॥ आत्मपीडा शोषकः स्यादुदासीनश्च कालकः ॥ कृत्तिका प्रतिपद्भौम आत्मनो लाभदः स्मृतः ॥ २० ॥ षष्ठी भौमो मघा पीडा ह्यार्द्रा चैकादशी कुजः ॥ मृत्युर्मघा द्वितीया ज्ञो लाभश्चार्द्रा च सप्तमी ॥ २१ ॥ बुधे हानिर्भरणी ज्ञः श्रवणं काल ईदृशः ॥ जीवो लाभाय च भवेत्तृतीया पूर्वफल्गुनी ॥ २२ ॥ जीवोऽष्टमी धनिष्ठार्द्रा जीवोऽश्लेषा त्रयोदशी ॥ मृत्यौ शुक्रश्चतुर्थी स्यात्पूर्वभाद्रपदा प्रिये ॥ २३ ॥ पूर्वाषाढा च नवमी शुक्रः पीडाकरो भवेत् ॥ भरणी भूतजा शुक्रो यमदण्डो हि हानिकृत् ॥ २४ ॥ कृत्तिका पञ्चमी मन्दो लाभाय तिथिरीरिता ॥ आश्लेषा दशमी मन्दो योगः पीडाकरो भवेत् ॥ २५ ॥ मघा शनिः पूर्णिमा च योगो मृत्युकरः स्मृतः ॥ अथ तिथियोगः ॥ पूर्वोत्तराग्निनैर्ऋत्यदक्षिणानिलचन्द्रमाः ॥ २६ ॥ ब्रह्माद्याः स्युर्दृष्टयः स्युः प्रतिपन्नवमीमुखाः ॥ राशिभिः सहिता दृष्टा ग्रहाद्याः सिद्धये स्मृताः ॥ २७ ॥ मेषाद्याश्चतुरः कुम्भा जयः पूर्णेऽन्यथा मृतिः ॥ सूर्य्यादिरिक्ता पूर्णा च क्रमादेवं प्रदापयेत् ॥ २८ ॥ रणे सूर्य्ये फलं नास्ति सोमे भङ्गः प्रशाम्यति ॥ कुजेन कलहं विद्याद्बुधः कामाय वै गुरुः ॥ २९ ॥ जयाय मनसे शुक्रो मन्दे भङ्गो रणे भवेत् ॥ देयानि पिङ्गलाचक्रे सूर्य्यगानि च भानि हि ॥ ३० ॥ मुखे नेत्रे ललाटेऽथ शिरोहस्तोरुपादके ॥ पादे मृतिस्त्रिऋक्षे स्यात्त्रीणि पक्षेऽर्थनाशनम् ॥ ३१ ॥ मुखस्थे च भवेत्पीडा शिरःस्थे कार्य्यनाशनम् ॥ कुक्षिस्थिते फलं स्याच्च राहुचक्रं वदाम्यहम् ॥ ३२ ॥ इन्द्राच्च नैर्ऋतङ्गच्छेन्नैर्ऋतात्सोममेव च ॥ सोमाद्धुताशनं वह्नेराप्यमाप्याच्छिवालयम् ॥ ३३ ॥ रुद्राद्यमं यमाद्वायुं वायोश्चन्द्रं व्रजेत्पुनः ॥ भुङ्क्ते चतस्रो नाडयस्तु राहुपृष्ठे जयो रणे ॥ ३४ ॥ अग्रतो मृत्युमाप्नोति तिथिराहुं वदामि ते ॥ आग्नेयादिशिवान्तं च पूर्णिमामादितः प्रिये ॥ ३५ ॥ पूर्वे कृष्णाष्टमीं यावद्राहुदृष्टो भयो भवेत् ॥

ऐशान्याग्नेयनैर्ऋत्यवायव्ये फणिराहुकः ॥ ३६ ॥ मेषाद्या दिशि पूर्वादौ यत्रादित्योऽग्रतो मृतिः ॥ तृतीया कृष्णपक्षे तु सप्तमी दशमी
तथा ॥ ३७ ॥ चतुर्दशी तथा शुक्ले चतुर्थ्येकादशी तिथिः ॥ पञ्चदशी विष्टयः स्युः पूर्णिमाग्नेयवायवे ॥ ३८ ॥ अकचटतपयशा
वर्गाः सूर्य्यादयो ग्रहाः ॥ गृध्रोलूकश्येनकाश्च पिङ्गलः कौशिकः क्रमात् ॥ ३९ ॥ सारसश्च मयूरश्च गोरङ्कुः पक्षिणः स्मृताः ॥
आदौ साध्यो हुतो मन्त्र उच्चाटे पल्लवः स्मृतः ॥ ४० ॥ वश्ये ज्वरे तथाकर्षे प्रयोगः सिद्धिकारकः ॥ शान्तौ प्रीतौ नमस्कारो वौषट्
पुष्टौ वशादिषु ॥ ४१ ॥ हुं मृत्यौ प्रीतिसन्नाशे विद्वेषोच्चाटने च फट् ॥ वषट् सुते च दीप्त्यादौ मन्त्राणां जातयश्च षट् ॥ ४२ ॥
ओषधीः सम्प्रवक्ष्यामि महारक्षाविधायिनीः ॥ महाकाली तथा चण्डी वाराही चेश्वरी तथा ॥ ४३ ॥ सुदर्शना तथेन्द्राणी गात्र-
स्था रक्षयन्ति तम् ॥ बला चातिबला भीरुर्मुसली सहदेव्यपि ॥ ४४ ॥ जाती च मल्लिका यूथी गारुडी तुङ्गराजकः ॥ चक्ररूपा महौ-
षध्यो धारिता विजयादिदाः ॥ ४५ ॥ ग्रहणे च महादेवी उद्धृताः शुभदायिकाः ॥ मृदा च कुञ्जरं कृत्वा सर्वलक्षणलक्षितम् ॥ ४६ ॥
तस्य पादतले कृत्वा स्तम्भयेच्छत्रुमात्मनः ॥ नगाग्रे चैत्यवृक्षे च वज्राहतप्रदेशके ॥ ४७ ॥ वल्मीकमृदमाहृत्य मातरौ योजयेत्ततः ॥
ॐ नमो महाभैरवाय विकृतदंष्ट्रोग्ररूपाय पिङ्गलाक्षाय त्रिशूलखड्गधराय वौषट् ॥ पूजयेत्कर्दमं देवि स्तम्भयेच्छस्त्रजालकम् ॥ ४८ ॥
अग्निकार्य्यं प्रवक्ष्यामि रणादौ जयवर्द्धनम् ॥ श्मशाने निशि काष्ठाग्नौ नग्नो मुक्तशिखो नरः ॥ ४९ ॥ दक्षिणास्यस्तु जुहुयान्नृमांसं रुधिरं
विषम् ॥ तुषास्थिखण्डमिश्रं तु शत्रुनाम्ना शताष्टकम् ॥५०॥ ॐ नमो भगवति कौमारि लल लल ल,लय लालय घण्टादेवि अमुकं मारय
मारय सहसा नमोऽस्तु ते भगवति विद्ये स्वाहा ॥ अनया विद्यया होमाद्बन्धनं जायते रिपोः ॥ ॐ वज्रकाय वज्रतुण्ड कपिलपिङ्गलकरा-
लवदन ऊर्ध्वकेश महाबल रक्तमुख तडिज्जिह्व महारौद्रदंष्ट्रोत्कट कह करालिन् महादृढप्रहार लङ्केश्वर सेतुबन्धशैलप्रवाह गगनचर
एह्येहि भगवन्महाबल पराक्रम भैरवो ज्ञापयति एह्येहि महारौद्र दीर्घलांगूलेन अमुकं वेष्टय वेष्टय जम्भय जम्भय खन खन वैते हूं 
फट् । अष्टत्रिंशच्छतं देवि हनुमान्सर्वकर्मकृत् ॥ पटे हनूमत्सन्दर्शाद्भङ्गमायान्ति शत्रवः ॥५१॥ इत्यादिमहापुराणे आग्नेये युद्धजयार्णवे
नानाचक्रवर्णनं नाम पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥ अथ नक्षत्रनिर्णयः ॥ ईश्वर उवाच ॥ वक्ष्याम्यहमात्मकं पिण्डं शुभा-

शुभविवृद्धये ॥ यस्मिनृक्षे भवेत्सूर्य्यस्तदादौ त्रीणि मूर्द्धनि ॥ १ ॥ एकं मुखे द्वयं नेत्रे हस्तपादे चतुष्टयम् ॥ हृदि पञ्च सुते जानौ आयुर्वृद्धिं विचिन्तयेत् ॥ २ ॥ शिरस्थे तु भवेद्राज्यं पिण्डतो वक्रयोगतः ॥ नेत्रयोः कान्तिसौभाग्यं हृदये द्रव्यसंग्रहः ॥ ३ ॥ हस्ते धृतं तस्करत्वं गतासुरध्वगः पदे ॥ कुम्भाएके भानि लिख्य सूर्यकुम्भस्तु रिक्तकः ॥ ४ ॥ अशुभः सूर्यकुम्भः स्याच्छुभः पूर्वादिसंस्थितः ॥ फणिराहुं प्रवक्ष्यामि जयाजयविवेकदम् ॥ ५ ॥ अष्टाविंशाँल्लिखेद्विन्दून्पुनर्भाज्यस्त्रिभिस्त्रिभिः ॥ अथ ऋक्षाणि चत्वारि रेखास्तत्रैव दापयेत् ॥ ६ ॥ यस्मिनृक्षे स्थितो राहुस्तदृक्षं फणिमूर्द्धनि ॥ तदादि विन्यसेद्भानि सप्तविंशक्रमेण तु ॥ ७ ॥ वक्त्रे सतगे ऋक्षे म्रियते सर्वं आहवे ॥ स्कन्धे भङ्गं विजानीयात्सप्तभेषु च मध्यतः ॥ ८ ॥ उदरस्थेन पूजा च जयश्चैवात्मनस्तथा ॥ कटिदेशे स्थिते योध आहवे हरते परान् ॥ ९ ॥ पुच्छस्थितेन कीर्त्तिः स्याद्राहुदृष्टे च भे मृतिः ॥ पुनरन्यं प्रवक्ष्यामि रवि(राहु)बलं तव ॥ १० ॥ रविः शुक्रो बुधश्चैव सोमः सौरिर्गुरुस्तथा ॥ लोहितः सैंहिकश्चैव ह्येते यामार्द्धभागिनः ॥ ११ ॥ सौरिं रविं च राहुं च कृत्वा यत्नेन पृष्ठतः ॥ स जयेत्सैन्यसङ्घातं द्यूतमध्वानमाहवम् ॥ १२ ॥ रोहिणी चोत्तरास्तिस्रो मृगः पञ्च स्थिराणि हि ॥ अश्विनी रेवती स्वाती धनिष्ठा शततारका ॥ १३ ॥ क्षिप्राणि पञ्च भान्येव यात्रार्थी चैव योजयेत् ॥ अनुराधाहस्तमूलं मृगः पुष्यं पुनर्वसुः ॥ १४ ॥ सर्वकार्य्येषु चैतानि ज्येष्ठा चित्रा विशाखया ॥ पूर्वास्तिस्रोऽग्निर्भरणी मघार्द्राश्लेषादारुणाः ॥ १५ ॥ स्थावरेषु स्थिरं ऋक्षं यात्रायां क्षिप्रमुत्तमम् ॥ सौभाग्यार्थे मृदून्येव उग्रेषूग्रं तु कारयेत् ॥ १६ ॥ दारुणे दारुणं कुर्य्याद्धृक्ष्ये चाधोमुखादिकम् ॥ कृत्तिका भरण्याश्लेषा विशाखा पितृनैर्ऋतम् ॥ १७ ॥ पूर्वात्रयमधोवक्त्रं कर्म्म चाधोमुखं चरेत् ॥ एषु कूपतडागादिविद्याकर्म्मभिषक्क्रिया ॥ १८ ॥ स्थापनं नौकाभूपादिविधानं खननं तथा ॥ रेवती चाश्विनी चित्रा हस्तः स्वाती पुनर्वसुः ॥ १९ ॥ अनुराधा मृगो ज्येष्ठा नव वै पार्श्वतोमुखाः ॥ एषु राज्याभिषेकं च पट्टबन्धं गजाश्वयोः ॥ २० ॥ आरामगृहप्रासादं प्राकारं क्षेत्रतोरणम् ॥ ध्वजचिह्नपताकाश्च सर्वानेतांश्च कारयेत् ॥ ॥ २१ ॥ द्वादशी सूर्य्यदग्धा तु चन्द्रेणैकादशी तथा ॥ भौमेन दशमी दग्धा तृतीया वै बुधेन च ॥ २२ ॥ षष्ठी च गुरुणा दग्धा द्वितीया भृगुणा तथा ॥ सप्तमी सूर्य्यपुत्रेण त्रिपुष्करमथो वदे ॥ २३ ॥ द्वितीया द्वादशी चैव सप्तमी वै तृतीयका ॥ रविर्भौमस्तथा सौरिः





षडेतास्तु त्रिपुष्कराः ॥ २४ ॥ विशाखा कृत्तिका चैव ह्युत्तरे द्वे पुनर्वसुः ॥ पूर्वभाद्रपदा चैव षडेते तु त्रिपुष्कराः ॥ २५ ॥ लाभो हानिर्जयो वृद्धिः पुत्रजन्म तथैव च ॥ नष्टं भ्रष्टं विनष्टं वा तत्सर्वं त्रिगुणं भवेत् ॥ २६ ॥ अश्विनी भरणी चैव ह्याश्लेषा पुष्यमेव च ॥ स्वातिश्चैव विशाखा च श्रवणं सप्तमं पुनः ॥ २७ ॥ एतानि दृढचक्षूंषि पश्यन्ति च दिशो दश ॥ यात्रासु दूरगस्यापि ह्यागमः पुण्यगोचरे ॥ २८ ॥ आषाढे रेवती चित्रा केकराणि पुनर्व्वसुः ॥ एषु पञ्चसु ऋक्षेषु निर्गतस्यागमो भवेत् ॥२९॥ कृत्तिका रोहिणी सौम्यं फल्गुनी च मघा तथा ॥ मूलं ज्येष्ठानुराधा च धनिष्ठा शततारका ॥ ३० ॥ पूर्व्वभाद्रपदा चैव चिपिटानि च तानि हि ॥ अध्वानं व्रजमानस्य पुनरेवागमो भवेत् ॥ ३१ ॥ हस्त उत्तरभाद्रश्च आर्द्राषाढा तथैव च ॥ नष्टार्थाश्चैव दृश्यन्ते संग्रामो नैव विद्यते ॥ ३२ ॥ पुनर्वक्ष्यामि गण्डान्तमृक्षमध्ये यथा स्थितम् ॥ रेवत्यन्ते चतुर्नाडी आश्विन्यादि चतुष्टयम् ॥ ३३ ॥ उभयोर्याममात्रं तु वर्जयेत्तत्प्रयत्नतः ॥ आश्लेषान्ते मघादौ तु घटिकानां चतुष्टयम् ॥ ३४ ॥ द्वितीयं गण्डमाख्यातं तृतीयं भैरवि शृणु ॥ ज्येष्ठामूलयोर्म्मध्ये उग्ररूपं तु यामकम् ॥ ३५ ॥ न कुर्य्याच्छुभकर्म्माणि यदीच्छेदात्मजीवितम् ॥ दारके जातकाले च म्रियते पितृमातरौ ॥ ३६ ॥ इत्यादिमहापुराणे आग्नेये नक्षत्रनिर्णयो नाम षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥ अथ नानाबलानि ॥ ईश्वर उवाच ॥ विष्कुम्भे घटिकास्तिस्रः शूले पञ्च विवर्जयेत् ॥ षट् षट् गण्डेऽतिगण्डे च नव व्याघातवज्रयोः ॥ १ ॥ परिघे च व्यतीपाते ह्युभयोरपि तद्दिनम् ॥ वैधृतौ तद्दिने चैव यात्रायुद्धादिकं त्यजेत् ॥२॥ ग्रहैः शुभाशुभं वक्ष्ये देवि मेषादिराशितः ॥ चन्द्रशुक्रौ च जन्मस्थौ वर्जितौ शुभदायकौ ॥ ३ ॥ द्वितीयो मङ्गलोऽथार्कः सौरिश्चैव तु सैंहिकः ॥ द्रव्यनाशमलाभं च ह्याहवे भङ्गमादिशेत् ॥ ४ ॥ सोमो बुधो भृगुर्जीवो द्वितीयस्थाः शुभावहाः ॥ तृतीयस्थो यदा भानुः शनिर्भौमो भृगुस्तथा ॥ ५ ॥ बुधश्चैवेन्दुराहुश्च सर्वे ते फलदा ग्रहाः ॥ बुधशुक्रौ चतुर्थौ तु शेषाश्चैव भयावहाः ॥ ६ ॥ पञ्चमस्थो यदा जीवः शुक्रः सौम्यश्च चन्द्रमाः ॥ ददेत चेप्सितं लाभं षष्ठे स्थाने शुभो रविः ॥ ७ ॥ चन्द्रः सौरिर्म्मङ्गलश्च ग्रहा देवि स्वराशितः ॥ बुधश्च शुभदः षष्ठे त्यजेत्षष्ठं गुरुं भृगुम् ॥ ८ ॥ सप्तमोऽर्कः शनिर्भौमो गत्वर्दान्ये मृत्याय च ॥ जीवो भृगुश्च सौम्यश्च ह्यशुक्रौ चाष्टमो शुभो ॥ ९ ॥ शेषा ग्रहास्तथा ह्यन्ये ह्यभृगु नवमो शुभो ॥ शेषा ह्यन्ये

च लाभाय दशमो भृगुभास्करौ ॥ १० ॥ शनिर्भौमश्च राहुश्च चन्द्रः सौम्यः शुभावहः ॥ शुभाश्चैकादशे सर्वे वर्जयेद्दशमे गुरुम् ॥ ११ ॥ बुधशुक्रौ द्वादशस्थौ शेषान्द्वादशगांस्त्यजेत् ॥ अहोरात्रे द्वादश स्यू राशयस्तान्वदाम्यहम् ॥ १२ ॥ मीनो मेषोऽथ मिथुनं चतस्रो नाडयो वृषः ॥ षट् कर्कसिंहकन्याश्च तुला पञ्च च वृश्चिकः ॥ १३ ॥ धनुर्नक्रो घटश्चैव सूर्य्यगोराशिराद्यकः ॥ चरस्थिरद्विस्वभावा मेषाद्याः स्युर्यथाक्रमम् ॥ १४ ॥ कुलीरो मकरश्चैव तुलामेषादयश्चराः ॥ चरकार्य्यं जयं काममाचरेच्च शुभाशुभम् ॥ १५ ॥ स्थिरो वृषो हरिः कुम्भो वृश्चिकः स्थिरकार्य्यके ॥ शीघ्रः समागमो नास्ति रोगार्त्तो नैव मुच्यते ॥ १६ ॥ मिथुनं कन्यका मीनो धनुश्च द्विस्वभावकः ॥ द्विस्वभावाः शुभाश्चैते सर्वकार्य्येषु नित्यशः ॥ १७ ॥ यात्रावाणिज्यसंग्रामे विवाहे राजदर्शने ॥ वृद्धिं जयं तथा लाभं युद्धे जयमवाप्नुयात् ॥ १८ ॥ अश्विनी विंशताराश्च तुरगस्याकृतिर्यथा ॥ यद्यत्र कुरुते वृष्टिमेकरात्रं प्रवर्षति ॥ यमभे तु यदा वृष्टिः पक्षमेकं तु वर्षति ॥ १९ ॥ इत्यादिमहापुराणे आग्नेये युद्धजयार्णवे नानाबलनिरूपणं नाम सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥ अथ कोटचक्रम् ॥ ईश्वर उवाच ॥ कोटचक्रं प्रवक्ष्यामि चतुरस्रं पुरं लिखेत् ॥ चतुरस्रं पुनर्म्मध्ये तन्मध्ये चतुरस्रकम् ॥ १ ॥ नाडीत्रितयचिह्नाढ्यं मेषाद्याः पूर्वदिङ्मुखाः ॥ कृत्तिका पूर्वभागे तु आश्लेषाग्नेयगोचरे ॥ २ ॥ भरणी दक्षिणे देया विशाखां नैर्ऋते न्यसेत् ॥ अनुराधां पश्चिमे च श्रवणं वायुगोचरे ॥३॥ धनिष्ठां चोत्तरे न्यस्य ऐशान्यां रेवतीं तथा ॥ बाह्यनाड्यां स्थितान्येव अष्टौ ऋक्षाणि यत्नतः ॥ ४ ॥ रोहणीपुष्यफल्गुन्यः स्वाती ज्येष्ठा क्रमेण तु ॥ अभिजिच्छततारा तु अश्विनी मध्यनाडिका ॥ ५ ॥ कोटमध्ये तु या नाडी कथयामि प्रयत्नतः ॥ मृगश्चाभ्यन्तरे पूर्वे तस्याग्नेये पुनर्वसुः ॥ ६ ॥ उत्तराफल्गुनी याम्ये चित्रा नैर्ऋतसंस्थिता ॥ मूलं तु पश्चिमे न्यस्योत्तराषाढां तु वायवे ॥ ७ ॥ पूर्वभाद्रपदा सौम्ये रेवती चेशगोचरे ॥ कोटस्याभ्यन्तरे नाडी ऋक्षाष्टकसमन्विता ॥ ८ ॥ आर्द्रा हस्तस्तथाषाढा चतुष्कं चोत्तरात्रिकम् ॥ मध्ये स्तम्भचतुष्कं तु दद्यात्कोटस्य कोटरे ॥ ९ ॥ एवं दुर्गस्य विन्यासं बाह्ये स्थानं दिशाधिपात् ॥ आगन्तुको यदा योद्धा ऋक्षवान्स्यात्फलान्वितः ॥ १० ॥ कोटमध्ये ग्रहाः सौम्या यदा ऋक्षान्विताः पुनः ॥ जयं मध्यस्थितानां तु भङ्गमागामिनो विदुः ॥११॥ प्रवेशभे प्रवेष्टव्यं निर्गमे भे च निर्गमेत् ॥ भृगुः सौम्यस्तथा

भौम ऋक्षान्तं सकलं यदा ॥ १२ ॥ तदा भङ्गं विजानीयाज्जयमागन्तुकस्य च ॥ प्रवेशर्क्षचतुष्के तु सङ्ग्रामं चारभेद्यदा ॥ तदा सिध्यति
तद्दुर्गं न कुर्य्यात्तत्र विस्मयम् ॥ १३ ॥ इत्यादिमहापुराणे आग्नेये युद्धजयार्णवे कोटचक्रं नामाऽष्टाविंशत्यधिकशततमोऽध्यायः ॥
॥ १२८ ॥ अथाऽर्घकाण्डम् ॥ ईश्वर उवाच ॥ अर्घमाने प्रवक्ष्यामि उल्कापातोऽथ भूश्चला ॥ निर्घातो ग्रहणे वेशो दिशां दाहो
भवेद्यदा ॥ १ ॥ लक्षयेन्मासि मास्येवं यद्येते स्युश्च चैत्रके ॥ अलङ्कारादि सङ्गृह्य षाड्मासैश्चतुर्गुणम् ॥ २ ॥ वैशाखे चाष्टमे मासि
षड्गुणं सर्वसङ्ग्रहम् ॥ ज्येष्ठे मासि तथाषाढे यवगोधूमधान्यकैः ॥ ३ ॥ श्रावणे घृततैलाद्यैराश्विने वस्त्रधान्यकैः ॥ कार्त्तिके धान्यकैः
क्रीतैर्म्मासे स्यान्मार्गशीर्षके ॥ ४ ॥ पुष्ये कुङ्कुमगन्धाद्यैर्द्धांभो धान्यैश्च माघके ॥ गन्धाद्यैः फाल्गुने क्रीतैरर्घकाण्डमुदाहृतम् ॥ ५ ॥
इत्यादिमहापुराणे आग्नेये अर्घकाण्डं नामोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥ अथ मण्डलवर्णनम् ॥ ईश्वर उवाच ॥ मण्ड-
लानि प्रवक्ष्यामि चतुर्द्धा विजयाय हि ॥ कृत्तिका च मघा पुष्यं पूर्व्वां चैव तु फाल्गुनी ॥ १ ॥ विशाखा भरणी चैव पूर्वभाद्रपदा
तथा ॥ आग्नेयमण्डलं भद्रे तस्य वक्ष्यामि लक्षणम् ॥ २ ॥ यद्यत्र चलते वायुर्वेष्टनं शशिसूर्य्ययोः ॥ भूमिकम्पोऽथ निर्घातो ग्रहणं
चन्द्रसूर्य्ययोः ॥ ३ ॥ धूमज्वाला दिशां दाहः केतोश्चैव प्रदर्शनम् ॥ रक्तवृष्टिश्चोपतापः पाषाणपतनं तथा ॥ ४ ॥ नेत्ररोगोऽतिसारश्च
अग्निश्च प्रबलो भवेत् ॥ स्वल्पक्षीरास्तथा गावः स्वल्पपुष्पफला द्रुमाः ॥ ५ ॥ विनाशश्चैव सस्यानां स्वल्पवृष्टिं विनिर्दिशेत् ॥ चातु-
र्व्वर्णाः प्रपीड्यन्ते क्षुधार्त्ता अखिला नराः ॥ ६ ॥ सैन्धवा यामुनाश्चैव गुर्जरा भोजवाह्लिकाः ॥ जालन्धरं च काश्मीरं सप्तमं चोत्तरा-
पथम् ॥ ७ ॥ देशाश्चैते विनश्यन्ति तस्मिन्नुत्पातदर्शने ॥ हस्तश्चित्रा मघा स्वाती मृगो वाथ पुनर्वसुः ॥ ८ ॥ उत्तराफल्गुनी चैव
अश्विनी च तथैव च ॥ यदात्र भवते किञ्चिद्वायव्यं तं विनिर्दिशेत् ॥ ९ ॥ नष्टधर्म्माः प्रजाः सर्व्वा हाहाभूता विचेतसः ॥ डाहलः
कामरूपं च कलिङ्गः कोसलस्तथा ॥ १० ॥ अयोध्या च ह्यवन्ती च नश्यन्ते कोङ्कणान्ध्रकाः ॥ आश्लेषा चैव मूलं तु पूर्व्वाषाढा
तथैव च ॥ ११ ॥ रेवती वारुणं ऋक्षं तथा भाद्रपदोत्तरा ॥ यदात्र चलते किञ्चिद्दारुणं तं विनिर्दिशेत् ॥ १२ ॥ बहुक्षीरघृता गावो
बहुपुष्पफला द्रुमाः ॥ आरोग्यं तत्र जायेत बहुसस्या च मेदिनी ॥ १३ ॥ धान्यानि च समर्घाणि सुभिक्षं पार्थिवं भवेत् ॥ परस्परं

नरेन्द्राणां सङ्ग्रामो दारुणो भवेत् ॥१४॥ ज्येष्ठा च रोहिणी चैव अनुराधा च वैष्णवम् ॥ धनिष्ठा चोत्तराषाढा आभिजित्सप्तमं तथा ॥ १५ ॥ यदात्र चलते किञ्चिन्माहेन्द्रं तं विनिर्दिशेत् ॥ प्रजाः समुदितास्तस्मिन्सर्वरोगविवर्जिताः ॥ १६ ॥ सन्धिं कुर्वन्ति राजानः सुभिक्षं पार्थिवं शुभम् ॥ ग्रामस्तु द्विविधो ज्ञेयो मुखपुच्छकरो महान् ॥ १७ ॥ चन्द्रो राहुस्तथादित्य एकराशौ यदि स्थितः ॥ मुखग्रामस्तु विज्ञेयो याभित्रे पुच्छ उच्यते ॥ १८ ॥ भानोः पञ्चदशे ह्यृक्षे यदा चरात चन्द्रमाः ॥ तिथिच्छेदे तु सम्प्राप्ते सोमग्रामं विनिर्दिशेत् ॥ १९ ॥ इत्यादिमहापुराणे आग्नेये युद्धजयार्णवे मण्डलवर्णनं नाम त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

अथ घातचक्रादिकम् ॥ ईश्वर उवाच ॥ प्रदक्षिणमकारादीन्स्वरान्पूर्वादितो लिखेत् ॥ चैत्राद्यं भ्रमणाच्चक्रं प्रतिपत्पूर्णिमा तिथिः ॥ १ ॥ त्रयोदशी चतुर्दशी ह्यष्टम्येका च सप्तमी ॥ प्रतिपत्त्रयोदश्यन्तास्तिथयो द्वादश स्मृताः ॥ २ ॥ चैत्रचक्रे तु संस्पर्शाज्जयलाभादिकं विदुः ॥ विषमे तु शुभं ज्ञेयं समे चाशुभमीरितम् ॥ ३ ॥ युद्धकाले समुत्पन्ने यस्य नाम ह्युदाहृतम् ॥ मात्रारूढं तु यन्नाम ह्यादित्यो गुरुरेव च ॥ ४ ॥ जयस्तस्य सदाकालं संग्रामे चैव भीषणे ॥ ह्रस्वनाम यदा योधो ध्रियते ह्यनिवारितः ॥ ५ ॥ प्रथमो दीर्घ आदिस्थो द्वितीयो मध्ये ह्यन्तकः ॥ द्वौ मध्ये न प्रथमान्तौ जायेते नात्र संशयः ॥ ६ ॥ पुनश्चान्ते यदा चादौ स्वरारूढं तु दृश्यते ॥ ह्रस्वस्य मरणं विद्याद्दीर्घस्यैव जयो भवेत् ॥ ७ ॥ नरचक्रं प्रवक्ष्यामि ह्यृक्षपिण्डात्मकं यथा ॥ प्रतिमामालिखेत्पूर्वं पश्चादृक्षाणि विन्यसेत् ॥ ८ ॥ शीर्षे त्रीणि मुखे चैकं द्वे ऋक्षे नेत्रयोर्न्यसेत् ॥ वेदसङ्ख्यानि हस्ताभ्यां कर्णे ह्यृक्षद्वयं पुनः ॥ ९ ॥ हृदये भूतसङ्ख्यानि षडृक्षाणि तु पादयोः ॥ नाम ह्यृक्षं स्फुटं कृत्वा चक्रमध्ये तु विन्यसेत् ॥ १० ॥ नेत्रे शिरोदक्षकर्णे याम्यहस्ते च पादयोः ॥ ह्यार्द्रीवावामहस्ते तु पुनर्गुह्ये तु पादयोः ॥११॥ यस्मिनृक्षे स्थितः सूर्य्यः सौरिर्भौमस्तु सैंहिकः ॥ तस्मिन्स्थाने स्थिते विद्याद्घातमेव न संशयः ॥१२॥ जयचक्रं प्रवक्ष्यामि आदिहान्तांश्च वै लिखेत् ॥ रेखास्त्रयोदशालिख्य षड्रेखास्तिर्यगालिखेत् ॥ १३ ॥ दिग्ग्रहा मुनयः सूर्य्यो ऋत्विग्रुद्रस्थितिः क्रमात् ॥ मूर्च्छनास्मृतिवेदर्क्षजिना अकडमा ह्यधः ॥ १४ ॥ आदित्याद्याः सप्तहते नामान्ते बलिनो ग्रहाः ॥ आदित्यसौरिभौमाख्या जये सौम्याश्च सन्धये ॥ १५ ॥ रेखा द्वादश चोद्धृत्य षट् च याम्यास्तथोत्तराः ॥ मनुश्चैव तु ऋक्षाणि नेत्रे च रविमण्ड-





लम् ॥ १६ ॥ तिथयश्च रसा वेदा आग्निः सप्तदशाथ वा ॥ वसुरन्ध्राः समाख्याता अकटपानघो न्यसेत् ॥ १७ ॥ एकैकमक्षरं न्यस्य
शेषाण्येवं क्रमान्न्यसेत् ॥ नामाक्षरकृतं पिण्डं वसुभिर्भाजयेत्ततः ॥ १८ ॥ वायसान्मण्डलोऽत्युग्रो मण्डलाद्रासभो वरः ॥ रासभाद्वृषभः
श्रेष्ठो वृषभात्कुञ्जरो वरः ॥ १९ ॥ कुञ्जराच्च पुनः सिंहः सिंहाच्चैव खरुर्वरः ॥ खरोश्चैव बली धूम्र एवमादि बलाबलम् ॥ २० ॥ इत्यादि-
महापुराणे आग्नेये घातचक्रादिकं नामैकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥ अथ सेवाचक्रम् ॥ ईश्वर उवाच ॥ सेवाचक्रं प्रवक्ष्या-
मि लाभालाभार्थसूचकम् ॥ पिता माता तथा भ्राता दम्पती च विशेषतः ॥ १ ॥ तस्मिंश्चक्रे तु विज्ञेयं यो यस्माल्लभते फलम् ॥
षडूर्द्धाः स्थापयेद्रेखा भिन्नाश्चाष्टौ तु तिर्य्यगाः ॥ २ ॥ कोष्ठकाः पञ्चत्रिंशच्च तेषु वर्णान्समालिखेत् ॥ स्वरान्पञ्च समुद्धृत्य स्पर्शान्पश्चा-
त्समालिखेत् ॥ ३ ॥ ककारादिहकारान्तान्हीनाङ्गांस्त्रीन्विवर्जयेत् ॥ सिद्धः साध्यः सुसिद्धश्च ह्यरिर्मृत्युश्च नामतः ॥ ४ ॥ अरिर्मृत्युश्च
द्वावेतौ वर्जयेत्सर्वकर्म्मसु ॥ एषां मध्ये यदा नाम लक्षयेत्तु प्रयत्नतः ॥ ५ ॥ आत्मपक्षे स्थिताः सत्त्वाः सर्वे ते शुभदायकाः ॥ द्वितीयः
पोषकश्चैव तृतीयश्चार्थदायकः ॥ ६ ॥ आत्मनाशश्चतुर्थस्तु पञ्चमो मृत्युदायकः ॥ स्थानमेवार्थलाभाय मित्रभृत्यादिबान्धवाः ॥ ७ ॥
सिद्धः साध्यः सुसिद्धश्च सर्वे ते फलदायकाः ॥ अरिर्मृत्युश्च द्वावेतौ वर्जयेत्सर्वकर्म्मसु ॥ ८ ॥ अकारान्तं यथा प्रोक्तम् अइउएओ विदु-
स्तथा ॥ पुनश्चैवांशकान्वक्ष्ये वर्गाष्टकसुसंस्कृतान् ॥ ९ ॥ देवा अकारवर्गे तु दैत्याः कवर्गमाश्रिताः ॥ नागाश्चैव चवर्गाः स्युर्गन्धर्वाश्च
टवर्गजाः ॥ १० ॥ तवर्गे ऋषयः प्रोक्ताः पवर्गे राक्षसाः स्मृताः ॥ पिशाचाश्च यवर्गे च शवर्गे मानुषाः स्मृताः ॥ ११ ॥ देवेभ्यो बलिनो
दैत्या दैत्येभ्यः पन्नगास्तथा ॥ पन्नगेभ्यश्च गन्धर्वा गन्धर्वाहृषयो वराः ॥ १२ ॥ ऋषिभ्यो राक्षसाः शूरा राक्षसेभ्यः पिशाचकाः ॥ पिशा-
चेभ्यो मानुषाः स्युर्दुर्बलं वर्जयेद्बली ॥ १३ ॥ पुनर्मित्रविभागं तु ताराचक्रं क्रमाच्छृणु ॥ नामाद्यक्षरमृक्षं तु स्फुटं कृत्वा तु पूर्वतः ॥ १४ ॥
ऋक्षे तु संस्थितास्तारा नवत्रिका यथाक्रमात् ॥ जन्म सम्पद्विपत्क्षेमं नामर्क्षात्तारका इमाः ॥ १५ ॥ प्रत्यरिर्धनदा षष्ठी नैधनामै-
त्रके परे ॥ परमैत्रान्तिमा तारा जन्मतारा त्वशोभना ॥ १६ ॥ सम्पत्तारा महाश्रेष्ठा विपत्तारा तु निष्फला ॥ क्षेमतारा सर्वकार्य्ये प्रत्य-
रिर्धनबाधिनी ॥ १७ ॥ साधना राज्यलाभादि नैधना कार्य्यनाशिनी ॥ मैत्रतारा तु मित्राय परमित्रा हितावहा ॥ १८ ॥ मात्रा ये स्वर-

सञ्ज्ञा स्यान्नाममध्ये क्षिपेत्प्रिये ॥ विंशत्या च हरेद्भागं यच्छेषं तत्फलं भवेत् ॥ १९ ॥ उभयोर्नाममध्ये तु लक्षयेच्च धनं ऋणम् ॥ हीनमात्रा ऋणं ज्ञेयं धनं मात्राधिकं पुनः ॥ २० ॥ धनेन मित्रता ऋणामृणेनैव ह्युदासता ॥ सेवाचक्रमिदं प्रोक्तं लाभालाभादिदर्शकम् ॥ २१ ॥ मेषमिथुनयोः प्रीतिर्मैत्री मिथुनसिंहयोः ॥ तुलासिंहौ महामैत्री चैवं धनुर्घटे पुनः ॥२२॥ मित्रसेवां न कुर्व्वीत मित्रौ मीनवृषौ मतौ ॥ वृषकर्कटयोर्मैत्री कुलीरघटयोस्तथा ॥ २३ ॥ कन्यावृश्चिकयोरेवं तथा मकरकीटयोः ॥ मीनमकरयोर्मैत्री तृतीयैकादशे स्थिता ॥ २४ ॥ तुलामेषौ महामैत्री विद्विष्टौ वृषवृश्चिकौ ॥ मिथुनधनुषोः प्रीतिः कर्कटमकरयोस्तथा ॥ २५ ॥ मृगकुम्भकयोः प्रीतिः कन्यामीनौ तथैव च ॥ इत्यादिमहापुराणे आग्नेये युद्धजयार्णवे सेवाचक्रं नाम द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

अथ नानाबलानि ॥ ईश्वर उवाच ॥ गर्भजातस्य वक्ष्यामि क्षेत्राधिपस्वरूपकम् ॥ नातिदीर्घः कृशः स्थूलः समाङ्गो गौरपैत्तिकः ॥१॥ रक्ताक्षो गुणवाञ्छूरो गृहे सूर्य्यस्य जायते ॥ सौभाग्यो मृदुसारश्च जातश्चन्द्रग्रहोदये ॥२॥ वाताधिकोऽतिलुब्धादिर्जातो भूमिभुवो गृहे॥ बुद्धिमान्सुभगो मानी जातः सौम्यग्रहोदये ॥ ३ ॥ बृहत्क्रोधश्च सुभगो जातो गुरुगृहे नरः ॥ त्यागी भोगी च सुभगो जातो भृगुग्रहोदये ॥४॥ बुद्धिमान्सुभगो मानी जातश्चार्किगृहे नरः॥ सौम्यलग्ने तु सौम्यः स्यात्क्रूरः स्यात्क्रूरलग्नके ॥ ५ ॥ दशाफलं गौरि वक्ष्ये नामराशौ तु संस्थितम् ॥ गजाश्वधनधान्यानि राज्यश्रीर्विपुला भवेत् ॥ ६ ॥ पुनर्धनागमश्चापि दशायां भास्करस्य तु ॥ दिव्यस्त्रीदा चन्द्रदशा भूमिलाभः सुखं कुजे ॥ ७ ॥ भूमिर्धान्यं धनं बौधे गजाश्वादिधनं गुरौ ॥ खाद्यपानधनं शुक्रे शनौ व्याध्यादिसंयुतः ॥ ८ ॥ स्नानसेवादिना ध्यानं वाणिज्यं राहुदर्शने ॥ वामनाडीप्रवाहे स्यान्नाम चेद्विषमाक्षरम् ॥ ९ ॥ तदा जयति सङ्ग्रामे शनिभौमससैंहिकाः ॥ दक्षनाडीप्रवाहेऽर्के वाणिज्ये चैव निष्फला ॥ १० ॥ सङ्ग्रामे जयमाप्नोति समनामा नरो ध्रुवम् ॥ अथश्वारे जयं विद्यादूर्द्धचारे रणे मृतिम् ॥११॥ ओं हूं ओं हं ओं स्फे अस्त्रं मोटय ओं चूर्णय चूर्णय ओं सर्वशत्रुं मर्दय मर्दय ओं हूं ओं हः फट्॥ सप्तवारं न्यसेन्मन्त्रं ध्यात्वात्मानं तु भैरवम् ॥ चतुर्भुजं दशभुजं विंशद्बाह्वात्मकं शुभम् ॥१२॥ शूलखड्गहस्तं तु खड्गकट्टारिकोद्यतम् ॥ भक्षणं परसैन्यानामात्मसैन्यपराङ्मुखम् ॥१३॥ सम्मुखं शत्रुसैन्यस्य शतमष्टोत्तरं जपेत् ॥ जपाड्डमरुकाच्छब्दाच्छत्रुं त्यक्त्वा पलायते ॥१४॥ परसैन्यं शृणु भङ्गप्रयोगेण पुनर्वदे ॥ श्मशानाङ्गा-





रमादाय विष्ठां चोलूककाकयोः ॥१५॥ कर्पटे प्रतिमां लिख्य साध्यस्यैवाक्षरं यथा ॥ नामाथ नवधाऽऽलिख्य रिपोश्चैव यथाक्रमम् ॥ १६ ॥
मूर्ध्नि वक्रे ललाटे च हृदये गुह्यपादयोः ॥ पृष्ठे तु बाहुमध्ये तु नाम वै नवधा लिखेत् ॥ १७॥ मोटयेद्युद्धकाले तु उच्चारित्वा तु विद्यया ॥
तार्क्ष्यचक्रं प्रवक्ष्यामि जयार्थं त्रिमुखाक्षरम् ॥ १८ ॥ क्षिप ओं स्वाहा तार्क्ष्यात्मा शत्रुरोगविषादिनुत् ॥ दुष्टभूतग्रहार्त्तस्य व्याधितस्यातु-
रस्य च ॥ १९ ॥ करोति यादृशं कर्म तादृशं सिध्यते खगात् ॥ स्थावरं जङ्गमं चैव लूताश्च कृत्रिमं विषम् ॥ २० ॥ तत्सर्वं नाशमा-
याति साधकस्यावलोकनात् ॥ पुनर्ध्यायेन्महातार्क्ष्यं द्विपक्षं मानुषाकृतिम् ॥ २१ ॥ द्विभुजं वक्रचञ्चुं च गजकूर्म्मधरं प्रभुम् ॥ असंख्यो-
रगपादस्थमागच्छन्तं खमध्यतः ॥२२॥ ग्रसन्तं चैव खादन्तं तुदन्तं चाहवे रिपून् ॥ चंच्वाहताश्च द्रष्टव्याः केचित्पादैश्च चूर्णिताः ॥ २३ ॥
पक्षपातैश्चूर्णिताश्च केचिन्नष्टा दिशो दश ॥ तार्क्ष्यध्यानान्वितो यश्च त्रैलोक्ये ह्यजयो भवेत् ॥२४॥ पिच्छिकां तु प्रवक्ष्यामि मन्त्रसाधनजां
क्रियाम् ॥ ओं हूं पक्षिन् क्षिप ओं हूं सः महाबलपराक्रम सर्वसैन्यं भक्षय २ ओं मर्दय ओं चूर्णय २ ओं विद्रावय २ ओं हूं खः ओं भैरवो
ज्ञापयाति स्वाहा ॥ अमुं चन्द्रग्रहणे तु जपं कृत्वा तु पिच्छिकाम् ॥ २५ ॥ मन्त्रयेद्भ्रामयेत्सैन्यं सम्मुखं गजसिंहयोः ॥ ध्यानाद्द्वान्म-
र्दयेच्च सिंहारूढो मृगाविकान् ॥ २६ ॥ शब्दाद्भङ्गं प्रवक्ष्यामि दूरं मन्त्रेण बोधयेत् ॥ मातृणां चरुकं दद्यात्कालरात्र्या विशेषतः ॥ २७ ॥
श्मशानभस्मसंयुक्तं मालती चामरी तथा ॥ कार्पासमूलमात्रं तु. तेन दूरन्तु बोधयेत् ॥ २८ ॥ ओं अहे हे महेन्द्रि अहे महेन्द्रि
हि ओं जहि मसानं हि खाहि २ लिलि किलि ओं हुं फट् ॥ अरेर्नाशं दूरशब्दाज्जपया भङ्गविद्यया ॥ अपराजिता च धुस्तूरस्ताभ्यां भञ्ज
तु तिलकेन हि ॥ २९ ॥ ओं किलि किलि विकिलि इच्छाकिलि भूतहानि शङ्खिनि उमे दण्डहस्ते रौद्रि माहेश्वरि उल्कामुखि
ज्वालामुखि शङ्कुकर्णे शुष्कजङ्घे अलम्बुषे हर ओं सर्वदुष्टान् खन ओं यन्मां निरीक्षियेद्देवि तांस्तान् मोहय ओं रुद्रस्य हृदये
स्थिता रौद्रि सौम्येन भावेन आत्मरक्षां ततः कुरु स्वाहा ॥ बाह्यतो मातृः संलिख्य सकलाकृतिवेष्टिताः ॥ नागपत्रे लिखेद्विद्यां सर्वकामार्थ- ॥ ९९ ॥
साधनीम् ॥ ३० ॥ हस्ताद्यैर्द्धारिता पूर्वं ब्रह्मरुद्रेन्द्रविष्णुभिः ॥ गुरुसङ्ग्रामकाले तु विद्यया रक्षिताः सुराः ॥ ३१ ॥ रक्षया नारसिंह्या
च भैरव्या शक्तिरूपया ॥ सर्वे त्रैलोक्यमोहिन्या गौर्य्या देवासुरे रणे ॥ ३२ ॥ बीजसम्पुटितं नाम कर्णिकायां दलेषु च ॥ पूजाक्रमेण

चाङ्गानि रक्षायन्त्रं स्मृतं शुभे ॥ ३३ ॥ मृत्युञ्जयं प्रवक्ष्यामि नाम संस्कारमध्यगम् ॥ कलाभिर्वेष्टितं पश्चात्सकारेण निबोधितम् ॥ ३४ ॥ जकारं बिन्दुसंयुक्तम् ओङ्कारेण समन्वितम् ॥ धकारोदरमध्यस्थं वकारेण निबोधितम् ॥ ३५ ॥ चन्द्रसम्पुटमध्यस्थं सर्वदुष्टविमर्दकम् ॥ अथवा कर्णिकायां च लिखेन्नाम च कारणम् ॥ ३६ ॥ पूर्वे दले तथोङ्कारं स्वदक्षे चोत्तरे लिखेत् ॥ आग्नेय्यादौ च हूङ्कारं दले षोडशके स्वरान् ॥ ३७ ॥ चतुस्त्रिंशद्दले काद्यान्बाह्ये मन्त्रं च मृत्युजित् ॥ लिखेद्रै भूर्जपत्रे तु रोचनाकुङ्कुमेन च ॥ ३८ ॥ कर्पूरचन्दनाभ्यां च श्वेतसूत्रेण वेष्टयेत् ॥ सिक्थकेन परिच्छाद्य कलशोपरि पूजयेत् ॥ ३९ ॥ यन्त्रस्य धारणाद्रोगाः शाम्यन्ति रिपवो मृतिः ॥ विद्यां तु भेलखीं वक्ष्ये विप्रयोगमृतेर्हरीम् ॥४०॥ ओं वातले वितले बिडालमुखि इन्द्रपुत्रि उद्भवो वायुदेवेन खीलि आजी हाजा मायि वाह इत्यादिदुःखानित्यकण्ठोच्चैर्मुहूर्त्तान्वया अह मां यस्मह मुपाडि ओं भेलखि ओं स्वाहा ॥ नवदुर्गासतजसान्मुखस्तम्भो मुखस्थितात् ॥ ओं चण्डि ओं हूं फट् स्वाहा ॥ गृहीत्वा सतजं तु खड्गयुद्धेऽपराजितः ॥ ४१ ॥ इत्यादिमहापुराणे आग्नेये युद्धजयार्णवे नानाबलानिरूपणं नाम त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १२३ ॥ अथ त्रैलोक्यविजयविद्या ॥ ईश्वर उवाच ॥ त्रैलोक्यविजयां वक्ष्ये सर्वयन्त्रविमर्दिनीम् ॥ ओं हूं क्षूं हूं ओं नमो भगवति दंष्ट्रिणि भीमवक्त्रे महोग्ररूपे हिलि हिलि रक्तनेत्रे किलि किलि महानिस्वने कुलु ओं विद्युज्जिह्वे कुलु ओं निर्म्मांसे कट कट गोनसाभरणे चिलि चिलि शवमालाधारिणि द्रावय ओं महारौद्रि सार्द्रचर्म्मकृताच्छदे विजृम्भ ओं नृत्य असिलताधारिणि भृकुटीकृतापाङ्गे विषमनेत्रकृतानने वसामेदोविलिप्तगात्रे कह २ ओं हस २ क्रुद्ध २ ओं नीलजीमूतवर्णे अभ्रमालाकृताभरणे विस्फुर ओं घण्टारवावकीर्णदेहे ओं सिंहासनस्थे अरुणवर्णे ओं ह्रां ह्रीं हूं रौद्ररूपे हूं ह्रीं क्लीं ओं ह्रीं हूं ओं आकर्ष ओं धून २ ओं हे हः स्वः वज्रिणि हूं क्षूं क्षां क्रोधरूपिणि प्रज्वल २ ओं भीमभीषणे भिन्द ओं महाकाये च्छिन्द ओं करालिनि किटि २ महाभूतमातः सर्वदुष्टनिवारिणि जये ओं विजये ओं त्रैलोक्यविजये हूं फट् स्वाहा ॥ नीलवर्णां प्रेतसंस्थां विंशहस्तां यजेज्जये ॥ १ ॥ न्यासं कृत्वा तु पश्चाङ्गं रक्तपुष्पाणि होमयेत् ॥ संग्रामे सैन्यभङ्गः स्यात्त्रैलोक्यविजयापठात् ॥ २ ॥ ओं बहुरूपाय स्तम्भय स्तम्भय ओं मोहय ओं सर्वशत्रून्द्रावय ओं ब्रह्माणमाकर्षय विष्णुमाकर्षय ओं महेश्वरमाकर्षय ओं इन्द्रं टालय ओं पर्वतान् चालय ओं सप्त-





सागरान् शोषय ओं छिन्द छिन्द बहुरूपाय नमः ॥ भुजङ्गं नाम मृन्मूर्त्तिसंस्थं विद्यादरिं ततः ॥ इत्यादिमहापुराणे आग्नेये युद्धजया-
र्णवे त्रैलोक्यविजयविद्या नाम चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥ अथ सङ्ग्रामविजयवि द्या ॥ ईश्वर उवाच ॥ सङ्ग्रामविजयां
विद्यां पदमालां वदाम्यहम् ॥ ओं ह्रीं चामुण्डे श्मशानवासिनि खट्वाङ्गकपालहस्ते महाप्रेतसमारूढे महाविमानसमाकुले कालरात्रि महा-
गणपरिवृते महामुखे बहुभुजे घण्टाडमरुकिङ्किणि अट्टाट्टहासे किलि किलि किलि ओं हूं फट् दंष्ट्राघोरान्धकारिणि नादशब्दबहुले
गजचर्म्मप्रावृतशरीरे मांसदिग्धे लेलिहानोग्रजिह्वे महाराक्षसि रौद्रदंष्ट्राकराले भीमाट्टाट्टहासे स्फुरद्विद्युत्प्रभे चल चल ओं चकोरनेत्रे चिलि
चिलि ओं ललज्जिह्वे ओं भीं भ्रुकुटीमुखि हुङ्कारभयत्रासिनि कपालमालावेष्टितजटामुकुटशशाङ्कधारिणि अट्टाट्टहासे किलि किलि ओं
हूं दंष्ट्राघोरान्धकारिणि सर्वविघ्नविनाशिनि इदं कर्म्म साधय साधय ओं शीघ्रं कुरु कुरु ओं फट् ओं अङ्कुशेन शमय प्रवेशय ओं रङ्ग
रङ्ग कम्पथ कम्पय ओं चालय ओं रुधिरमांसमद्यप्रिये हन हन ओं कुट्ट कुट्ट ओं छिन्द ओं मारय ओं अनुक्रमय ओं वज्रशरीरं पातय
ओं त्रैलोक्यगतं दुष्टमदुष्टं वा गृहीतमगृहीतं वा आवेशय ओं नृत्य ओं वन्द ओं कोटराक्षि ऊर्ध्वकेशि उलूकवदने करङ्किणि ओं करङ्कमा-
लाधारिणि दह ओं पच पच गृह्ण ओं मण्डलमध्ये प्रवेशय ओं किं विलम्बसि ब्रह्मसत्येन विष्णुसत्येन रुद्रसत्येन ऋषिसत्येन आवेशय ओं
किलि किलि ओं खिलि खिलि विलिविलि ओं विकृतरूपधारिणि कृष्णभुजङ्गवेष्टितशरीरे सर्वग्रहावेशनि प्रलम्बौष्ठिनि भ्रूभङ्गलग्ननासिके
विकटमुखि कपिलजटे ब्राह्मि भञ्ज ओं ज्वालामुखि स्वन ओं पातय ओं रक्ताक्षि घूर्णय भूमिं पातय ओं शिरो गृह्ण चक्षुर्मीलय ओं हस्त-
पादौ गृह्ण ओं मुद्रां स्फोटय ओं फट् ओं विदारय ओं त्रिशूलेन च्छेदय ओं वज्रेण हन ओं दण्डेन ताडय ताडय ओं चक्रेण च्छेदय च्छेदय
ओं शक्त्या भेदय दंष्ट्रया कीलय ओं कर्णिकया पाटय ओं अङ्कुशेन गृह्ण ओं शिरोऽक्षिज्वरमैकाहिकं द्व्याहिकं त्र्याहिकं चातुर्थिकं डाकि ॥१००
नीस्कन्दग्रहान् मुञ्च मुञ्च ओं पच ओं उत्सादय ओं भूमिं पातय ओं गृह्ण ओं ब्रह्माणि ओं एहि माहेश्वरि एहि ओं कौमारि एहि ओं वैष्णवि
एहि ओं वाराहि एहि ओं ऐन्द्रि एहि ओं चामुण्डे एहि ओं रेवति एहि ओं आकाशरेवति एहि ओं हिमवच्चारिणि एहि ओं रुरुमर्दिनि
असुरक्षयङ्करि आकाशगामिनि पाशेन बन्ध बन्ध अङ्कुशेन कट कट समयं तिष्ठ ओं मण्डलं प्रवेशय ओं गृह्ण मुखम्बन्ध ओं चक्षुर्बन्ध हस्त-

मूकस्य कलहविग्रहविवादेषु भञ्जय ॥ ओं मथ मथ सर्वपथिकान् योऽसौ युगान्तकाले दिधक्षति इमां पूजां रौद्रमूर्तिः सहस्रांशुः शुक्रः स ते रक्षतु जीवितम् ॥ संवर्त्तकाग्नितुल्यश्च त्रिपुरान्तकरः शिवः ॥ सर्वदेवमयः सोऽपि तव रक्षतु जीवितम् ॥ लिखि लिखि खिलि स्वाहा॥ एवं स्नातस्तु मन्त्रेण जुहुयात्तिलतण्डुलम् ॥ २ ॥ पञ्चामृतैस्तु संस्नाप्य पूजयेच्छूलपाणिनम् ॥ स्नानान्यन्यानि वक्ष्यामि सर्वदा विजयाय ते ॥ ३ ॥ स्नानं घृतेन कथितमायुष्यवर्द्धनं परम् ॥ गोमयेन च लक्ष्मीः स्याद्गोमूत्रेणाघमर्दनम् ॥ ४ ॥ क्षीरेण बलबुद्धिः स्याद्दध्ना लक्ष्मीविवर्द्धनम् ॥ कुशोदकेन पापान्तः पञ्चगव्येन सर्वभाक् ॥ ५ ॥ शतमूलेन सर्वाप्तिर्गोशृङ्गोदकतोऽघजित् ॥ पलाशबिल्वकमलकुशस्नानं तु सर्वदम् ॥ ६ ॥ वचा हरिद्रे द्वे मुस्तं स्नानं रक्षोहणं परम् ॥ आयुष्यं च यशस्यं च धर्म्ममेधाविवर्द्धनम् ॥ ७ ॥ हैमाद्भिश्चैव माङ्गल्यं रूप्यताम्रोदकैस्तथा ॥ रत्नोदकैस्तु विजयः सौभाग्यं सर्वगन्धकैः ॥ ८ ॥ फलाद्भिश्च तथारोग्यं धात्र्यद्भिः परमां श्रियम् ॥ तिलसिद्धार्थकैर्लक्ष्मीः सौभाग्यं च प्रियङ्गुणा ॥ ९ ॥ पद्मोत्पलकदम्बैश्च श्रीर्बलं बलाद्रुमोदकैः ॥ विष्णुपादोदकस्नानं सर्वस्नानेभ्य उत्तमम् ॥ १० ॥ एकाकी एककामायेत्येकोर्कं विधिवच्चरेत् ॥ अक्रन्दयाति सूक्तेन प्रवघ्नीयान्मणिं करे ॥ ११ ॥ कुष्ठपाठा वचाशुण्ठीशङ्खलोहादिको मणिः ॥ सर्वेषामेव कामानामीश्वरो भगवान्हरिः ॥१२॥ तस्य संपूजनादेव सर्वान्कामान्समश्नुते॥ स्नापयित्वा घृतक्षीरैः पूजयित्वा च पित्तहा ॥१३॥ पञ्चमुद्गबलिं दत्त्वा अतिसारात्प्रमुच्यते ॥ पञ्चगव्येन संस्नाप्य वातव्याधिं विनाशयेत् ॥१४॥ द्विस्नेहस्नपनाच्छ्लेष्मरोगहा चातिपूजया ॥ घृतं तैलं तथा क्षौद्रं स्नानं तु त्रिरसं परम् ॥१५॥ स्नानं घृताम्बु द्विस्नेहं समलं घृततैलकम् ॥ क्षौद्रमिक्षुरसं क्षीरं स्नानं त्रिमधुरं स्मृतम् ॥१६॥ घृतमिक्षुरसं तैलं क्षौद्रं च त्रिरसं श्रिये ॥ अनुलेपस्त्रिशुक्लस्तु कर्पूरोशीरचन्दनैः ॥१७॥ चन्दनागरुकर्पूरमृगदर्पैः सकुङ्कुमैः ॥ पञ्चानुलेपनं विष्णोः सर्वकामफलप्रदम् ॥१८॥ त्रिसुगन्धं च कर्पूरं तथा चदनकुङ्कुमैः ॥ मृगदर्पं सकर्पूरं मलयं सर्वकामदम् ॥ १९ ॥ जातीफलं सकर्पूरं चन्दनं च त्रिशीतकम् ॥ पीतानि शुक्लवर्णानि तथा शुक्लानि भार्गव ॥ २० ॥ कृष्णानि चैव रक्तानि पञ्चवर्णानि निर्दिशेत् ॥ उत्पलं पद्मजाती च त्रिशीतं हरिपूजने ॥ २१ ॥ कुङ्कुमं रक्तपद्मानि त्रिरक्तं रक्तमुत्पलम् ॥ धूपदीपादिभिः प्रार्च्य विष्णुं शान्तिर्भवेन्नृणाम् ॥ २२ ॥ चतुरस्रकरे कुण्डे ब्राह्मणाश्चाष्ट षोडश ॥ लक्षहोमं कोटिहोमं तिलाज्ययवधान्यकैः ॥

ग्रहानभ्यर्च्य गायत्र्या सर्वशान्तिः क्रमाद्भवेत् ॥ २३ ॥ इत्यादिमहापुराणे आग्नेये माहेश्वरस्नानलक्षकोटिहोमादिकं नाम सप्तषष्ट्यधिक-
॥१८१॥ द्विशततमोऽध्यायः ॥ २६७ ॥ अथ नीराजनाविधिः ॥ पुष्कर उवाच ॥ कर्म सांवत्सरं राज्ञां जन्मर्क्षे पूजयेच्च तम् ॥ मासि मासि च अ०२६८
संक्रान्तौ सूर्य्यसोमादिदेवताः ॥ १ ॥ अगस्त्यस्योदयेऽगस्त्यं चातुर्मास्यं हरिं यजेत् ॥ शयनोत्थापने पञ्चदिनं कुर्य्यात्समुत्सवम् ॥ २ ॥
प्रोष्ठपादे सिते पक्षे प्रतिपत्प्रभृति क्रमात् ॥ शिबिरात्पूर्वदिग्भागे शक्रार्थं भवनं चरेत् ॥ ३ ॥ तत्र शक्रध्वजं स्थाप्य शचीं शक्रं च
पूजयेत् ॥ अष्टम्यां वाद्यघोषेण तां तु यष्टिं प्रवेशयेत् ॥ ४ ॥ एकादश्यां सोपवासो द्वादश्यां केतुमुत्थितम् ॥ यजेद्वस्त्रादिसंवीतं
घटस्थं सुरपं शचीम् ॥ ५ ॥ वर्द्धस्वेन्द्र जितामित्र वृत्रहन्पाकशासन ॥ देव देव महाभाग त्वं हि भूमिष्ठतां गतः ॥ ६ ॥ त्वं प्रभुः शाश्व-
तश्चैव सर्वभूताहिते रतः ॥ अनन्ततेजा वैराजो यशोजयविवर्द्धनः ॥ ७ ॥ तेजस्ते वर्द्धयन्त्वेते देवाः शक्रः सुवृष्टिकृत् ॥ ब्रह्मविष्णुमहेशाश्च
कार्त्तिकेयो विनायकः ॥ ८ ॥ आदित्या वसवो रुद्राः साध्याश्च भृगवो दिशः ॥ मरुद्गणा लोकपाला ग्रहा यक्षादिनिम्नगाः ॥ ९ ॥ समुद्राः
श्रीर्मही गौरी चण्डिका च सरस्वती ॥ प्रवर्त्तयन्तु ते तेजो जय शक्र शचीपते ॥ १० ॥ तव चापि जयान्नित्यं मम सम्पद्यतां शुभम् ॥
प्रसीद राज्ञां विप्राणां प्रजानामपि सर्वशः ॥ ११ ॥ भवत्प्रसादात्पृथिवी नित्यं सस्यवती भवेत् ॥ शिवं भवतु निर्विघ्नं शाम्यन्तामीतयो
भृशम् ॥ १२ ॥ मन्त्रेणेन्द्रं समभ्यर्च्य जितभूः स्वर्गमाप्नुयात् ॥ भद्रकालीं पटे लिख्य पूजयेदाश्विने जये ॥ १३ ॥ शुक्लपक्षे तथाष्टम्या-
मायुधं कार्मुकं ध्वजम् ॥ छत्रं च राजलिङ्गानि शस्त्राद्यं कुसुमादिभिः ॥ १४ ॥ जाग्रन्निशि बलिं दद्याद्द्वितीयेऽह्नि पुनर्यजेत् ॥ भद्रकालि
महाकालि दुर्गे दुर्गार्त्तिहारिणि ॥ १५ ॥ त्रैलोक्यविजये चण्डि मम शान्तौ जये भव ॥ नीराजनाविधिं वक्ष्ये ह्यैशान्यां मान्दिरं चरेत्
॥ १६ ॥ तोरणत्रितयं तत्र गृहे देवान्यजेत्सदा ॥ चित्रां त्यक्त्वा यदा स्वातिं सविता प्रतिपद्यते ॥ १७ ॥ ततः प्रभृति कर्त्तव्यं याव-
त्स्वातौ रविः स्थितः ॥ ब्रह्मा विष्णुश्च शम्भुश्च शक्रश्चैवानलानिलौ ॥ १८ ॥ विनायकः कुमारश्च वरुणो धनदो यमः ॥ विश्वेदेवा ॥१८२॥
वैश्रवसो गजाश्चाष्टौ च तान्यजेत् ॥ १९ ॥ कुमुदैरावणौ पद्मः पुष्पदन्तश्च वामनः ॥ सुप्रतीकोऽञ्जनो नीलः पूजा
कार्य्या गृहादिके ॥ २० ॥ पुरोधा जुहुयादाज्यं समित्सिद्धार्थकं तिलाः ॥ कुम्भा अष्टौ पूजिताश्च तैः स्नाप्याश्वगजोत्तमाः ॥ २१ ॥

अश्वाः स्नाप्या ददेत्पिण्डांस्ततो हि प्रथमं गजान् ॥ निष्कामयेत्तोरणेस्तु गोपुरादि न लङ्घयेत् ॥ २२ ॥ विक्रमेयुस्ततः सर्वे राजलिङ्गं गृहे यजेत् ॥ वारुणे वरुणं प्राच्यं रात्रौ भूतबलिं ददेत् ॥ २३ ॥ विशाखायां गते सूर्य्ये आश्रमे निवसेन्नृपः ॥ अलङ्कुर्य्यांदिने तस्मिन्वाहनं तु विशेषतः ॥ २४ ॥ पूजिता राजलिङ्गश्च कर्त्तव्या नरहस्तगः ॥ हस्तिनं तुरगं छत्रं खड्गं चापं च दुन्दुभिम् ॥ २५ ॥ ध्वजं पताकां धर्मज्ञ कालज्ञस्त्वाभिमन्त्रयेत् ॥ आभिमन्त्र्य ततः सर्वान्कुर्य्यात्कुञ्जरधूर्गतान् ॥ २६ ॥ कुञ्जरोपरिगौ स्यातां सांवत्सर-पुरोहितौ ॥ मन्त्रितांश्च समारुह्य तोरणेन विनिर्गमेत् ॥ २७ ॥ निष्क्रम्य नागमारुह्य तोरणेनाथ निर्गमेत् ॥ वलिं विभज्य विधिवद्राजा कुञ्जरधूर्गतः ॥ २८ ॥ उल्मूकानां तु निचयमादीपितंदिगन्तरम् ॥ राजा प्रदक्षिणं कुर्य्यात्रीन्वारान्सुसमाहितः ॥ २९ ॥ चतुरङ्गबलो-पेतः सर्वसैन्येन नादयन् ॥ एवं कृत्वा गृहं गच्छेद्विसर्जितजलाञ्जलिः ॥ शान्तिर्नीराजनाख्येयं वृद्धये रिपुमर्द्दिनी ॥ ३० ॥ इत्यादिमहा-पुराणे आग्नेये नीराजनाविधिर्नामाष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥ अथ छत्रादिमन्त्रादयः ॥ पुष्कर उवाच ॥ छत्रादिमन्त्रान्वक्ष्यामि यैस्तत्पूज्य जयादिकम् ॥ ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥ १ ॥ सूर्य्यस्य च प्रभावेण वर्द्धस्व त्वं महामते ॥ पाण्डराभप्रतीकाश हिमकुन्देन्दुसुप्रभ ॥ २ ॥ यथाम्बुदश्छादयते शिवायैनां वसुन्धराम् ॥ तथाच्छादय राजानं विजया-रोग्यवृद्धये ॥ ३ ॥ गन्धर्वकुलजातस्त्वं मा भूयाः कुलदूषकः ॥ ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥ ४ ॥ प्रभावाच्च हुताशस्य वर्द्धस्व त्वं तुरङ्गम ॥ तेजसा चैव सूर्य्यस्य मुनीनां तपसा तथा ॥ ५ ॥ रुद्रस्य ब्रह्मचर्य्येण पवनस्य बलेन च ॥ स्मर त्वं राजपुत्रोऽसि कौस्तुभं तु मणिं स्मर ॥ ६ ॥ यां गतिं ब्रह्महा गच्छेत्पितृहा मातृहा तथा ॥ भूम्यर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः ॥ ७ ॥ व्रजे-स्त्वं तां गतिं क्षिप्रं मा तत्पापं भवेत्तव ॥ विकृतिं मापगच्छेस्त्वं युद्धेऽध्वानि तुरङ्गम ॥ ८ ॥ रिपून्विनिघ्नन्समरे सह भर्त्रा सुखी भव ॥ शक्रकेतो महावीर्य्य सुवर्णस्त्वामुपाश्रितः ॥ ९ ॥ पतत्रिराड्वैनतेयस्तथा नारायणध्वजः ॥ काश्यपेयोऽमृताहर्त्ता नागारिर्विष्णुवाहनः ॥ ॥ १० ॥ अप्रमेयो दुराधर्षो रणे देवारिसूदनः ॥ महाबलो महावेगो महाकायोऽमृताशनः ॥ ११ ॥ गरुत्मान्मारुतगतिस्त्वयि सन्निहितः स्थितः ॥ विष्णुना देवदेवेन शक्रार्थं स्थापितो ह्यसि ॥ १२ ॥ जयाय भव मे नित्यं वृद्धयेऽथ बलस्य च ॥ साश्ववर्मायुधान्योधान्र-

क्षास्माकं रिपून्दह ॥ १३ ॥ कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ॥ सुप्रतीकोऽञ्जनो नीलो ह्यतेऽष्टौ देवयोनयः ॥१४॥ तेषां पुत्राश्च
पौत्राश्च बलान्यष्टौ समाश्रिताः ॥ भद्रो मन्दो मृगश्चैव गजः संकीर्ण एव च ॥ १५॥ वने वने प्रसूतास्ते स्मर योनिं महागजाः ॥ पान्तु
त्वां वसवो रुद्रा आदित्याः समरुद्गणाः ॥ १६ ॥ भर्त्तारं रक्ष नागेन्द्र समयः परिपाल्यताम् ॥ ऐरावताधिरूढस्तु वज्रहस्तः शतक्रतुः ॥
॥ १७ ॥ पृष्ठतोऽनुगतस्त्वेष रक्षतु त्वां स देवराट् ॥ अवाप्नुहि जयं युद्धे सुस्थश्चैव सदा व्रज ॥ १८ ॥ अवाप्नुहि बलं चैव चैरावत-
समं युधि ॥ श्रीस्ते सोमाद्बलं विष्णोस्तेजः सूर्य्याज्जवोऽनिलात् ॥ १९॥ स्थैर्य्यं गिरेर्जयं रुद्राद्यशो देवात्पुरन्दरात् ॥ युद्धे रक्षन्तु नागा-
स्त्वां दिशश्च सह दैवतैः ॥ २० ॥ अश्विनौ सह गन्धर्वैः पान्तु त्वां सर्वतो दिशः ॥ मनवो वसवो रुद्रा वायुः सोमो महर्षयः ॥ २१ ॥
नागकिन्नरगन्धर्वयक्षभूतगणा ग्रहाः ॥ प्रमथास्तु सहादित्यैर्भूतेशो मातृभिः सह ॥ २२ ॥ शक्रः सेनापतिः स्कन्दो वरुणश्चाश्रितस्त्वयि ॥
प्रदहन्तु रिपून्सर्वान्राजा विजयमृच्छतु ॥ २३ ॥ यानि प्रयुक्तान्यरिभिर्भूषणानि समन्ततः ॥ पतन्तु तव शत्रूणां हतानि तव तेजसा ॥
॥ २४ ॥ कालनेमिवधे यद्वद्युद्धे त्रिपुरघातने ॥ हिरण्यकशिपोर्युद्धे वधे सर्वासुरेषु च ॥ २५ ॥ शोभितासि तथैवाद्य शोभस्व समयं
स्मर ॥ नीलश्वेतामिमां दृष्ट्वा नश्यन्त्वाशु नृपारयः ॥ २६ ॥ व्याधिभिर्विविधैर्घोरैः शस्त्रैश्च युधि निर्जिताः ॥ पूतना रेवती लेखा
कालरात्रीति पठ्यते ॥ २७ ॥ दहन्त्वाशु रिपून्सर्वान्पताके त्वामुपाश्रिताः ॥ सर्वमेधे महायज्ञे देवदेवेन शूलिना ॥ २८ ॥ शर्वेण
जगतश्चैव सारेण त्वं विनिर्मितः ॥ नन्दकस्यापरां मूर्त्तिं स्मर शत्रुनिवर्हण ॥ २९ ॥ नीलोत्पलदलश्याम कृष्ण दुःस्वप्ननाशन ॥ असि-
र्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ॥ ३० ॥ श्रीगर्भो विजयश्चैव धर्मपालस्तथैव च ॥ इत्यष्टौ तव नामानि पुरोक्तानि स्वयम्भुवा ॥
॥ ३१ ॥ नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः ॥ हिरण्यं च शरीरं ते दैवतं ते जनार्दनः ॥ ३२ ॥ राजानं रक्ष निस्त्रिंश सबलं सपुरं
तथा ॥ पिता पितामहो देवः स त्वं पालय सर्वदा ॥ ३३ ॥ शर्मप्रदस्त्वं समरे वर्मन्सैन्ये यशोऽद्य मे ॥ रक्ष मां रक्षणीयोऽहं तवानघ नमो- 
ऽस्तु ते ॥ ३४ ॥ दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पनः ॥ भव भूमिपसैन्यानां यथा विजयवर्द्धनः ॥ ३५ ॥ यथा जीमूतघोषेण
हृष्यन्ति मत्तवारणाः ॥ तथास्तु तव शब्देन दर्पोऽस्माकं मुदाऽऽवह ॥ ३६ ॥ यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते ॥ तथा तु तव

शब्देन त्रस्यन्त्वस्माद्विषो रणे ॥ ३७ ॥ मन्त्रैः सदार्चनीयास्ते योजनीया जयादिषु ॥ घृतकम्बलः ( ड ) विष्ण्वादेस्त्वभिषेकं च वत्सरे ॥ राज्ञोभिषेकः कर्तव्यो दैवज्ञेन पुरोधसा ॥ ३८ ॥ इत्यादिमहापुराणे आग्नेये छत्रादिमन्त्रादिकं नामैकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥ ॥ अथ विष्णुपञ्जरम् ॥ पुष्कर उवाच ॥ त्रिपुरं जघ्नुषः पूर्वं ब्रह्मणा विष्णुपञ्जरम् ॥ शङ्करस्य द्विजश्रेष्ठ रक्षणाय निरूपितम् ॥ १ ॥ वागीशेन च शक्रस्य बलं हन्तुं प्रयासतः ॥ तस्य स्वरूपं वक्ष्यामि तत्त्वं शृणु जयादितम् ॥ २ ॥ विष्णुः प्राच्यां स्थितश्चक्री हरिर्दक्षिणतो गदी ॥ प्रतीच्यां शार्ङ्गधृग्विष्णुर्जिष्णुः खड्गी ममोत्तरे ॥ ३ ॥ हृषीकेशो विकोणेषु तच्छिद्रेषु जनार्दनः ॥ क्रोडरूपी हरिर्भूमौ नरसिंहोऽम्बरे मम ॥ ४ ॥ क्षुरान्तममलं चक्रं भ्रमत्येतत्सुदर्शनम् ॥ अस्यांशुमाला दुष्प्रेक्ष्या हन्तुं प्रेतनिशाचरान् ॥ ५ ॥ गदा चेयं सहस्रार्चिः प्रदीप्तपावकोज्ज्वला ॥ रक्षोभूतपिशाचानां डाकिनीनां च नाशिनी ॥ ६ ॥ शार्ङ्गविस्फूर्जितं चैव वासुदेवस्य मद्रिपून् ॥ तिर्य्यङ्मनुष्यकूष्माण्डप्रेतादीन्हन्त्वशेषतः ॥ ७ ॥ खड्गधाराज्वलज्ज्योत्स्नानिर्धूता ये समाहिताः ॥ ते यान्तु शाम्यतां सद्यो गरुडेनेव पन्नगाः ॥ ८ ॥ ये कूष्माण्डास्तथा यक्षा ये दैत्या ये निशाचराः ॥ प्रेता विनायकाः क्रूरा मनुष्या जम्भगाः खगाः ॥ ९ ॥ सिंहादयश्च पशवो दन्दशूकाश्च पन्नगाः ॥ सर्वे भवन्तु ते सौम्याः कृष्णशङ्खरवाहताः ॥ १० ॥ चित्तवृत्तिहरा ये मे ये जनाः स्मृतिहारकाः ॥ बलौजसां च हर्त्तारश्छायाविभ्रंशकाश्च ये ॥ ११ ॥ ये चोपभोगहर्त्तारो ये च लक्षणनाशकाः ॥ कूष्माण्डास्ते प्रणश्यन्तु विष्णुचक्ररवाहताः ॥ १२ ॥ बुद्धिस्वास्थ्यं मनःस्वास्थ्यं स्वास्थ्यमैन्द्रियकं तथा ॥ ममास्तु देवदेवस्य वासुदेवस्य कीर्त्तनात् ॥ १३ ॥ पृष्ठे पुरस्तान्मम दक्षिणोत्तरे विकोणतश्चास्तु जनार्दनो हरिः ॥ तमीड्यमीशानमनन्तमच्युतं जनार्दनं प्रणिपतितो न सीदति ॥१४॥ यथा परं ब्रह्म हरिस्तथा परो जगत्स्वरूपश्च स एव केशवः ॥ सत्येन तेनाच्युतनामकीर्त्तनात्प्रणाशयेत्तु त्रिविधं ममाशुभम् ॥ १५ ॥ इत्यादिमहापुराणे आग्नेये विष्णुपंजरं नाम सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥ अथ वेदशाखादिकीर्त्तनम् ॥ पुष्कर उवाच ॥ सर्वानुग्राहका मन्त्राश्चतुर्वर्गप्रसाधकाः ॥ ऋगथर्वं तथा साम यजुःसंख्या तु लक्षकम् ॥ १ ॥ भेदः सांखायनश्चैक आश्वलायनो द्वितीयकः ॥ शतानि दश मन्त्राणां ब्राह्मणा द्विसहस्रकम्

( २११० ) ॥ २ ॥ ऋग्वेदो हि प्रमाणेन स्मृतो द्वैपायनादिभिः ॥ एकोनद्विसहस्रं तु मन्त्राणां यजुषस्तथा ( १९९९ )
॥ ३ ॥ शतानि दश विप्राणां षडशीतिश्च शाखिकाः ॥ काण्वी माध्यन्दिनी संज्ञा कठी माध्यकठी तथा ॥ ४ ॥ मैत्रायणी च संज्ञा च
तैत्तिरीयाभिधानिका ॥ वैशम्पायनिकेत्याद्या शाखा यजुषि संस्थिताः ॥ ५ ॥ साम्नः कौथुमसंज्ञैका द्वितीयाथर्वणायनी ॥ गानान्यपि
च चत्वारि वेद आरण्यकं तथा ॥ ६ ॥ उक्था ऊह चतुर्थं च मन्त्रा नवसहस्रकाः ॥ सचतुःशतकाश्चैव ब्रह्मसङ्ख्टकाः स्मृताः ॥ ७ ॥
पञ्चविंशतिरेवात्र साममानं ( ९४२५ ) प्रकीर्त्तितम् ॥ सुमन्तुर्जाजलिश्चैव श्लोकाय निरर्थके ॥ ८ ॥ शौनकः पिप्पलादश्च मुञ्जकेशा-
दयोऽपरे ॥ मन्त्राणामयुतं षाष्टिशतं-( १६०० ) चोपनिषच्छतम् ॥ ९ ॥ व्यासरूपी स भगवाञ्छाखाभेदाद्यकारयत् ॥ शाखाभेदा-
दयो विष्णुरीतिहासः पुराणकम् ॥ १० ॥ प्राप्य व्यासात्पुराणादि सूतो वै लोमहर्षणः ॥ सुमतिश्चाग्निवर्च्चाश्च मित्रयुः शिंशपायनः ॥
॥ ११ ॥ कृतव्रतोऽथ सावर्णिः षट्शिष्यास्तस्य चाभवन् ॥ शांशपायनादयश्चक्रुः पुराणानां तु संहिताः ॥ १२ ॥
ब्रह्मादीनि पुराणानि हरिविद्या दशाष्ट च ॥ महापुराणे ह्याग्नेये विद्यारूपो हरिः स्थितः ॥ १३ ॥ सप्रपञ्चो निष्प्रपञ्चो मूर्त्तामूर्त्त-
स्वरूपधृक् ॥ तं ज्ञात्वाभ्यर्च्य संस्तूय भुक्तिमुक्तिमवाप्नुयात् ॥ १४ ॥ विष्णुर्जिष्णुर्भविष्णुश्च अग्निसूर्य्यादिरूपवान् ॥ अग्निरूपेण
देवादेर्मुखं विष्णुः ॥ परा गतिः ॥ १५ ॥ वेदेषु सपुराणेषु यज्ञमूर्त्तिश्च गीयते ॥ आग्नेयाख्यं पुराणं तु रूपं विष्णोर्महत्तरम् ॥ १६ ॥
आग्नेयाख्यपुराणस्य कर्त्ता श्रोता जनार्दनः ॥ तस्मात्पुराणमाग्नेयं सर्ववेदमयं महत् ॥ १७ ॥ सर्वविद्यामयं पुण्यं सर्वज्ञानमयं वरम् ॥
सर्वात्महरिरूपं हि पठतां शृण्वतां नृणाम् ॥ १८ ॥ विद्यार्थिनां च विद्यादमर्थिनां श्रीधनप्रदम् ॥ राज्यार्थिनां राज्यदं च धर्मदं धर्मका-
मिनाम् ॥ १९ ॥ स्वर्गार्थिनां स्वर्गदं च पुत्रदं पुत्रकामिनाम् ॥ गवादिकामिनां गोदं ग्रामदं ग्रामकामिनाम् ॥ २० ॥ कामार्थिनां कामदं
च सर्वसौभाग्यसम्प्रदम् ॥ गुणकीर्त्तिप्रदं नृणां जयदं जयकामिनाम् ॥ २१ ॥ सर्वेप्सूनां सर्वदं तु मुक्तिदं मुक्तिकामिनाम् ॥ पापघ्नं
पापकर्तॄणामाग्नेयं हि पुराणकम् ॥ २२ ॥ इत्यादिमहापुराणे आग्नेये वेदशाखादिकीर्तनं नामैकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥
अथ दानादिमाहात्म्यम् ॥ पुष्कर उवाच ॥ ब्रह्मणाभिहितं पूर्वं यावन्मात्रं मरीचये ॥ लक्षार्द्धं तु तद्ब्राह्मं लिखित्वा सम्प्रदापयेत् ॥ १ ॥

वैशाख्यां पौर्णमास्यां च स्वर्गार्थी जलधेनुमत् ॥ पाद्मं द्वादशसाहस्रं ज्येष्ठे दद्याच्च धेनुमत् ॥२॥ वराहकल्पवृत्तान्तमाधिकृत्य पराशरः ॥ त्रयोविंशतिसाहस्रं वैष्णवं प्राह चार्पयेत् ॥३॥ जलधेनुमदाषाढ्यां विष्णोः पदमवाप्नुयात् ॥ चतुर्दशसहस्राणि वायवीयं हरिप्रियम् ॥ ४ ॥ श्वेतकल्पप्रसङ्गेन धर्मान्वायुरिहाब्रवीत् ॥ दद्याल्लिखित्वा तद्विप्रे श्रावण्यां गुडधेनुमत् ॥५॥ यत्राधि कृत्य गायत्रीं कीर्त्यते धर्मविस्तरः ॥ वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥६॥ सारस्वतस्य कल्पस्य प्रोष्ठपद्यां तु तद्ददेत् ॥ अष्टादशसहस्राणि हेमसिंहसमन्वितम् ॥७॥ यत्राऽऽह नारदो धर्मान्बृहत्कल्पाश्रितानिह ॥ पञ्चविंशसहस्राणि नारदीयं तदुच्यते ॥ ८ ॥ सधेनुं चाश्विने दद्यात्सिद्धिमात्यन्तिकीं लभेत् ॥ यत्राधिकृत्य शत्रूणां धर्माधर्मविचारणा ॥९॥ कार्तिक्यां नवसाहस्रं मार्कण्डेयमथार्पयेत् ॥ अग्निना यद्वसिष्ठाय प्रोक्तं चाग्नेयमेव तत् ॥ १० ॥ लिखित्वा पुस्तकं दद्यान्मार्गशीर्ष्यां स सर्वदः ॥ द्वादशैव सहस्राणि सर्वविद्याववोधनम् ॥ ११ ॥ चतुर्दसहशस्राणि भविष्यं सूर्य्यसम्भवम् ॥ भवस्तु मनवे प्राह दद्यात्पौष्यां गुडादिमत् ॥ १२ ॥ सावर्णिना नारदाय ब्रह्मवैवर्त्तमीरितम् ॥ रथन्तरस्य वृत्तान्तमष्टादशसहस्रकम् ॥ १३ ॥ माघ्यां दद्याद्वराहस्य चरितं ब्रह्मलोकभाक् ॥ यत्राग्निलिङ्गमध्यस्थो धर्मान्प्राह महेश्वरः ॥ १४ ॥ आग्नेयकल्पे तल्लिङ्गमेकादशसहस्रकम् ॥ तद्दत्त्वा शिवमाप्नोति फाल्गुन्यां तिलधेनुमत् ॥ १५ ॥ चतुर्दशसहस्राणि वाराहं विष्णुनेरितम् ॥ भूमौ वराहचरितं मानवस्य प्रवृत्तितः ॥ १६ ॥ सहेमगरुडं चैत्र्यां पदमाप्नोति वैष्णवम् ॥ चतुरशीतिसाहस्रं स्कान्दं स्कन्देरितं महत् ॥१७॥ अधिकृत्य सधर्मांश्च कल्पे तत्पुरुषेऽर्पयेत् ॥ वामनं दशसाहस्रं धौमकल्पे हरेः कथाम् ॥१८॥ दद्याच्छरदि विषुवे धर्मार्थादिनिबोधनम् ॥ कूर्मं चाष्टसहस्रं च कूर्मोक्तं च रसातले ॥१९॥ इन्द्रद्युम्नप्रसङ्गेन दद्यात्तद्धेमकूर्मवत् ॥ त्रयोदशसहस्राणि मात्स्यं कल्पादितोऽब्रवीत् ॥ २० ॥ मत्स्यो हि मनवे दद्याद्विषुवे हेममत्स्यवत् ॥ गारुडं चाष्टसाहस्रं विष्णूक्तं तार्क्ष्यकल्पके ॥ २१ ॥ विश्वाण्डाद्गरुडोपत्तिं तद्दद्याद्धेमहंसवत् ॥ ब्रह्मा ब्रह्माण्डमाहात्म्यमाधिकृत्याब्रवीत्तु यत् ॥ २२ ॥ तच्च द्वादशसाहस्रं ब्रह्माण्डं तद्द्विजेऽर्पयेत् ॥ भारते पर्वसमाप्तौ वस्त्रगन्धस्रगादिभिः ॥ २३ ॥ वाचकं पूजयेदादौ भोजयेत्पायसैर्द्विजान् ॥ गोभूग्रामसुवर्णादि दद्यात्पर्वणि पर्वणि ॥ २४ ॥ समाप्ते भारते विप्रं संहितापुस्तकं यजेत् ॥ शुभे देशे निवेश्याथ क्षौमवस्त्रादिनावृतान् ॥ २५ ॥ नरनारायणौ पूज्यौ पुस्तकं कुसुमादिभिः ॥

गोन्नत्रभूहेम दत्त्वाथ भोजयित्वा क्षमापयेत् ॥ २६ ॥ महादानानि देयानि रत्नानि विविधानि च ॥ माषकौ द्वौ त्रयश्चैव मासे मासे प्रदापयेत् ॥ २७ ॥ अयनादौ श्रावकस्य दानमादौ विधीयते ॥ श्रोतृभिः सकलैः कार्य्यं श्रावके पूजनं द्विज ॥ २८ ॥ इतिहासपुराणानां पुस्तकानि प्रयच्छति ॥ पूजयित्वायुरारोग्यं स्वर्गमोक्षमवाप्नुयात् ॥ २९ ॥ इत्यादिमहापुराणे आग्नेये दानादिमाहात्म्यं नाम द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥ अथ सूर्य्यवंशकीर्त्तनम् ॥ अग्निरुवाच ॥ सूर्य्यवंशं सोमवंशं राज्ञां वंशं वदामि ते ॥ हरेर्ब्रह्मा पद्मगोऽभून्मरीचिर्ब्रह्मणः सुतः ॥ १ ॥ मरीचेः कश्यपस्तस्माद्विवस्वांस्तस्य पत्न्यपि ॥ संज्ञा राज्ञी प्रभा तिस्रो राज्ञी रैवतपुत्रिका ॥ ॥ २ ॥ रेवन्तं सुषुवे पुत्रं प्रभातं च प्रभा रवेः ॥ त्वाष्ट्री संज्ञा मनुं पुत्रं यमलौ यमुनां यमम् ॥ ३ ॥ छाया संज्ञा च सावर्णिं मनुं वैवस्वतं सुतम् ॥ शनिं च तपतीं विष्टिं संज्ञायां चाश्विनौ पुनः ॥ ४ ॥ मनोर्वैवस्वतस्यासन्पुत्रा वै न च तत्समाः ॥ इक्ष्वाकुश्चैव नाभागो धृष्टः शर्य्यातिरेव च ॥ ५ ॥ नरिष्यन्तस्तथा प्रांशुर्नाभागाद्यष्ट सत्तमाः ॥ करूषश्च पृषध्रश्च अयोध्यायां महाबलाः ॥ ६ ॥ कन्येला च मनोरासीद्बुधात्तस्यां पुरूरवाः ॥ पुरूरवसमुत्पाद्य सेला सुद्युम्नतां गता ॥ ७ ॥ सुद्युम्नादुत्कलगयौ विनताश्वस्त्रयो नृपाः ॥ उत्कलस्योत्कलं राष्ट्रं विनताश्वस्य पश्चिमा ॥ ८ ॥ दिक्पूर्वा राजवर्य्यस्य गयस्य तु गया पुरी ॥ वसिष्ठवाक्यात्सुद्युम्नः प्रतिष्ठानमवाप ह ॥ ९ ॥ तत्पुरूरवसे प्रादात्सुद्युम्नो राज्यमाप्य तु ॥ नारिष्यतः शकाः पुत्रा नाभागस्य च वैष्णवः ॥ १० ॥ अम्बरीषः प्रजापालो धार्ष्टकं धृष्टतः कुलम् ॥ सुकन्यानर्त्तौ शर्य्यातेर्वैरोह्यनर्त्ततो नृपः ॥ ११ ॥ आनर्त्तविषयश्चासीत्पुरी चासीत्कुशस्थली ॥ रेवस्य रैवतः पुत्रः ककुद्मी नाम धार्मिकः ॥ १२ ॥ ज्येष्ठः पुत्रशतस्यासीद्राज्यं प्राप्य कुशस्थलीम् ॥ स कन्यासहितः श्रुत्वा गान्धर्वं ब्रह्मणोऽन्तिके ॥ १३ ॥ मुहूर्त्तभूतं देवस्य मर्त्ये बहुयुगं गतम् ॥ आजगाम जयेनाथ स्वां पुरीं यादवैर्वृताम् ॥ १४ ॥ कृतां द्वारवतीं नाम बहुद्वारां मनोरमाम् ॥ भोजवृष्ण्यन्धकैर्गुप्तां वासुदेवपुरोगमैः ॥ १५ ॥ रेवतीं बलदेवाय ददौ ज्ञात्वा ह्यनिन्दिताम् ॥ तपः सुमेरुशिखरे तप्त्वा विष्ण्वालयं गतः ॥ १६ ॥ नाभागस्य च पुत्रौ द्वौ वैश्यौ ब्राह्मणतां गतौ ॥ करूपस्य तु कारूपाः क्षत्रिया युद्धदुर्मदाः ॥ १७ ॥ शूद्रत्वं च पृषध्रोऽगाद्धिंसयित्वा गुरोश्च गाम् ॥ मनुपुत्रादथेक्ष्वाकोर्विकुक्षिर्देवराडभूत् ॥ १८ ॥ विकुक्षेस्तु ककुत्स्थोऽभूत्तस्य पुत्रः सुयो-

धनः ॥ तस्य पुत्रः पृथुर्नाम विश्वगाश्वः पृथोः सुतः ॥ १९ ॥ आयुस्तस्य च पुत्रोऽभूद्युवनाश्वस्तथा सुतः ॥ युवनाश्वाच्च श्रावन्तः
पूर्वे श्रावान्तिका पुरी ॥ २० ॥ श्रावन्ताद्बृहदश्वोऽभूत्कुवलाश्वस्ततो नृपः ॥ धुन्धुमारत्वमगमद्धुन्धोर्नाम्ना च वै पुरा ॥ २१ ॥ धुन्धु-
माराञ्च्रयो भूपा दृढाश्वो दण्ड एव च ॥ कापिलोऽथ दृढाश्वात्तु हर्य्यश्वश्च प्रमोदकः ॥ २२ ॥ हर्य्यश्वाच्च निकुम्भोऽभूत्संहताश्वो निकु-
म्भतः ॥ अकृशाश्वो रणाश्वश्च संहताश्वसुतावुभौ ॥ २३ ॥ युवनाश्वो रणाश्वस्य मान्धाता युवनाश्वतः ॥ मान्धातुः पुरुकुत्सोऽभून्मु-
चुकुन्दो द्वितीयकः ॥२४ ॥ पुरुकुत्सात्त्रसद्दस्युः सम्भूतो नर्मदाभवः ॥ सम्भूतस्य सुधन्वाऽभूत्त्रिधन्वाथ सुधन्वनः ॥२५ ॥ त्रिधन्वनस्तु
तरुणस्तस्य सत्यव्रतः सुतः ॥ सत्यव्रतात्सत्यरथो हरिश्चन्द्रश्च तत्सुतः ॥ २६ ॥ हरिश्चन्द्राद्रोहिताश्वो रोहिताश्वाद्वृकोऽभवत् ॥
वृकाद्बाहुश्च बाहोश्च सगरस्तस्य च प्रिया ॥ २७ ॥ प्रभा,षष्टिसहस्राणां सुतानां जननी ह्यभूत् ॥ तुष्टादौर्वान्नृपादेकं भानु-
मत्यसमञ्जसम् ॥ २८ ॥ खनन्तः पृथिवीं दग्धा विष्णुना बहुसागराः ॥ असमञ्जसोंऽशुमांश्च दिलिपोंऽशुमतोऽभवत् ॥ २९ ॥
भगीरथो दिलीपात्तु येन गङ्गावतारिता ॥ भगीरथात्तु नाभागो नाभागादम्बरीषकः ॥ ३० ॥ सिन्धुद्वीपोऽम्बरीषात्तु श्रुतायु-
स्तत्सुतः स्मृतः ॥ श्रुतायोर्ऋतपर्णोऽभूत्तस्य कल्माषपादकः ॥ ३१ ॥ कल्माषाङ्घ्रेः सर्वकर्मा ह्यनरण्यस्ततोऽभवत् ॥
अनरण्यात्तु निघ्नोऽथ ह्यनमित्रस्ततो रघुः ॥ ३२ ॥ रघोरभूद्दिलीपस्तु दिलीपाच्चाप्यजो नृपः ॥ दीर्घबाहुरजात्कालस्त्वजापालस्ततोऽ-
भवत् ॥ ३३ ॥ तथा दशरथो जातस्तस्य पुत्रचतुष्टयम् ॥ नारायणात्मकाः सर्वे रामस्तस्याग्रजोऽभवत् ॥ ३४ ॥ रावणान्तकरो
राजा ह्ययोध्यायां रघूत्तमः ॥ वाल्मीकिर्यस्य चरितं चक्रे तन्नारदश्रवात् ॥ ३५ ॥ रामपुत्रौ कुशलवौ सीतायां कुलवर्धनौ ॥
अतिथिश्च कुशाज्जज्ञे निषधस्तस्य चात्मजः ॥ ३६ ॥ निषधात्तु नलो जज्ञे नभोऽजायत वै नलात् ॥ नभसः पुण्डरीकोऽभूत्सु-
धन्वा च ततोऽभवत् ॥ ३७ ॥ सुधन्वनो देवानीको ह्यहीनाश्वश्च तत्सुतः ॥ अहीनाश्वात्सहस्राश्वश्चन्द्रालोकस्ततोऽभवत् ॥ ३८ ॥
चन्द्रावलोकतस्तारापीडोऽस्माच्चन्द्रपर्वतः ॥ चन्द्रगिरेर्भानुरथः श्रुतायुस्तस्य चात्मजः ॥ इक्ष्वाकुवंशप्रभवाः सूर्यवंशधराः स्मृताः
॥३९॥ इत्यादिमहापुराणे आग्नेये सूर्यवंशकीर्तनं नाम त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥२७३॥ अथ सोमवंशानुकीर्तनम् ॥ अग्निरु-

वाच ॥ सोमवंशं प्रवक्ष्यामि पठितं पापनाशनम् ॥ विष्णुनाभ्यब्जजो ब्रह्मा ब्रह्मपुत्रोऽत्रिरात्रितः ॥ १॥ सोमश्चक्रे राजसूयं त्रैलोक्यं दक्षिणां 
 ददौ ॥ समाप्तेऽवभृथे सोमं तद्रूपालोकनेच्छवः ॥२॥ कामबाणाभितप्ताङ्ग्यो नरदेव्यः सिषेविरे ॥ लक्ष्मीर्नारायणं त्यक्त्वा सिनीवाली च
कर्दमम् ॥३॥ द्युतिर्विभावसुं त्यक्त्वा पुष्टिर्धातारमव्ययम् ॥ प्रभा प्रभाकरं त्यक्त्वा हविष्मन्तं कुहूः स्वयम् ॥ ४॥ कीर्तिर्जयन्तं भर्त्तारं 
वसुर्मारीचकश्यपम् ॥ धृतिस्त्यक्त्वा पतिं नन्दीं सोममेवाभजत्तदा ॥५॥ स्वकीया इव सोमोऽपि कामयामास तास्तदा ॥ एवं कृताप-
चारस्य तासां भर्तृगणस्तदा ॥६॥ न शशाकापचाराय शापैः शस्त्रादिभिः पुनः ॥ सप्तलोकैकनाथत्वमवाप्तस्तपसा ह्युत ॥ ७॥ विवभ्राम
मतिस्तस्य विनयादनयाऽऽहृता ॥ बृहस्पतेः स वै भार्य्यां तारां नाम यशस्विनीम् ॥ ८ ॥ जहार तरसा सोमो ह्यवमान्याङ्गिरःसुतम्॥
ततस्तद्युद्धमभवत्प्रख्यातं तारकामयम् ॥ ९ ॥ देवानां दानवानां च लोकक्षयकरं महत् ॥ ब्रह्मा निवार्य्योशनसं तारामङ्गिरसे ददौ ॥१० ॥
तामन्तःप्रसवां दृष्ट्वा गर्भं त्यजाब्रवीद्गुरुः ॥ गर्भस्त्यक्तः प्रदीप्तोऽथ प्राहाहं सोमसम्भवः ॥ ११ ॥ एवं सोमाद्बुधः पुत्रः पुत्रस्तस्य पुरू-
रवाः ॥ स्वर्गं त्यक्त्वोर्वशी सा तं वरयामास चाप्सराः ॥१२॥ तया सहाचरद्राजा दशवर्षाणि पञ्च च ॥ पञ्च षट् सप्त चाष्टौ च दश चाष्टौ
महामुने ॥१३॥ एकोऽग्निरभवत्पूर्वं तेन त्रेता प्रवर्त्तिता ॥ पुरूरवा योगशीलो गान्धर्वं लोकमीयिवान् ॥१४॥ आयुर्दृढायुरश्वायुर्धनायुर्धृ-
तिमान्वसुः ॥ दिविजातः शतायुश्च सुषुवे चोर्वशी नृपान् ॥ १५ ॥ आयुषो नहुषः पुत्रो वृद्धशर्मा रजिस्तथा ॥ दर्भो विपाप्मा पञ्चा
न्यं रजेः पुत्रशतं ह्यभूत् ॥ १६ ॥ राजेया इति विख्याता विष्णुदत्तवरो रजिः ॥ देवासुरे रणे दैत्यानवधीत्सुरयाचितः ॥ १७ ॥ गता-
येन्द्राय पुत्रत्वं गत्वा राज्यं दिवं गतः ॥ रजेः पुत्रैर्हृतं राज्यं शक्रस्याथ सुदुर्मनाः ॥ १८ ॥ ग्रहशान्त्यादिविधिना गुरुरिन्द्राय तद्ददौ ॥
मोहयित्वा रजिसुतानासंस्ते निजधर्मगाः ॥ १९ ॥ नहुषस्य सुताः सप्त यतिर्य्ययातिरुत्तमः ॥ उद्भवः पञ्चकश्चैव शर्य्यातिमेघपालकौ
॥ २० ॥ यतिः कुमारभावेऽपि विष्णुं ध्यात्वा हरिं गतः ॥ देवयानी शुक्रकन्या ययातेः पत्न्यऽभूत्तदा ॥ २१ ॥ वृषपर्वजा शर्मिष्ठा 
ययातेः पञ्च तत्सुताः ॥ यदुं च तुर्वसुं चैव देवयानी व्यजायत ॥ २२ ॥ द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ यदुः पुरुश्चाभवतां
तेषां वंशविवर्धनौ ॥ २३ ॥ इत्यादिमहापुराणे आग्नेये सोमवंशवर्णनं नाम चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥ अथ यदुवंश-

वर्णनम् ॥ अग्निरुवाच ॥ यदोरासन्पञ्चपुत्रा ज्येष्ठस्तेषु सहस्रजित् ॥ नीलाञ्जिको रघुः क्रोष्टुः शतजिच्च सहस्रजित् ॥ १ ॥ शतजिद्धै-
हयो रेणुहयो हय इति त्रयः ॥धर्मनेत्रो हैहयस्य धर्मनेत्रस्य संहनः ॥२॥ महिमा सहनस्यासीन्महिम्नो भद्रसेनकः ॥ भद्रसेनाद्दुर्गमोऽभूद्दुर्ग-
मात्कनकोऽभवत् ॥ ३ ॥ कनकात्कृतवीर्य्यस्तु कृताग्निः करवीरकः ॥ कृतौजाश्च चतुर्थोऽभूत्कृतवीर्य्यात्तु सोऽर्जुनः ॥ ४ ॥ दत्तोऽ-
र्जुनाय तपते सप्तद्वीपमहीशताम् ॥ ददौ बाहुसहस्रं च ह्यजेयत्वं रणेऽरिणा ॥ ५ ॥ अधर्मे वर्तमानस्य विष्णुहस्तान्मृतिर्ध्रुवा ॥ दश-
यज्ञसहस्राणि सोऽर्जुनः कृतवान्नृपः ॥ ६ ॥ अनष्टद्रव्यता राष्ट्रे तस्य संस्मरणादभूत् ॥ न नूनं कार्त्तवीर्य्यस्य गतिं यास्यन्ति वै नृपाः ॥
॥ ७ ॥ यज्ञैर्दानैस्तपोभिश्च विक्रमेण श्रुतेन च ॥ कार्त्तवीर्य्यस्य च शतं पुत्राणां पञ्च वै पराः ॥ ८ ॥ सूरसेनश्च सूरश्च धृष्टोक्तः कृष्ण
एव च ॥ जयध्वजश्च नाम्नासीदावन्त्यो नृपतिर्महान् ॥ ९ ॥ जयध्वजात्तालजङ्घस्तालजङ्घात्ततः सुताः ॥ हैहयानां कुलाः पञ्च भोजा-
श्चावन्तयस्तथा ॥ १० ॥ वीतिहोत्राः स्वयं जाताः शौण्डिकेयास्तथैव च ॥ वीतिहोत्रादनन्तोऽभूदनन्ताद्दुर्जयो नृपः ॥ ११ ॥क्रोष्टो-
र्वंशं प्रवक्ष्यामि यत्र जातो हरिः स्वयम् ॥ क्रोष्टोस्तु वृजिनीवांश्च स्वाहाऽभूद्वृजिनीवतः ॥ १२ ॥ स्वाहापुत्रो रुषद्गुश्च तस्य चित्ररथः
सुतः ॥ शशबिन्दुश्चित्ररथाच्चक्रवर्ती हरौ रतः ॥ १३ ॥ शशबिन्दोश्च पुत्राणां शतानामभवच्छतम् ॥ धीमतां चारुरूपाणां भूरिद्रविण-
तेजसाम् ॥ १४ ॥ पृथुश्रवाः प्रधानोऽभूत्तस्य पुत्रः सुयज्ञकः ॥ सुयज्ञस्योशनाः पुत्रस्तितिक्षुरुशनःसुतः ॥ १५ ॥ तितिक्षोस्तु मरु-
त्तोऽभूत्तस्मात्कम्बलबर्हिषः ॥ पञ्चाशद्रुक्मकवचाद्रुक्मेषुः पृथुरुक्मकः ॥ १६ ॥ हविर्ज्यामघः पापघ्नो ज्यामघः स्त्रीजितोऽभवत् ॥
सैव्यायां ज्यामघादासीद्विदर्भस्तस्य कौशिकः ॥ १७ ॥ लोमपादः क्रथः श्रेष्ठात्कृतिः स्याल्लोमपादतः ॥ कौशिकस्य चिदिः पुत्रस्त-
स्माच्चैद्या नृपाः स्मृताः ॥ १८ ॥ क्रथाद्विदर्भपुत्राश्च कुन्तिः कुन्तेस्तु धृष्टकः ॥ धृष्टस्य निधृतिस्तस्य उदर्कोऽथो विदूरथः ॥ १९ ॥
दशार्हपुत्रो व्योमस्तु व्योमाज्जीमूत उच्यते ॥ जीमूतपुत्रो विकलस्तस्य भीमरथः सुतः ॥ २० ॥ भीमरथान्नवरथस्ततो दृढरथोऽभवत् ॥
शकुन्तिश्च दृढरथाच्छकुन्तेश्च करम्भकः ॥ २१ ॥ करम्भाद्देवलातोऽभूद्देवक्षेत्रश्च तत्सुतः ॥ देवक्षेत्रान्मधुर्नाम मधोर्द्रवरसोऽभवत्
॥२२॥ द्रवरसात्पुरुहूतोऽभूज्जन्तुरासीच्च तत्सुतः ॥ गुणी तु यादवो राजा जन्तुपुत्रस्तु सात्वतः ॥२३ ॥सात्वताद्भजमानस्तु वृष्णिरन्धक

एव च ॥ देवावृधश्च चत्वारस्तेषां वंशास्तु विश्रुताः ॥ २४ ॥ भजमानस्य बाह्योऽभूद्वृष्टिः कृमिर्निमिस्तथा ॥ देवावृधाद्बभ्रुरासीत्तस्य श्लोकोऽत्र गीयते ॥२५॥ यथैव शृणुमो दूराद्गुणांस्तद्वत्समन्तिकात् ॥ बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः ॥२६॥ चत्वारश्च सुता बभ्रोर्वासुदेवपरा नृपाः ॥ कुकुरो भजमानस्तु शिनिः कम्बलबर्हिषः ॥२७॥ कुकुरस्य सुतो धृष्णुर्धृष्णोस्तु तनयो धृतिः ॥ धृतेः कपोतरोमाभूत्तस्य पुत्रस्तु तित्तिरिः ॥ २८ ॥ तित्तिरेस्तु नरः पुत्रस्तस्य चन्दनदुन्दुभिः ॥ पुनर्वसुस्तस्य पुत्र आहुकश्चाहुकीसुतः ॥ २९ ॥ आहुकाद्देवका जज्ञे उग्रसेनस्ततोऽभवत् ॥ देववानुपदेवश्च देवकस्य सुताः स्मृताः ॥ ३० ॥ तेषां स्वसारः सप्तासन्वसुदेवाय ता ददौ ॥ देवकी श्रुतदेवी च मित्रदेवी यशोधरा ॥ ३१ ॥ श्रीदेवी सत्यदेवी च सुरापी चेति सप्तमी ॥ नवोग्रसेनस्य सुताः कंसस्तासां च पूर्वजः ॥३२॥न्यग्रोधश्च सुनामा च कङ्कः शङ्कुश्च भूमिपः ॥ सुतनू राष्ट्रपालश्च युद्धमुष्टिः सुमुष्टिकः ॥ ३३ ॥ भजमानस्य पुत्रोऽथ रथमुख्यो विदूरथः ॥ राजाधिदेवः शूरश्च विदूरथसुतोऽभवत् ॥ ३४॥ राजाधिदेवपुत्रौ द्वौ शोणाश्वः श्वेतवाहनः ॥ शोणाश्वस्य सुताः पञ्च शमी शत्रुजिदादयः॥ ३५॥शमीपुत्रः प्रतिक्षेत्रः प्रतिक्षेत्रस्य भोजकः ॥ भोजस्य हृदिकः पुत्रो हृदिकस्य दशात्मजाः॥३६॥कृतवर्मा शतधन्वा देवार्हो भीषणादयः ॥ देवार्हात्कम्बलबर्हिरसमौजास्ततोऽभवत् ॥ ३७ ॥ सुदंष्ट्रश्च सुवासश्च धृष्टोऽभूदसमौजसः ॥ गान्धारी चैव माद्री च धृष्टभार्य्ये बभूवतुः ॥ ३८ ॥ सुमित्रोऽभूच्च गांधार्य्यां माद्री जज्ञे युधाजितम् ॥ अनमित्रः शिनिर्धृष्टात्ततो वै देवमीढुषः ॥ ३९ ॥ अनमित्रसुतो निघ्नो निघ्नस्यापि प्रसेनकः ॥ सत्राजितः प्रसेनोऽथ मणिं सूर्य्यात्स्यमन्तकम् ॥ ४० ॥ प्राप्यारण्ये चरन्तं तु सिंहो हत्वाग्रहीन्माणिम् ॥ हतो जाम्बवता सिंहो जाम्बवान्हरिणा जितः॥ ४१ ॥ तस्मान्मणिं जाम्बवतीं प्राप्यागाद्द्वारकां पुरीम् ॥ सत्राजिताय प्रददौ शतधन्वा जघान तम् ॥ ४२ ॥ हत्वा शतधनुं कृष्णो मणिमादाय कीर्तिभाक् ॥ बलयादवमुख्याग्रे ह्यक्रूरे मणिमार्पयत् ॥ ४३ ॥ मिथ्याभिशस्तिं कृष्णस्य त्यक्त्वा स्वर्गी च सम्पठन् ॥ सत्राजितो भङ्गकारः सत्यभामा हरेः प्रिया ॥ ४४ ॥ अनमित्राच्छिनिर्जज्ञे सत्यकस्तु शिनेः सुतः ॥ सत्यकात्सात्यकिर्जज्ञे युयुधानाद्धुनिर्बभूत् ॥ ४५॥ धुनेर्युगन्धरः पुत्रः स्वाह्योऽभूत्सायुधाजितः ॥ ऋषभक्षेत्रको तस्य ऋषभाच्च श्वफल्ककः ॥ ४६ ॥ श्वफल्कपुत्रो ह्यक्रूरश्चाक्रूराच्च सुधन्वकः ॥ शूरात्तु वसुदेवाद्याः पृथा

पाण्डोः प्रियाऽभवत् ॥ ४७ ॥ धर्माद्युधिष्ठिरः पाण्डोर्वायोः कुन्त्यां वृकोदरः ॥ इन्द्राद्धनञ्जयो माद्यां नकुलः सहदेवकः ॥ ४८ ॥ वसुदेवाच्च रोहिण्यां रामः सारणदुर्दमौ ॥ वसुदेवाच्च देवक्यामादौ जातः सुसेनकः ॥ ४९ ॥ कीर्तिमान्भद्रसेनश्च जारुख्यो विष्णुदासकः ॥ भद्रदेहः कंस एतान्षड्गर्भान्निजघान ह ॥ ५० ॥ ततो बलस्ततः कृष्णः सुभद्रा भद्रभाषिणी ॥ चारुदेष्णश्च साम्बाद्याः कृष्णाज्जाम्बवतीसुताः ॥ ५१ ॥ इत्यादिमहापुराणे आग्नेये यदुवंशवर्णनं नाम पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥ अथ द्वादशसंग्रामाः ॥ अग्निरुवाच ॥ कश्यपो वसुदेवोऽभूद्देवकी चादितिर्वरा ॥ देवक्यां वसुदेवात्तु कृष्णोऽभूत्तपसान्वितः ॥ १ ॥ धर्मसंरक्षणार्थाय ह्यधर्महरणाय च ॥ सुरादेः पालनार्थं च दैत्यादेर्मथनाय च ॥ २ ॥ रुक्मिणी सत्यभामा च सत्या नाग्नजिती प्रिया ॥ सत्यभामा हरेः सेव्या गान्धारी लक्ष्मणा तथा ॥ ३ ॥ मित्रविन्दा च कालिन्दी देवी जाम्बवती तथा ॥ सुशीला च तथा माद्री कौसल्या विजया जया ॥ ४ ॥ एवमादीनि देवीनां सहस्राणि तु षोडश ॥ प्रद्युम्नाद्याश्च रुक्मिण्यां भीमाद्याः सत्यभामया ॥ ५ ॥ जाम्बवत्यां च साम्बाद्याः कृष्णस्यासंस्तथापरे ॥ शतं शतसहस्राणां पुत्राणां तस्य धीमतः ॥ ६ ॥ अशीतिश्च सहस्राणि यादवाः कृष्णरक्षिताः ॥ प्रद्युम्नस्य तु वैदर्भ्यामनिरुद्धो रणप्रियः ॥ ७ ॥ अनिरुद्धस्य वज्राद्या यादवाः सुमहाबलाः ॥ तिस्रः कोट्यो यादवानां षष्टिर्लक्षाणि दानवाः ॥ ८ ॥ मनुष्ये बाधका ये तु तन्नाशाय बभूव सः ॥ कर्त्तुं कर्मव्यवस्थानं मनुष्यो जायते हरिः ॥ ९ ॥ देवासुराणां संग्रामा दायार्थं द्वादशाभवन् ॥ प्रथमो नारसिंहस्तु द्वितीयो वामनो रणः ॥ १० ॥ संग्रामस्त्वथ वाराहश्चतुर्थोऽमृतमन्थनः ॥ तारकामयसंग्रामः षष्ठो ह्याजीवको रणः ॥ ११ ॥ त्रैपुरश्चान्धकवधो नवमो वृत्रघातकः ॥ जितो हालाहलश्चाथ घोरः कोलाहलो रणः ॥ १२ ॥ हिरण्यकशिपोश्चोरो विदार्य्य च नखैः पुरा ॥ नारसिंहो देवपालः प्रह्लादं कृतवान्नृपम् ॥ १३ ॥ देवासुरे वामनश्च च्छलित्वा बलिमूर्जितम् ॥ महेन्द्राय ददौ राज्यं काश्यपोऽदितिसम्भवः ॥ १४ ॥ वराहस्तु हिरण्याक्षं हत्वा देवानपालयत् ॥ उज्जहार भुवं मग्नां देवदेवैरभिष्टुतः ॥ १५ ॥ मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥ सुरासुरैश्च मथितं देवेभ्यश्चामृतं ददौ ॥ १६ ॥ तारकामयसंग्रामे तदा देवाश्च पालिताः ॥ निवार्य्येन्द्रं गुरून्देवान्दानवान् सोमवंशकृत् ॥ १७ ॥ विश्वामित्रवसिष्ठात्रिकवयश्च रणे सुरान् ॥ अपालयन्ते निर्वार्य्य रागद्वेषादिदानवान् ॥ १८ ॥ पृथ्वीरथे ब्रह्मय-

न्तुरीशस्य शरणो हारिः ॥ ददाह त्रिपुरं देवपालको दैत्यमर्दनः ॥ १९ ॥ गौरीं जिहीर्षुणा रुद्रमन्धकेनार्दितं हारिः ॥ अनुरक्तश्च रेवत्यां
चक्रे चान्धासुरार्दनम् ॥ २० ॥ अपां फेनमयो भूत्वा देवासुररणे हरन् ॥ वृत्रं देवहरं विष्णुर्देवधर्मानपालयत् ॥ २१ ॥ शाल्वादीन्दान-
वाञ्जित्वा हारिः परशुरामकः ॥ अपालयत्सुरादींश्च दुष्टक्षत्रं निहत्य च ॥ २२ ॥ हालाहलं विषं दैत्यं निराकृत्य महेश्वरात् ॥ भयं निर्णा-
शयामास देवानां मधुसूदनः ॥ २३ ॥ देवासुरे रणे यश्च दैत्यः कोलाहलो जितः ॥ पालिताश्च सुराः सर्वे विष्णुना धर्मपालनात् ॥२४॥
राजानो राजपुत्राश्च मुनयो देवता हारिः ॥ यदुक्तं यच्च नैवोक्तमवतारा हरेरिमे ॥ २५ ॥ इत्यादिमहापुराणे आग्नेये द्वादशसंग्रामा नाम षट्-
सप्तत्यधिकद्विशततमोऽध्यायः ॥२७६॥ अथ राजवंशवर्णनम् ॥ अग्निरुवाच ॥ तुर्वसोश्च सुतो वर्गो गोभानुस्तस्य चात्मजः ॥ गोभानो-
रासीत्त्रैशानिस्त्रैशानेस्तु करन्धमः ॥१॥ करन्धमान्मरुत्तोऽभूद्दुष्यन्तस्तस्य चात्मजः ॥ दुष्यन्तस्य वरूथोऽभूद्गाण्डीरस्तु वरूथतः ॥२॥
गाण्डीराच्चैव गान्धारः पञ्च जानपदास्ततः ॥ गान्धाराः केरलाश्चोलाः पाण्ड्या कोला महाबलाः ॥३॥ द्रुह्युस्तु बभ्रुसेतुश्च बभ्रुसेतोः पुरो-
वसुः ॥ ततो गान्धारा गान्धारेर्धर्मो धर्माद्घृतोऽभवत् ॥४॥ घृतात्तु विदुषस्तस्मात्प्रचेतास्तस्य वै शतम् ॥ आनवश्च सभानरश्चाक्षुषः पर-
मेषुकः ॥५॥ सभानरात्कालानलः कालानलजः सृञ्जयः ॥ पुरञ्जयः सृञ्जयस्य तत्पुत्रो जनमेजयः ॥६॥ तत्पुत्रस्तु महाशालस्तत्पुत्रोऽभून्म-
हामनाः ॥ तस्मादुशीनरो ब्रह्मन्नृगायां तु नृगस्ततः ॥७॥ नरायां तु नरश्चासीत्क्रमिस्तु क्रमितः सुतः ॥ दशायां सुव्रतो जज्ञे दृषद्वत्यां शिबि-
स्तथा ॥८॥ शिबेः पुत्रास्तु चत्वारः पृथुदर्भश्च वीरकः ॥ कैकेयो भद्रकस्तेषां नाम्ना जनपदाः शुभाः ॥९॥ तितिक्षुरुशीनरजस्तितिक्षोश्च
रुषद्रथः ॥ रुषद्रथादभूत्पैलः पैलाच्च सुतपाः सुतः ॥१०॥ महायोगी बलिस्तस्मादङ्गावङ्गश्च मुख्यकः ॥ पुण्ड्रः कालिङ्गो बालेयो बलि-
र्योगी बलान्वितः ॥११॥ अङ्गाद्दधिवाहनोऽभूत्तस्माद्दिविरथो नृपः ॥ दिविरथाद्धर्मरथस्तस्य चित्ररथः सुतः ॥ १२ ॥ चित्ररथात्सत्यरथो
लोमपादश्च तत्सुतः ॥ लोमपादाच्चतुरङ्गः पृथुलाक्षश्च तत्सुतः ॥१३॥ पृथुलाक्षाच्च चम्पोऽभूच्चम्पाद्धर्यङ्गकोऽभवत् ॥ हर्यङ्गाच्च भद्ररथो
बृहत्कर्मा च तत्सुतः ॥१४॥ तस्मादभूद्बृहद्भानुर्बृहद्भानोर्बृहात्मवान् ॥ तस्माज्जयद्रथो ह्यासीज्जयद्रथाद्दृढरथः ॥ १५॥ दृढरथाद्विश्वजिच्च
कर्णो विश्वजितोऽभवत् ॥ कर्णस्य वृषसेनस्तु पृथुसेनस्तदात्मजः ॥ एतेऽङ्गवंशजा भूपाः पुरोर्वंशं निबोध मे ॥ १६ ॥ इत्यादिमहापु-

राणे आग्नेये राजवंशवर्णनं नाम सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥ अथ पुरुवंशवर्णनम् ॥ अग्निरुवाच ॥ पुरोर्जनमेजयोऽभूत्प्राचीवान्नाम तत्सुतः ॥ प्राचीवतो मनस्युस्तु तस्माद्वीतमयो नृपः ॥ १ ॥ शुन्धुर्वीतिमयाच्चाभूच्छुन्धोर्बहुविधः सुतः ॥ बहुविधाच्च संयाती रहोवादी च तत्सुतः ॥ २ ॥ तस्य पुत्रोऽथ भद्राश्वो भद्राश्वस्य दशात्मजाः ॥ ऋक्षेयुश्च कृषेयुश्च सन्नतेयुस्तथात्मजः ॥ ३ ॥ घृतेयुश्च चितेयुश्च स्थण्डिलेयुश्च सत्तमः ॥ धर्मेयुः सन्नतेयुश्च कृतेयुर्मतिनारकः ॥ ४॥ तंसुरोधः प्रतिरथः पुरस्तो मातिमारजाः ॥ आसीत्प्रतिरथात्कण्वः कण्वान्मेधातिथिस्त्वभूत् ॥ ५ ॥ तंसुरोधाच्च चत्वारो दुष्यन्तोऽथ प्रवीरकः ॥ सुमन्तश्चानयो वीरो दुष्यन्ताद्भरतोऽभवत् ॥ ६ ॥ शकुन्तलायां तु बली यस्य नाम्ना तु भारताः ॥ सुतेषु मातृकोपेन नष्टेषु भरतस्य च ॥ ७ ॥ ततो मरुद्भिरानीय पुत्रः स तु बृहस्पतेः ॥ संक्रामितो भरद्वाजः क्रतुभिर्वितथोऽभवत् ॥ ८ ॥ स चापि वितथः पुत्राञ्जनयामास पञ्च वै ॥ सुहोत्रं च सुहोतारं गयं गर्भं तथैव च ॥९॥ कपिलश्च महात्मानं सुकेतुं च सुतद्वयम् ॥ कौशिकं च गृत्सपतिं तथा गृत्सपतेः सुताः ॥१०॥ ब्राह्मणाः क्षत्रिया वैश्याः काशे (शा) दीर्घतमाः सुताः ॥ ततो धन्वन्तरिश्चासीत्तत्सुतोऽभूच्च केतुमान् ॥११॥ केतुमतो हेमरथो दिवोदास इति श्रुतः ॥ प्रतर्दनो दिवोदासाद्भर्गवत्सौ प्रतर्दनात् ॥ १२ ॥ वत्सादनर्क आसीच्च ह्यनर्कात्क्षेमकोऽभवत् ॥ क्षेमकाद्वर्षकेतुश्च वर्षकेतोर्विभुः स्मृतः ॥ १३ ॥ विभोरानर्त्तः पुत्रोऽभूद्विभोश्च सुकुमारकः ॥ सुकुमारात्सत्यकेतुर्वत्सभूमिस्तु वत्सकात् ॥ १४ ॥ सुहोत्रस्य बृहत्पुत्रो बृहतस्तनयास्त्रयः ॥ अजमीढो द्विमीढश्च पुरुमीढश्च वीर्य्यवान् ॥ १५ ॥ अजमीढस्य केशिन्यां जज्ञे जह्नुः प्रतापवान् ॥ जह्नोरभूदजकाश्वो बलाकश्वस्तदात्मजः ॥१६॥ बलाकाश्वस्य कुशिकः कुशिकाद्गाधिरिन्द्रकः ॥ गाधेः सत्यवती कन्या विश्वामित्रः सुतोत्तमः ॥ १७ ॥ देवरातः कतिमुखा विश्वामित्रस्य ते सुताः ॥ शुनःशेपोऽष्टकाश्चान्यो ह्यजमीढात्सुतोऽभवत् ॥ १८ ॥ नीलिन्यां शान्तिरपरः पुरुजातिः सुशान्तितः ॥ पुरुजातेस्तु बाह्याश्वो बाह्याश्वात्पञ्च पार्थिवाः ॥ १९ ॥ मुकुलः सृञ्जयश्चैव राजा बृहद्दिषुस्तथा ॥ यवीनरश्च कृमिलः पाञ्चाला इति विश्रुताः ॥ २० ॥ मुकुलस्य तु मौकुल्याः क्षेत्रोपेता द्विजातयः ॥ चञ्चाश्वो मुकुलाज्जज्ञे चञ्चाश्वान्मिथुनं ह्यभूत् ॥ २१ ॥ दिवोदासो ह्यहल्या च त्वहल्यायां शरद्वतात् ॥ शतानन्दः शतानन्दात्सत्यधृङ्मिथुनं ततः ॥ २२ ॥

कृपः कृपी दिवोदासान्मैत्रेयः सोमपस्ततः ॥ सृंजयात्पञ्चधनुषः सोमदत्तश्च तत्सुतः ॥ २३ ॥ सहदेवः सोमदत्तात्सहदेवात्तु सोमकः ॥
आसीच्च सोमकाज्जन्तुर्जन्तोश्च पृषतः सुतः ॥ २४ ॥ पृषताद्द्रुपदस्तस्माद्धृष्टद्युम्नोऽथ तत्सुतः ॥ धृष्टकेतुश्च धूमिन्यामृक्षोऽभूदजमी-
ढतः ॥ २५ ॥ ऋक्षात्संवरणो जज्ञे कुरुः संवरणात्ततः ॥ यः प्रयागादपाक्रम्य कुरुक्षेत्रं चकार ह ॥ २६ ॥ कुरोः सुधन्वा सुधनुः परीक्षि-
च्चारिमेजयः ॥ सुधन्वनः सुहोत्रोऽभूत्सुहोत्राच्च्यवनो ह्यभूत् ॥ २७ ॥ वशिष्ठपरिचाराभ्यां सत्तासन्गिरिकासुताः ॥ बृहद्रथः कुशो वीरो
यदुः प्रत्यग्रहो बलः ॥ २८ ॥ मत्स्यकाली कुशाग्रोऽतो ह्यासीद्राज्ञो बृहद्रथात् ॥ कुशाग्राद्वृषभो जज्ञे तस्य सत्यहितः सुतः ॥ २९ ॥
सुधन्वा तत्सुतश्चोर्जे ऊर्जादासीच्च सम्भवः ॥ सम्भवाच्च जरासन्धः सहदेवश्च तत्सुतः ॥ ३० ॥ सहदेवादुदापिश्चाप्युदापेः श्रुतकर्मकः ॥
परीक्षितस्य दायादो धार्मिको जनमेजयः ॥ ३१ ॥ जनमेजयात्त्रसद्दस्युर्जह्नोस्तु सुरथः सुतः ॥श्रुतसेनोग्रसेनौ च भीमसेनश्च नामतः ॥
॥ ३२ ॥ जनमेजयस्य पुत्रौ तु सुरथो महिमांस्तथा ॥ सुरथाद्विदूरथोऽभूद्दक्ष आसीद्विदूरथात् ॥ ३३ ॥ ऋक्षस्य तु द्वितीयस्य भीम-
सेनोऽभवत्सुतः ॥ प्रतीपो भीमसेनात्तु प्रतीपस्य तु शन्तनुः ॥ ३४ ॥ देवापिर्बाह्लिकश्चैव सोमदत्तसुतः शन्तनोः ॥ बाह्लिकात्सोमदत्तोऽ-
भूद्भूरिर्भूरिश्रवाः शलः ॥३५॥ गङ्गायां शन्तनोर्भीष्मः काल्यायां विचित्रवीर्य्यकः॥ कृष्णद्वैपायनश्चैव क्षेत्रे वै चित्रवीर्य्यके ॥३६॥ धृत-
राष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत् ॥ पाण्डोर्युधिष्ठिरः कुन्त्यां भीमश्चैवार्जुनस्त्रयः॥३७॥ नकुलः सहदेवश्च पाण्डोर्माद्र्यां च दैवतः ॥
अर्जुनस्य च सौभद्रः परीक्षिदभिमन्युतः ॥ ३८ ॥ द्रौपदी पाण्डवानां च प्रिया तस्यां युधिष्ठिरात् ॥ प्रतिविन्ध्यो भीमसेनाच्छ्रुतकी-
र्त्तिर्धनञ्जयात् ॥ ३९ ॥ सहदेवाच्छ्रुतकर्मा शतानिकस्तु नाकुलिः ॥ भीमसेनाद्धिडम्बायामन्य आसीद्घटोत्कचः ॥ ४० ॥ एते भूता
भविष्याश्च नृपाः संख्या न विद्यते ॥ गताः कालेन कालो हि हरिस्तं पूजयेद्द्विज ॥ होममग्नौ समुद्दिश्य कुरु सर्वप्रदं यतः ॥ ४१ ॥
इत्यादिमहापुराणे आग्नेये पुरुवंशवर्णनं नामाष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥ अथ सिद्धौषधानि ॥ अग्निरुवाच ॥ आयुर्वेदं
प्रवक्ष्यामि सुश्रुताय यमब्रवीत् ॥ देवो धन्वन्तरिः सारं मृतसञ्जीवनीकरम् ॥ १ ॥ सुश्रुत उवाच ॥ आयुर्वेदं मम ब्रूहि नराश्वेभरुगर्द-
नम् ॥ सिद्धयोगात्सिद्धमन्त्रान्मृतसञ्जीवनीकरान् ॥ २ ॥ धन्वन्तरिरुवाच ॥ रक्षन्बलं हि ज्वरितं लंघितं भोजयेद्द्विपक्क ॥ सविश्वं

लाजमण्डं तु तृड्ज्वरान्तं शृतं जलम् ॥ ३ ॥ मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः ॥ षडहे च व्यतिक्रान्ते तिक्तकं पाययेद्ध्रुवम् ॥ ॥ ४ ॥ स्नेहयेत्त्यक्तदोषं तु ततस्तं च विरेचयेत् ॥ जीर्णाः षष्टिकनीवाररक्तशालिप्रमोदकाः ॥ ५ ॥ तद्विधास्ते ज्वरेष्विष्टा यवानां विकृतिस्तथा ॥ मुद्गा मसूराश्चणकाः कुलत्थाश्च सकुष्ठकाः ॥ ६ ॥ आढक्यो नारकाद्याश्च कर्कोटककटोल्वकम् ॥ पटोलं सफलं निम्बं पर्पटं दाडिमं ज्वरे ॥ ७ ॥ अधोगे वमनं शस्तमूर्ध्वगे च विरेचनम् ॥ रक्तपित्ते तथा पानं षडङ्गं शुण्ठिवर्जितम् ॥८॥ सक्तुगोधूमलाजाश्च यवशालिमसूरकाः ॥ मकुष्टचणका मुद्गा भक्ष्या गोधूमका हिताः ॥ ९ ॥ साधिता घृतदुग्धाभ्यां क्षौद्रं वृषरसो मधु ॥ अतीसारे पुराणानां शालीनां भक्षणं हितम् ॥ १० ॥ अनभिष्यन्दि यच्चान्नं लोध्रवल्कलसंयुतम् ॥ मारुतं वर्जयेद्यत्नः कार्य्यो गुल्मेषु सर्वथा ॥ ११॥ वाट्यं क्षीरेण चाश्नीयाद्वास्तूकं घृतसाधितम् ॥ गोधूमशालयस्तिक्ता हिता जठरिणामथ ॥ १२ ॥ गोधूमशाल्यो मुद्गा ब्रह्मर्क्षखदिरोऽभया ॥ पञ्चकोलं जाङ्गलाश्च निम्बधान्यः पटोलकाः ॥ १३ ॥ मातुलुङ्गरसा जातिशुष्कमूलकसैन्धवाः ॥ कुष्ठिनां च तथा शस्तं पानार्थे खदिरोदकम् ॥ १४ ॥ मसूरमुद्गौ पेयार्थे भोज्या जीर्णाश्च शालयः ॥ निम्बपर्पटकैः शाकैर्जाङ्गलानां तथा रसः ॥ १५ ॥ विडङ्गं मरिचं मुस्तं कुष्ठं लोध्रं सुवर्चिका ॥ मनःशिलावचालेपः कुष्ठहा मूत्रपेषितः ॥ १६ ॥ अपूपकुष्ठकुल्माषयवाद्या मेहिनां हिताः ॥ यवान्नविकृतिर्मुद्गा कुलत्था जीर्णशालयः ॥ १७ ॥ तिक्तरूक्षाणि शाकानि तिक्तानि हरितानि च ॥ तैलानि तिलशिग्रुकविभीतकेङ्गुदानि च ॥१८॥ मुद्गाः सयवगोधूमा धान्यं वर्षस्थितं च यत् ॥ जाङ्गलस्य रसः शस्तो भोजने राजयक्ष्मिणाम् ॥१९॥ कुलत्थमुद्गकोलाद्यैः शुष्कमूलकजाङ्गलैः ॥ पूर्वैर्वा विष्किरैः सिद्धैर्दधिदाडिमसाधितैः ॥२०॥ मातुलुङ्गरसक्षौद्रद्राक्षाव्योषादिसंस्कृतैः ॥ यवगोधूमशाल्यन्नैर्भोजयेच्छ्वासकासिनम् ॥ २१ ॥ दशमूलबलारास्नाकुलत्थैरुपसाधिताः ॥ पेयाः पूपरसाः क्वाथाः श्वासहिक्कानिवारणाः ॥२२॥ शुष्कमूलककौलत्थमूलजाङ्गलजैरसैः ॥ यवगोधूमशाल्यन्नं जीर्णे सोशीरमाचरेत् ॥ २३ ॥ शोथवान्सगुडां पथ्यां खादेद्वा गुडनागरम् ॥ तक्रं च चित्रकं चोभौ ग्रहणीरोगनाशनौ ॥ २४ ॥ पुराणयवगोधूमशालयो जाङ्गलो रसः ॥ मुद्गामलकखर्जूरमृद्वीकाबदराणि च ॥ २५ ॥ मधु सर्पिः पयः शक्रं निम्बपर्पटकौ वृषम् ॥ तक्रारिष्टाश्च शस्यन्ते सततं वातरोगिणाम् ॥ २६ ॥ हृद्रोगिणो विरेच्यास्तु पिप्पल्यो

हिक्किनां हिताः ॥ तक्रारनालसर्पीषि युक्तानि शिशिराम्भसा ॥ २७ ॥ मुक्ताः सौवर्चलाजादि मद्यं शस्तं मदात्यये ॥ सक्षौद्रपयसा
लाक्षां पिबेच्च क्षतवान्नरः ॥ २८ ॥ क्षयं मांसरसाहारो वह्निसंरक्षणाज्जयेत् ॥ शालयो भोजने रक्ता नीवारकलमादयः ॥ २९ ॥ यवान्न-
विकृतिर्मांसं शाकं सौवर्चलं शटी ॥ पथ्या तथैवार्शसां यन्मण्डं तक्रं च वारिणा ॥ ३० ॥ मुस्ताभ्यासस्तथा लेपाश्चित्रकेण हरिद्रया ॥
यवान्नविकृतिः शालिर्वास्तूकं ससुवर्चलम् ॥ ३१ ॥ त्रपुषैर्वारुगोधूमाः क्षीरेक्षुघृतसंयुताः ॥ मूत्रकृच्छ्रे च शस्ताः स्युः पाने मण्ड-
सुरादयः ॥ ३२ ॥ लाजा सक्तुस्तथा क्षौद्रं शून्यं मांसं परूषकम् ॥ वार्त्ताकुलावाशीशिनश्छर्दिघ्नाः पानकानि च ॥ ३३ ॥ शाल्यन्नं
तोयपयसी केवलोष्णे शृतेऽपि वा ॥ तृष्णाघ्ने मुस्तगुडयोर्गुटिका वा मुखे धृता ॥ ३४ ॥ यवान्नविकृतिः पूपं शुष्कमूलकजं
तथा ॥ शाकं पटोलवेत्राग्रमूरुस्तम्भविनाशनम् ॥ ३५ ॥ मुद्गाढकमसूराणां सातिलैर्जाङ्गलै रसैः ॥ ससैन्धवघृतद्राक्षाशु-
ण्ठ्यामलककोलजैः ॥ ३६ ॥ यूषैः पुराणगोधूमयवशाल्यन्नमभ्यसेत् ॥ विसर्पी ससिताक्षौद्रमृद्वीकादाडिमोदकम् ॥ ३७ ॥
रक्तयष्टिकगोधूमयवमुद्गादिकं लघु ॥ काकमारी च वेत्राग्रं वास्तुकं च सुवर्चला ॥ ३८ ॥ वातशोणितनाशाय तोयं शस्तं सितं मधु ॥
नासारोगेषु च हितं घृतं दूर्वाप्रसाधितम् ॥ ३९ ॥ भृङ्गराजरसे सिद्धं तैलं धात्रीरसेऽपि वा ॥ नस्यं सर्वामयेष्विष्टं मूर्ध्वजं तूद्भवेषु च
॥ ४० ॥ शीततोयान्नपानं च तिलानां विप्र भक्षणम् ॥ द्विजदार्ढ्यकरं प्रोक्तं तथा तुष्टिकरं परम् ॥ ४१ ॥ गण्डूषं तिलतैलेन द्विजदा-
र्ढ्यकरं परम् ॥ विडङ्गचूर्णं गोमूत्रं सर्वत्र कृमिनाशने ॥ ४२ ॥ धात्रीफलान्यथाज्यं च शिरोलेपनमुत्तमम् ॥ शिरोरोगविनाशाय
स्निग्धमुष्णं च भोजनम् ॥ ४३ ॥ तैलं वा बस्तमूत्रं च कर्णपूरणमुत्तमम् ॥ कर्णशूलविनाशाय सर्वशुक्तानि वा द्विज ॥ ४४ ॥ गिरिमृ-
च्चन्दनं लाक्षां मालतीं कलिकां तथा ॥ संयोज्य या कृता वर्त्तिः क्षतशुक्रहरी तु सा ॥ ४५ ॥ व्योपं त्रिफलया युक्तं तुच्छकं च तथा
जलम् ॥ सर्वाक्षिरोगशमनं तथैव च रसाञ्जनम् ॥ ४६ ॥ आज्यभृष्टं शिलापिष्टं लोध्रकाञ्जिकसैन्धवैः ॥ आश्च्योतनविनाशाय सर्वने-
त्रामये हितम् ॥ ४७ ॥ गिरिमृच्चन्दनैर्लेपो बाह्यैर्नेत्रस्य शस्यते ॥ नेत्रामयविघातार्थं त्रिफलां शीलयेत्सदा ॥ ४८ ॥ रात्रौ तु मधु-
सर्पिर्भ्यां दीर्घमायुर्जिजीविषुः ॥ शतावरीरसे सिद्धौ वृष्यौ क्षीरघृतौ स्मृतौ ॥ ४९ ॥ कलम्बिकानि माषाश्च वृष्यौ क्षीरघृतौ तथा ॥

आयुष्या त्रिफला ज्ञेया पूर्ववन्मधुकान्विता ॥ ५० ॥ मधुकादिरसोपेता वलीपलितनाशिनी ॥ वचा सिद्धघृतं विप्र भूतदोषविनाशनम् ॥ ५१ ॥ कव्यं बुद्धिप्रदं चैव तथा सर्वार्थसाधनम् ॥ बलाकल्ककषायेण सिद्धमभ्यञ्जने हितम् ॥ ५२ ॥ रास्नासहचरैर्वापि तैलं वातविकारिणाम् ॥ अनभिष्यन्दि यच्चान्नं तद्व्रणेषु प्रशस्यते ॥ ५३ ॥ सक्तुपिण्डी तथैवाम्ला पाचनाय प्रशस्यते ॥ पक्वस्य च तथा भेदे निम्बचूर्णं च रोपणे ॥ ५४ ॥ तथा सूच्युपचारश्च बलिकर्म विशेषतः ॥ सूतिका च तथा रक्षा प्राणिनां तु सदा हिता ॥ ५५ ॥ भक्षणं निम्बपत्राणां सर्पदष्टस्य भेषजम् ॥ तालनिम्बदलं केश्यं जीर्णं तैलं यवा घृतम् ॥ ५६ ॥ धूपो वृश्चिकदष्टस्य शिखिपत्रघृतेन वा ॥ अर्कक्षीरेण संपिष्टं लोपो बीजं पलाशजम् ॥ ५७ ॥ वृश्चिकार्त्तस्य कृष्णा वा शिवा च फलसंयुता ॥ अर्कक्षीरं तिलं तैलं पललं च गुडं समम् ॥ ५८ ॥ पानाज्जयति दुर्वारं श्वविषं शीघ्रमेव तु ॥ पीत्वा मूलं त्रिवृत्तुल्यं तण्डुलीयस्य सर्पिषा ॥ ५९ ॥ सर्पकीटविषाण्याशु जयत्यतिबलान्यपि ॥ चन्दनं पद्मकं कुष्ठं लताम्बूशीरपाटला ॥ ६० ॥ निर्गुण्डी शारिवा सेलुर्लूतानां विषहरो गदः ॥ शिरोविरेचनं शस्तं गुडनागरकं द्विज ॥ ६१ ॥ स्नेहपाने तथा बस्तौ तैलं घृतमनुत्तमम् ॥ स्वेदनीयः परो वह्निः शीताम्भः स्तम्भनं परम् ॥ ६२ ॥ त्रिवृद्धि रेचने श्रेष्ठा वमने मदनं तथा ॥ बस्तिर्विरेको वमनं तैलं सर्पिस्तथा मधु ॥ वातपित्तबलासानां क्रमेण परमौषधम् ॥ ६३ ॥

इत्यादिमहापुराणे आग्नेये सिद्धौषधादिकथनं नामैकोनाशीत्यधिकद्विशततमोऽध्यायः ॥२७९॥

अथ सर्वरोगहराण्यौषधानि ॥ धन्वन्तरिरुवाच ॥ शारीरमानसागन्तुसहजा व्याधयो मताः ॥ शारीरा ज्वरकुष्ठाद्याः क्रोधाद्या मानसी मताः ॥ १ ॥ आगन्तवो विघातोत्थाः सहजाः क्षुज्जरादयः ॥ शारीरागन्तुनाशाय सूर्य्यवारे घृतं गुडम् ॥ २ ॥ लवणं सहिरण्यं च विप्रायार्च्य समर्पयेत् ॥ चन्द्रे चाभ्यङ्गदो विप्रे सर्वरोगैः प्रमुच्यते ॥ ३ ॥ तैलं शनैश्चरे दद्यादाश्विने गोरसान्नदः ॥ घृतेन पयसा लिङ्गं संस्नाप्य स्याद्रुगुज्झितः ॥ ४ ॥ गायत्र्या जुहुयाद्वह्नौ दूर्वां त्रिमधुरप्लुताम् ॥ यस्मिन्भे व्याधिमाप्नोति तस्मिन्स्नानं बलिः शुभे ॥ ५॥ मानसानां रुजादीनां विष्णोः स्तोत्रं हरं भवेत्॥ वातपित्तकफा दोषा धातवश्च तथा शृणु ॥ ६ ॥ भुक्तं पक्वाशयादन्नं द्विधा याति च सुश्रुत ॥ अंशेनैकेन किट्टत्वं रसतां चापरेण च ॥ ७ ॥ किट्टभागो मलस्तत्र विण्मूत्रस्वेददूषिकाः ॥ नासामलं कर्णमलं तथा देहमलं च यत् ॥ ८ ॥ रसभागाद्रसस्तत्र समाच्छोणितततां

व्रजेत् ॥ मांसं रक्तात्ततो मेदो मेदसोऽस्थ्नश्च सम्भवः ॥९॥ अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भस्तथौजसः ॥ देशमार्त्तिं बलं शक्तिं कालं प्रकृतिमेव च ॥१०॥ ज्ञात्वा चिकित्सितं कुर्य्याद्भेषजस्य तथा बलम् ॥ तिथिं रिक्तां त्यजेद्भौमं मन्दभं दारुणोग्रकम् ॥११॥ हरिगोद्विजचन्द्रार्कसुरादीन्प्रतिपूज्य च ॥ शृणु मन्त्रमिमं विद्वन्भेषजारम्भमाचरेत् ॥१२॥ ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः ॥ ऋषयश्चौषधिग्रामा भूतसंघाश्च पान्तु ते ॥१३॥ रसायनमिवर्षीणां देवानाममृतं यथा ॥ सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥१४॥ वातश्लेष्मातको देशो बहुवृक्षो बहूदकः ॥ अनूप इति विख्यातो जाङ्गलस्तद्विवर्जितः ॥ १५ ॥ किञ्चिद्वृक्षोदको देशस्तथा साधारणः स्मृतः ॥ जाङ्गलः पित्तबहुलो मध्यः साधारणः स्मृतः ॥ १६ ॥ रूक्षः शीतश्चलो वायुः पित्तमुष्णं कटुत्रयम् ॥ स्थिराम्लस्निग्धमधुरं बलाशं च प्रचक्षते ॥ १७ ॥ वृद्धिः समानैरेनेषां विपरीतैर्विपर्य्ययः ॥ रसाः स्वाद्वम्ललवणाः श्लेष्मला वायुनाशनाः ॥ १८ ॥ ॥ कटुतिक्तकषायाश्च वातलाः श्लेष्मनाशनाः ॥ कट्वम्ललवणा ज्ञेयास्तथा पित्तविवर्धनाः ॥ १९ ॥ तिक्तस्वादुकषायाश्च तथा पित्तविनाशनाः ॥ रसस्यैष गुणो नास्ति विपाकस्यैष इष्यते ॥ २० ॥ वीर्य्योष्णाः कफवातघ्नाः शीताः पित्तविनाशनाः ॥ प्रभावतस्तथा कर्म ते कुर्वन्ति च सुश्रुत ॥ २१ ॥ शिशिरे च वसन्ते च निदाघे च तथा क्रमात ॥ चयप्रकोपप्रशमाः कफस्य तु प्रकीर्त्तिताः ॥ २२ ॥ निदाघवर्षारात्रौ च तथा शरदि सुश्रुत ॥ चयप्रकोपप्रशमाः पवनस्य प्रकीर्त्तिताः ॥ २३ ॥ मेघकाले च शरदि हेमन्ते च यथाक्रमात ॥ चयप्रकोपप्रशमास्तथा पित्तस्य कीर्त्तिताः ॥ २४ ॥ वर्षादयो विसर्गास्तु हेमन्ताद्यास्तथा त्रयः ॥ शिशिराद्यास्तथाऽऽदाने ग्रीष्मान्ता ऋतवस्त्रयः ॥ २५ ॥ सौम्यो विसर्गस्त्वादानमाग्नेयं परिकीर्त्तितम् ॥ वर्षादींस्त्रीनृतून्सोमश्चरन्पर्य्यायशो रसान् ॥ २६ ॥ जनयत्यम्ललवणमधुरांस्त्रीन्यथाक्रमम् ॥ शिशिरादीनृतूनर्कश्चरन्पर्य्यायशो रसान् ॥ २७ ॥ विवर्धयेत्तथा तिक्तकषायकटुकान्क्रमात् ॥ यथा रजन्यो वर्धन्ते बलमेकं हि वर्धते ॥ २८ ॥ क्रमशोऽथ मनुष्याणां हीयमानासु हीयते ॥ रात्रिभुक्तादिनानां च वयसश्च तथैव च ॥ २९ ॥ आदिमध्यावसानेषु कफपित्तसमीरणाः ॥ प्रकोपं यान्ति कोपादौ काले तेषां चयः स्मृतः ॥ ३० ॥ प्रकोपोत्तरके काले शमस्तेषां प्रकीर्त्तितः ॥ अतिभोजनतो विप्र तथा चाभोजनेन च ॥ ३१ ॥ रोगा हि सर्वे जायन्ते वेगोदीरणधारणैः ॥

अन्नेन कुक्षेर्द्वंशावेकं पानेन पूरयेत ॥ ३२ ॥ आश्रयं पवनादीनां तथैकमवशेषयेत् ॥ व्यापोर्नैदानस्य तथा विपरीतमथौषधम् ॥ ॥ ३३ ॥ कर्त्तव्यमेतदेवात्र मया सारं प्रकीर्त्तितम् ॥ नाभेरूर्ध्वमधश्चैव गुदश्रोण्योस्तथैव च ॥ ३४ ॥ बलाशपित्तवातानां देहे स्थानं प्रकीर्त्तितम् ॥ तथापि सर्वगाश्चैते देहे वायुर्विशेषतः ॥ ३५ ॥ देहस्य मध्ये हृदयं स्थानं तन्मनसः स्मृतम् ॥ कृशोऽल्पकेशश्चपलो बहुवाग्विषमानलः ॥ ३६ ॥ व्योमगश्च तथा स्वप्ने वातप्रकृतिरुच्यते ॥ अकालपलितः क्रोधी प्रस्वेदी मधुरप्रियः ॥ ३७ ॥ स्वप्ने च दीप्तिमत्प्रेक्षी पित्तप्रकृतिरुच्यते ॥ दृढाङ्गः स्थिरचित्तश्च सुप्रभः स्निग्धमूर्द्धजः ॥ ३८ ॥ शुद्धाम्बुदर्शी स्वप्ने च कफप्रकृतिको नरः ॥ तामसा राजसाश्चैव सात्त्विकाश्च तथा स्मृताः ॥ ३९ ॥ मनुष्या मुनिशार्दूल वातपित्तकफात्मकाः ॥ रक्तपित्तं व्यवायाच्च गुरुकर्मप्रवर्त्तनैः ॥ ४० ॥ कदन्नभोजनाद्वायुर्देहे शोकाच्च कुप्यति ॥ विदाहिनां तथोल्कानामुष्णान्नाध्वनिषेविणाम् ॥ ४१ ॥ पित्तं प्रकोपमायाति भयेन च तथा द्विज ॥ अत्यम्बुपानगुर्वन्नभोजिनां भुक्तशायिनाम् ॥ ४२ ॥ श्लेष्मा प्रकोपमायाति तथा ये चालसा जनाः ॥ वाताद्युत्थानि रोगाणि ज्ञात्वा शाम्यानि लक्षणैः ॥ ४३ ॥ अस्थिभङ्गः कषायत्वमास्ये शुष्कास्यता तथा ॥ जृम्भणं लोमहर्षश्च वातिकव्याधिलक्षणम् ॥ ४४ ॥ नखनेत्रशिराणां तु पीतत्वं कटुता मुखे ॥ तृष्णा दाहोष्णता चैव पित्तव्याधिनिदर्शनम् ॥ ४५ ॥ आलस्यं च प्रसेकश्च गुरुता मधुरास्यता ॥ उष्णाभिलाषिता चेति श्लैष्मिकव्याधिलक्षणम् ॥ ४६ ॥ स्निग्धोष्णमन्नमभ्यङ्गस्तैलपानादि वातनुत् ॥ आज्यं क्षीरं सिताद्यं च चन्द्ररश्म्यादि पित्तनुत् ॥ ४७ ॥ सक्षौद्रं त्रिफलातैलं व्यायामादि कफापहम् ॥ सर्वरोगप्रशान्त्यै स्याद्विष्णोर्ध्यानं च पूजनम् ॥ ४८ ॥ इत्यादिमहापुराणे आग्नेये सर्वरोगहरौषधादिकथनं नामाशीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥ अथ रसादिलक्षणम् ॥ धन्वन्तरिरुवाच ॥ रसादिलक्षणं वक्ष्ये भेषजानां गुणं शृणु ॥ रसवीर्य्यविपाकज्ञो नृपादीन्रक्षयेन्नरः ॥ १ ॥ रसाः स्वाद्वम्ललवणाः सोमजाः परिकीर्त्तिताः ॥ कटुतिक्तकषायाणि तथाग्नेया महाभुज ॥ २ ॥ त्रिधा विपाको द्रव्यस्य कट्वम्ललवणात्मकः ॥ द्विधा वीर्य्यं समुद्दिष्टमुष्णं शीतं तथैव च ॥ ३ ॥ अनिर्देश्यप्रभावश्च ओषधीनां द्विजोत्तम ॥ मधुरश्च कषायश्च तिक्तश्चैव तथा रसः ॥ ४ ॥ शीतवीर्य्याः समुद्दिष्टाः शेषास्तूष्णाः प्रकीर्त्तिताः ॥ गुडूची तत्र तिक्तापि भवत्युष्णाति-

वीर्य्यतः ॥ ५ ॥ उष्णा कषायापि तथा पथ्या भवति मानद ॥ मधुरोऽपि तथा मांस उष्ण एव प्रकीर्त्तितः ॥ ६ ॥ लवणो मधुरा-
श्चैव विपाकमधुरौ स्मृतौ ॥ आम्लोष्णश्च तथा प्रोक्तः शेषाः कटुविपाकिनः ॥ ७ ॥ वीर्य्यपाके विपर्य्यस्तप्रभावात्तत्र निश्चयः ॥
मधुरोऽपि कटुः पाके यच्च क्षौद्रं प्रकीर्त्तितम् ॥ ८ ॥ क्राथयेत्षोडशगुणं पिबेद्द्रव्याच्चतुर्गुणम् ॥ कल्पनैषा कषायस्य यत्र नोक्तो विधि-
र्भवेत् ॥ ९ ॥ कषायं तु भवेत्तोयं स्नेहपाके चतुर्गुणम् ॥ द्रव्यतुल्यं समुद्धृत्य द्रव्ये स्नेहं क्षिपेद्बुधः ॥ १० ॥ नावत्प्रमाणं द्रव्यस्य स्नेह-
पादं ततः क्षिपेत् ॥ तोयवर्जं तु यद्द्रव्यं स्नेहद्रव्यं तथा भवेत् ॥ ११ ॥ संवर्त्तितौषधः पाकः स्नेहानां परिकीर्त्तितः ॥ तत्तुल्यता तु
लेह्यस्य तथा भवति सुश्रुत ॥ १२ ॥ स्वच्छमल्पौषधं क्राथं कषायं चोक्तवद्भवेत् ॥ अक्षं चूर्णस्य निर्दिष्टं कषायस्य चतुष्पलम् ॥
॥ १३ ॥ मध्यमैषा स्मृता मात्रा नास्ति मात्राविकल्पना ॥ वयः कालं बलं वह्निं देशं द्रव्यं रुजं तथा ॥ १४ ॥ समवेक्ष्य महाभाग
मात्रायाः कल्पना भवेत् ॥ सौम्यास्तत्र रसाः प्रायो विज्ञेया धातुवर्धनाः ॥ १५ ॥ मधुरास्तु विशेषेण विज्ञेया धातुवर्धनाः ॥ दोषाणां
चैव धातूनां द्रव्यं समगुणं तु यत् ॥ १६ ॥ तदेव वृद्धये ज्ञेयं विपरीतं क्षयावहम् ॥ उपक्रमत्रयं प्रोक्तं देहेऽस्मिन्मनुजोत्तम ॥ १७ ॥
आहारो मैथुनं निद्रा तेषु यत्नः सदा भवेत् ॥ असेवनात्सेवनाच्च अत्यन्तं नाशमाप्नुयात् ॥ १८ ॥ क्षयस्य बृंहणं कार्य्यं स्थूलदेहस्य
कर्षणम् ॥ रक्षणं मध्यकायस्य देहभेदास्त्रयो मताः ॥ १९ ॥ उपक्रमद्वयं प्रोक्तं तर्पणं चाप्यतर्पणम् ॥ हिताशी च मिताशी च जीर्णाशी
च तथा भवेत् ॥ २० ॥ ओषधीनां पञ्चविधा तथा भवति कल्पना ॥ रसः कल्कः शृतः शीतः फाण्टश्च मनुजोत्तम ॥ २१ ॥ रसश्च
पी[illegible]को ज्ञेयः कल्क आलोडिताद्भवेत् ॥ क्वथितश्च शृतो ज्ञेयः शीतः पर्य्युषितो निशाम् ॥ २२ ॥ सद्योऽभिशृतपूतं यत्तत्फाण्टम-
भिधीयते ॥ करणानां शतं चैव षष्टिं चैवाधिका स्मृता ॥ २३ ॥ यो वेत्ति स ह्यजेयः स्यात्सम्बन्धे बाहुशौण्डिकः ॥ आहारशु-
द्धिरग्न्यर्थमग्निमूलं बलं नृणाम् ॥ २४ ॥ ससिन्धुत्रिफलां चाद्यात्सुद्धु राड्याभिवर्णदाम् ॥ जाङ्गलं च रसं सिन्धुयुक्तं दधि पयः कणाम्
॥ २५ ॥ रसाधिकं समं कुर्य्यात्रते वाताधिकोऽपि वा ॥ निदाघे मर्दनं प्रोक्तं शिशिरे च समं बहु ॥ २६ ॥ वसन्ते मध्यमं ज्ञेयं निदाघे
मर्दनोल्वणम् ॥ त्वचं तु प्रथमं मर्द्य मज्जां च तदनन्तरम् ॥२७॥ स्नायुरुधिरदेहेषु अस्थि चातीव मांसजम् ॥ स्कन्धौ बाहू तथैवेद तथा

जङ्घे सजानुनी ॥ २८ ॥ आस्विन्मर्दयेत्प्राज्ञो जत्रु वक्षश्च पूर्ववत् ॥ अङ्गसन्धिषु सर्वेषु निष्पीडय बहुलं तथा ॥ २९ ॥ प्रसारयेदङ्गस-
न्धीन्न च क्षेपेण चाक्रमात् ॥ नाजीर्णे तु श्रमं कुर्य्यान्न भुक्त्वा पीतवान्नरः ॥ ३० ॥ दिनस्य तु चतुर्भाग ऊर्ध्वे तु प्रहरार्द्धके ॥ व्यायामं
नैव कर्तव्यं स्नानाच्छीताम्भुना सकृत् ॥ ३१ ॥ वार्य्युष्णं च श्रमं जह्याद्वदा श्वासं न धारयेत् ॥ व्यायामश्च कफं हन्याद्वातं हन्याच्च
मर्दनम् ॥ ३२ ॥ स्नानं पित्ताधिकं हन्यात्तस्यान्ते चातपाः प्रियाः ॥ आतपक्लेशकर्मादौ क्षेमव्यायामिनो नराः ॥ ३३ ॥ इत्यादिमहापुराणे
आग्नेये रसादिलक्षणं नामैकाशीत्यधिकद्विशततमोऽध्यायः ॥२८१॥ अथ वृक्षायुर्वेदः ॥ धन्वन्तरिरुवाच ॥ वृक्षायुर्वेदमाख्यास्ये प्लक्षश्चो-
त्तरतः शुभः॥ प्राग्वटो याम्यतस्त्वाम्र आप्येऽश्वत्थः क्रमेण तु॥१॥ दक्षिणां दिशमुत्पन्नाः समीपे कण्टकद्रुमाः ॥ उद्यानं गृहवासे स्यात्ति-
लान्वाप्यथ पुष्पितान् ॥ २ ॥ गृह्णीयाद्रोपयेद्वृक्षान्द्विजं चन्द्रं प्रपूज्य च ॥ ध्रुवाणि पञ्च वायव्यं हस्तं प्राजेशवैष्णवम् ॥ ३ ॥ नक्षत्राणि तथा
मूलं शस्यन्ते द्रुमरोपणे ॥ प्रवेशयेन्नदीवाहान्पुष्करिण्यां तु कारयेत् ॥४॥ हस्तो मघा तथा मैत्रमाद्यं पुष्पं सवासवम् ॥ जलाशयसमारम्भे
वारुणं चोत्तरात्रयम् ॥ ५ ॥ संपूज्य वरुणं विष्णुं पर्जन्यं तत्समाचरेत् ॥ अरिष्टाशोकपुन्नागशिरीषाः सप्रियङ्गवः ॥ ६ ॥ अशोकः
कदली जम्बूस्तथा बकुलदाडिमाः ॥ सायं प्रातस्तु घर्मर्त्तौ शीतकाले दिनान्तरे ॥ ७ ॥ वर्षारात्रौ भुवः शोषे सेक्तव्या रोपिता द्रुमाः ॥
उत्तमा विंशतिर्हस्ता मध्यमाः षोडशान्तराः ॥ ८ ॥ स्थानात्स्थानान्तरं कार्य्यं वृक्षाणां द्वादशावरम् ॥ विफलाः स्युर्घना वृक्षाः शस्त्रे-
णादौ हि शोधनम् ॥ ९ ॥ विडङ्गघृतपङ्काक्तान्सेचयेच्छीतवारिणा ॥ फलनाशे कुलत्थैश्च माषैर्मुद्गैर्यवैस्तिलैः ॥ १० ॥ घृतशीतपयः
सेकः फलपुष्पाय सर्वदा ॥ आविकाजशकृच्चूर्णं यवचूर्णं तिलानि च ॥ ११ ॥ गोमांसमुदकं चैव सप्तरात्रं निधापयेत् ॥ उत्सेकः सर्व-
वृक्षाणां फलपुष्पादिवृद्धिदः ॥ १२ ॥ मत्स्याम्भसा तु सेकेन वृद्धिर्भवति शाखिनः ॥ विडङ्गतण्डुलोपेतं मात्स्यं मांसं हि दोहदम् ॥
सर्वेषामविशेषेण वृक्षाणां रोगमर्दनम् ॥ १३ ॥ इत्यादिमहापुराणे आग्नेये वृक्षायुर्वेदकथनं नाम द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥
॥ २८२ ॥ अथ नानारोगहराण्यौषधानि ॥ धन्वन्तरिरुवाच ॥ सिंही शटी निशायुग्मं वत्सकं क्वाथसेवनम् ॥ शिशोः सर्वातिसारेषु
स्तन्यदोषेषु शस्यते ॥ १ ॥ शृङ्गी सकृष्णातिविषां चूर्णितां मधुना लिहेत् ॥ एका चातिविषा कासच्छर्दिज्वरहरी शिशोः ॥ २ ॥

बालैः सेव्या वचा साज्या सदुग्धा वाथ तैलयुक् ॥ यष्टिका शंखपुष्पी वा बालः क्षीरान्विता पिबेत् ॥ ३ ॥ वांग्रूपसंम्पद्युक्तायुर्मेधाश्रीर्विवर्धते शिशोः ॥ वचा ब्राह्मीशिलावासाशुण्ठीकृष्णानिशागदम् ॥ ४ ॥ सयष्टिसैन्धवं बालः प्रातर्मेधाकरं पिबेत् ॥ देवदारुमहाशिग्रुफलत्रयपयोमुचाम् ॥ ५ ॥ क्वाथः सकृष्णा मृद्वीका कल्कः सर्वान्कृमीन्हरेत् ॥ त्रिफलाभृङ्गविश्वानां रसेषु मधुसर्पिषोः ॥ ६ ॥ मेषीक्षीरे च गोमूत्रे सिक्तं रोगे हितं शिशोः ॥ नासारक्तहरो नस्याद्दूर्वारस इहोत्तमः ॥ ७ ॥ लशुनार्द्रकशिग्रूणां रसः कर्णस्य पूरणम् ॥ तैलमार्द्रकजाद्यं वा शूलहा चोष्ठरोगनुत् ॥ ८ ॥ जातीपत्रं फलं व्योषं कवलं मूत्रकं निशा ॥ दुग्धक्वाथेऽभयाकल्के सिद्धं तैलं द्विजार्त्तिनुत् ॥ ९ ॥ धान्याम्बु नारिकेलं गोमूत्रं क्रमुकविश्वयुत् ॥ क्वथितं कवलं ;कार्य्यं जिह्वाव्याधिप्रशान्तये ॥ १० ॥ साधितं लाङ्गलीकल्के तैलं निर्गुण्डिकारसैः ॥ गण्डमालागलगण्डो नाशयेन्नस्यकर्मणा ॥ ११ ॥ पञ्चवैरर्कपूतीकस्नुहीरुग्घातजातिकैः ॥ उद्वर्त्तयेत्सगोमूत्रैः सर्वत्वग्दोषनाशनैः ॥ १२ ॥ वाकुची सतिला भुक्ता वत्सरात्कुष्ठनाशिनी ॥ पथ्या भल्लातकी तैलगुडपिण्डी तु कुष्ठजित् ॥ १३ ॥ यूथिकावह्निरजनी त्रिफलाव्योषचूर्णयुक् ॥ तक्रं गुदाङ्कुरे पेयं भक्ष्या वा सगुडाऽभया ॥ १४ ॥ फलदार्वीविषाणां तु क्वाथो धात्रीरसोऽथ वा ॥ पातव्यो रजनीकल्कः क्षौद्राक्षौद्रप्रमेहिणा ॥ १५ ॥ वासागर्भो व्याधिघातक्वाथ एरण्डतैलयुक् ॥ वातशोणितहृत्पानात्पिप्पली स्यात्प्लीहाहरी ॥ १६ ॥ सेव्या जठरिणा कृष्णा स्नुक्क्षीरबहुभाविता ॥ पयो वा रुच्यदन्त्याग्निविडङ्गव्योषकल्कयुक् ॥ १७ ॥ ग्रन्थिकोग्राभया कृष्णा विडङ्गाक्ता घृते स्थिता ॥ मांसं तक्रं ग्रहण्यर्शः पाण्डुगुल्मकृमीन्हरेत् ॥ १८ ॥ फलत्रयामृतावासा तिक्तभूनिम्बजस्तथा ॥ क्वाथः समाक्षिको हन्यात्पाण्डुरोगं सकामलम् ॥ १९ ॥ रक्तपित्ती पिबेद्वासासुरसं ससितं मधु ॥ वरीद्राक्षाबलाशुण्ठीसाधितं वा पयः पृथक् ॥ २० ॥ वरी विदारी पथ्या च बलात्रयं सवासकम् ॥ श्वदंष्ट्रा मधुसर्पिर्भ्यामालिहेत्क्षयरोगवान् ॥ २१ ॥ पथ्याशिग्रुकरञ्जार्कत्वक्सारं मधुसिन्धुमत् ॥ समूत्रं विद्रधिं हन्ति परिपाकाय तन्त्रजित् ॥ २२ ॥ त्रिवृता जीवती दन्ती माञ्जिष्ठा शर्वरीद्वयम् ॥ तार्क्षजं निम्बपत्रं च लेपः शस्तो भगन्दरे ॥ २३ ॥ रुग्घातरजनीलाक्षाचूर्णाजक्षौद्रसंयुता ॥ वासोवर्त्तिर्व्रणे योज्या शोधिनी गतिनाशिनी ॥ २४ ॥ श्यामायष्टिनिशालोध्रपद्मकोत्पलचन्दनैः ॥ समरीचैः शृतं तैलं क्षीरे स्याद्व्रणरोहणम् ॥ २५ ॥

श्रीकार्पासदलैर्भस्मफलोपलवणा निशा ॥ तत्पिण्डीस्वेदनं ताम्रे तत्तैलं स्यात्क्षतौषधम् ॥ २६ ॥ कुम्भीसारं पयोयुक्तं वह्निदग्धं व्रणे लिपेत् ॥ तदेव नाशयेत्सेक्रान्नारिकेलरजोघृतम् ॥२७॥ विश्वाजमोदासिन्धूत्थचिञ्चात्वग्भिः समाभया ॥ तक्रेणोष्णाम्बुना वाथ पीतातीसारनाशिनी ॥२८॥ वत्सकातिविषाविश्वबिल्वमुस्तशृतं जलम् ॥ सामे पुराणेऽतीसारे सासृक्शूले च पाययेत् ॥२९॥ अङ्गारदग्धं सुगतं सिन्धुमुष्णाम्बुना पिबेत् ॥ शूलवानथ वा तद्धि सिन्धुहिङ्गुकणाभया ॥ ३० ॥ कटुरोहोत्कणातङ्कलाजचूर्णं मधुप्लुतम् ॥ वस्त्रच्छिद्रगतं वक्त्रे न्यस्तं तृष्णां विनाशयेत् ॥३१॥ पाठादार्वीजातिदलं द्राक्षामूलफलत्रयैः ॥ साधितं समधुक्वाथं कवलं मुखपाकहृत् ॥३२॥ कृष्णातिविषातिक्तेन्द्रदारुपाठापयोमुचाम् ॥ क्वाथो मूत्रे शृतः क्षौद्रो सर्वकण्ठगदापहः ॥ ३३ ॥ पथ्यागोक्षुरदुरस्पर्शराजवृक्षाशिलाभिदाम् ॥ कषायः समधुः पीतो मूत्रकृच्छ्रं व्यपोहति ॥३४॥ वंशत्वग्वरुणक्वाथः शर्कराश्मविघातनः ॥ शाखोटक्वाथसक्षौद्रक्षीराशी श्लीपदी भवेत् ॥ ॥३५॥माषार्कत्वक्पयस्तैलं मधुसिक्थं च सैन्धवम् ॥पादरोगं हरेत्सर्पिर्जालकुक्कुटजं तथा ॥३६॥ शुण्ठीसौवर्चलाहिङ्गुचूर्णं शुण्ठीरसैर्घृतम् ॥ रुजं हरेदथ क्वाथो ऽग्निवृद्ध्याग्निसाधने ॥ ३७ ॥ सौवर्चलाग्निहिंगूनां सदीप्यानां रसैर्युतम् ॥ विडदीप्यकयुक्तं वा तक्रं गुल्मातुरः पिबेत् ॥३८॥ धात्रीपटोलमुद्गानां क्वाथः साज्यो विसर्पहा ॥ शुण्ठीदारुनवाक्षीरक्वाथो मूत्रान्वितोऽपरः ॥३९॥ सव्योषायोरजः क्षारः फलक्वाथश्च शोथहृत् ॥ गुडशिशुत्रिवृद्भिश्च सैन्धवानां रजोयुतः ॥ ४० ॥ त्रिवृताफलजः क्वाथः सगुडः स्याद्विरेचनः ॥ वचाफलकणाद्योत्थं पयो वमनकृद्भवेत् ॥ ४१ ॥ त्रिफलायाः पलशतं पृथग्भृङ्गजभावितम् ॥ विडङ्गं लोहचूर्णं च दशभागसमन्वितम् ॥ ४२॥ शतावरीगुडूच्योऽग्निपलानां शत (पञ्च) विंशतिः ॥ मध्वाज्यतिलजैर्लिह्याद्वलीपलितवर्जितः ॥ ४३ ॥ शतमब्दं हि जीवेत सर्वरोगविवर्जितः ॥ त्रिफला सर्वरोगघ्नी समधुः शर्करान्विता ॥ ४४ ॥ सितामधुघृतैर्युक्ता सकृष्णा त्रिफला तथा ॥ पथ्याचित्रकशुण्ठ्यश्च गुडूचीमुशलीरजः ॥४५॥ सगुडं भक्षितं रोगहरं त्रिशतवर्षकृत् ॥ किञ्चिच्चूर्णं जवापुष्पं पिण्डितं विसृजेज्जले ॥ ४६ ॥ तैलं भवेद् घृताकारं किञ्चिच्चूर्णं जलान्वितम् ॥ धूपार्थं दृश्यते चित्रं वृषदंशजरायुना ॥ ४७ ॥ पुनर्मौक्षिकधूपेन दृश्यते तद्यथापुरा ॥ कर्पूरजलकाभेकतैलं पाटलिमूलयुक् ॥ ४८ ॥ पिष्ट्वा लिप्य पदे द्वे च चरेदङ्गारके नरः ॥ तृणोत्थानादिकं व्यूह्य दर्शयन्वै कुतूहलम् ॥ ४९ ॥ विषग्रहरुजध्वंसक्षुद्रनर्म च

कामिकम् ॥ तत्ते षट्कर्मकं प्रोक्तं सिद्धिद्वयसमाश्रयम् ॥ ५० ॥ मन्त्रध्यानौषधिकथामुद्रेज्यां यत्र मुह्यः ॥ चतुर्वर्गफलं प्रोक्तं यः
पठेत्स दिवं व्रजेत् ॥ ५१ ॥ इत्यादिमहापुराणे आग्नेये नानारोगहरौषधकथनं नाम त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥ अथ
मन्त्ररूपौषधकथनम् ॥ धन्वन्तरिरुवाच ॥ आयुरारोग्यकर्त्तार ओंकाराद्याश्च नाकदाः ॥ ओंकारः परमो मन्त्रस्तं जप्त्वा चामरो भवेत्
॥ १ ॥ गायत्री परमो मन्त्रस्तं जप्त्वा भुक्तिमुक्तिभाक् ॥ ओं नमो नारायणाय मन्त्रः सर्वार्थसाधकः ॥ २ ॥ ओं नमो भगवते वासुदेवाय
सर्वदः ॥ ओं हूं नमो विष्णवे मन्त्रोऽयं चौषधं परम् ॥ ३ ॥ अनेन देवा ह्यसुराः सश्रियो निरुजोऽभवन् ॥ भूतानामुपकारश्च तथा
धर्मो महौषधम् ॥ ४ ॥ धर्मः सद्धर्मकृद्धर्मी एतैर्धर्मैश्च निर्मलः ॥ श्रीदः श्रीशः श्रीनिवासः श्रीधरः श्रीनिकेतनः ॥ ५ ॥ श्रियः पतिः
श्रीपरम एतैः श्रियमवाप्नुयात् ॥ कामी कामप्रदः कामः कामपालस्तथा हरिः ॥ ६ ॥ आनन्दो माधवश्चैव नाम कामाय वै हरेः ॥ रामः
परशुरामश्च नृसिंहो विष्णुरेव च ॥ ७ ॥ त्रिविक्रमश्च नामानि जप्तव्यानि जिगीषुभिः ॥ विद्या त्वभ्यस्यतां नित्यं जप्तव्यः पुरुषोत्तमः
॥ ८ ॥ दामोदरो बन्धहरः पुष्कराक्षोऽक्षिरोगनुत् ॥ हृषीकेशो भयहरो जपेदौषधकर्मणि ॥ ९ ॥ अच्युतं चामृतं मन्त्रं संग्रामे चापरा-
जितः ॥ जलतारे नारसिंहं पूर्वादौ क्षेमकामवान् ॥ १० ॥ चक्रिणं गदिनं चैव शार्ङ्गिणं खड्गिनं स्मरन् ॥ नारायणं सर्वकालं नृसिंहोऽ-
खिलभीतिनुत् ॥ ११ ॥ गरुडध्वजश्च विषहृद्वासुदेवं सदा जपेत् ॥ धान्यादिस्थापने स्वप्ने ह्यनन्ताच्युतमीरयेत् ॥ १२ ॥ नारायणं च
दुःस्वप्ने दाहादौ जलशायिनम् ॥ हयग्रीवं च विद्यार्थी जगत्सूतिं सुतात्तये ॥ बलभद्रं शौर्यकार्य्ये एकं नानार्थसाधकम् ॥ १३ ॥ इत्या-
दिमहापुराणे आग्नेये मन्त्ररूपौषधकथनं नाम चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥ अथ मृतसञ्जीवनीकरसिद्धयोगः ॥ धन्वन्त-
रिरुवाच ॥ सिद्धयोगान्पुनर्वक्ष्ये मृतसञ्जीवनीकरान् ॥ आत्रेयभाषितान्दिव्यान्सर्वव्याधिविमर्दनान् ॥ १ ॥ आत्रेय उवाच ॥ बिल्वादिपञ्च-
मूलस्य क्वाथः स्याद्वातिके ज्वरे ॥ पाचनं पिप्पलीमूलं गुडूची विश्वजोऽथ वा ॥ २ ॥ आमलक्यभया कृष्णा वह्निः सर्वज्वरान्तकः ॥
बिल्वाग्निमन्थश्योनाककाश्मर्य्यः पाटला स्थिरा ॥ ३ ॥ निकण्टकं पृश्निपर्णी बृहती कण्टकारिकाः ॥ ज्वरादिपाकपार्श्वार्तिकासनुत्कुशमू-
लकम् ॥ ४ ॥ गुडूची पर्पटी मुस्तं किरातं विश्वभेषजम् ॥ वातपित्तज्वरे देयं पञ्चभद्रमिदं स्मृतम् ॥ ५ ॥ त्रिवृद्विशालाकटुकात्रि-

फलाम्लयूषैः कृतः ॥ संस्कारो भेदनः क्वाथः पेयः सर्वज्वरापहः ॥ ६ ॥ देवदारुबलावासात्रिफलाव्योषपद्मकैः ॥ सविडङ्गैः सितातु-
ल्यं तच्चूर्णं पञ्चकासजित् ॥ ७ ॥ दशमूलीशटीरास्नापिप्पलीबिल्वपौष्करैः ॥ शृङ्गीतामलकीभार्ङ्गीगुडूचीनागवल्लिभिः ॥ ८ ॥ यवागूं
विधिना सिद्धां कषायं वा पिबेन्नरः ॥ कासहृद्ग्रहणीपार्श्वहिक्काश्वासप्रशान्तये ॥ ९ ॥ मधुकं मधुना युक्तं पिप्पली शर्करान्विताम् ॥
नागरं गुडसंयुक्तं हिक्काघ्नं लवणत्रयम् ॥ १० ॥ कारव्यजाजीमरिचं द्राक्षा वृक्षाम्लदाडिमम् ॥ सौवर्चलं गुडं क्षौद्रं सर्वारोचननाशनम् ॥
॥ ११ ॥ शृंगवेररसं चैव मधुना सह पाययेत् ॥ अरुचिश्वासकासघ्नं प्रतिश्यायकफान्तकम् ॥ १२ ॥ वटः शृंगी शिलालोध्रदाडिमं
मधुकं मधु ॥ पिबेत्तण्डुलतोयेन छर्दितृष्णानिवारणम् ॥ १३ ॥ गुडूचीवासकं लोध्रं पिप्पलीक्षौद्रसंयुतम् ॥ कफान्वितं जयेद्रक्तं तृष्णा-
कासज्वरापहम् ॥ १४ ॥ वासकस्य रसस्तद्वत्समधुस्ताम्रजो रसः ॥ शिरीषपुष्पसुरसभावितं मरिचं हितम् ॥ १५ ॥ सर्वार्त्तिनुन्म-
सूरोऽथ पित्तमुक्तण्डुलीयकम् ॥ निर्गुण्डी शारिवा शेलुरङ्कोलश्च विषापहः ॥ १६ ॥ महौषधामृताक्षुद्रापुष्करग्रंथिकोद्भवम् ॥ पिबे-
त्कणायुतं क्वाथं मूर्च्छायां च मदेषु च ॥ १७ ॥ हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम् ॥ चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥
॥ १८ ॥ शङ्खपुष्पीवचाकुष्ठैः सिद्धं ब्राह्मीरसैर्युतम् ॥ पुराणं हन्त्यपस्मारं सोन्मादं मेध्यमुत्तमम् ॥ १९ ॥ पञ्चगव्यं घृतं तद्वत्कुष्ठनुच्चा-
भयायुतम् ॥ पटोलत्रिफलानिम्बगुडूचीधावनीवृषैः ॥ २० ॥ सकरञ्जैर्घृतं सिद्धं कुष्ठनुद्व्रणकं स्मृतम् ॥ निम्बं पटोलं व्याघ्री
च गुडूची वासकं तथा ॥ २१ ॥ कुर्य्याद्दशपलान्भागानेकैकस्य सकुट्टितान् ॥ जलद्रोणे विपक्तव्यं यावत्पादावशेषितम्
॥ २२ ॥ घृतप्रस्थं पचेत्तेन त्रिफलागर्भसंयुतम् ॥ पञ्चतिक्तमिति ख्यातं सर्पिः कुष्ठविनाशनम् ॥ २३ ॥ अशीतिं
वातजान्रोगांश्चत्वारिंशश्च पैत्तिकान् ॥ विंशतिं श्लैष्मिकान्कासपीनसार्शोव्रणादिकान् ॥ २४ ॥ हन्त्यन्यान्योगराजोऽयं
यथार्कस्तिमिरं खलु ॥ त्रिफलायाः कषायेण भृङ्गराजरसेन च ॥ २५ ॥ व्रणप्रक्षालनं कुर्य्यादुपदंशप्रशान्तये ॥ पटोल-
दलचूर्णेन दाडिमत्वग्रजोऽथ वा ॥ २६ ॥ गुण्डयेच्च गजेनापि त्रिफलाचूर्णकेन च ॥ त्रिफलायोरजोयष्टिमार्कवोत्पलमारिचैः ॥
॥ २७ ॥ ससैन्धवैः पचेत्तैलमभ्यङ्गाच्छर्दिकापहम् ॥ सक्षीरान्मार्कवरसाद्द्विप्रस्थमधुकोत्पलैः ॥ २८ ॥ पचेत्तु तैलकुडवं तन्नस्यं पलि-

आग्नेय- तापहम् ॥ निम्बं पटोलं त्रिफला गुडूची खदिरं वृषम् ॥ २९ ॥ भूनिम्बपाठात्रिफलागुडूचीरक्तचन्दनम् ॥ योगद्वयं ज्वरं हन्ति कुष्ठवि-
॥१९४॥ स्फोटकादिकम् ॥ ३० ॥ पटोलामृतभूनिम्बवासारिष्टकपर्पटैः ॥ खदिरान्तयुतैः क्वाथो विस्फोटज्वरशान्तिकृत् ॥ ३१ ॥ दशमूली पुराण.
छिन्नरुहा पथ्या दारु पुनर्नवा ॥ ज्वरविद्रधिशोथेषु शिग्रुविश्वजिता हिताः ॥ ३२ ॥ मधूकं निम्बपत्राणि लेपः स्याद्व्रणशोधनः ॥ अ०२८१
त्रिफला खदिरो दार्वी न्यग्रोधातिबलाकुशाः ॥ ३३ ॥ निम्बमूलकपत्राणां कषायाः शोधने हिताः ॥ करञ्जारिष्टनिर्गुण्डीरसो हन्याद्व्र-
णक्रमिन् ॥ ३४ ॥ धातकीचन्दनबलासमङ्गामधुकोत्पलैः ॥ दार्वीमेदोन्वितैर्लेपः ससर्पिर्व्रणरोपणः ॥ ३५ ॥ गुग्गुलुत्रिफलाव्योपसमांशो-
घृतयोगतः ॥ नाडीदुष्टव्रणं शूलं भगन्दरमुखं हरेत् ॥ ३६ ॥ हरितकीं मूत्रसिद्धां सतैललवणान्विताम् ॥ प्रातः प्रातश्च सेवेत कफवा-
तामयापहाम् ॥ ३७ ॥ त्रिकटुत्रिफलाक्वाथं सक्षारलवणं पिबेत् ॥ कफवातात्मकेष्वेव विरेकः कफवृद्धिनुत् ॥ ३८ ॥ पिप्पलीपिप्पली-
मूलवचाचित्रकनागरैः ॥ क्वथितं वा पिबेत्पेयमामवातविनाशनम् ॥ ३९ ॥ रास्नां गुडूचीमेरण्डदेवदारुमहौषधम् ॥ पिबेत्सर्वाङ्गिके
वाते सामे सन्ध्यस्थिमज्जगे ॥ ४० ॥ दशमूलकषायं वा पिबेद्वा नागराम्भसा ॥ शुण्ठीगोक्षुरकक्वाथः प्रातः प्रातर्निषेवितः ॥ ४१ ॥
सामवातकटीशूलपाचनो रुक्प्रणाशनः ॥ समूलपत्रशाखायाः प्रसारण्याश्च तैलकम् ॥ ४२ ॥ गुडूच्याः सुरसः कल्कः चूर्णं वा क्वाथ-
मेव च ॥ प्रभूतकालमासेव्य मुच्यते वातशोणितात् ॥ ४३ ॥ पिप्पली वर्द्धमानं वा सेव्यं पथ्या गुडेन वा ॥ पटोलत्रिफलातीव्रकटुका-
मृतसाधितम् ॥ ४४ ॥ पक्कं पीत्वा जयत्याशु सदाहं वातशोणितम् ॥ गुग्गुलुं कोष्णशीते तु गुडूचीत्रिफलाम्भसा ॥ ४५ ॥ बलापुन-
र्नवैरण्डबृहतीद्वयगोक्षुरैः ॥ सहिङ्गुलवणैः पीतं सद्यो वातरुजापहम् ॥ ४६ ॥ कार्षिकं पिप्पलीमूलं पञ्चैव लवणानि च ॥ पिप्पली
चित्रकं शुण्ठी त्रिफला त्रिवृता वचा ॥ ४७ ॥ द्वौ क्षारौ शाद्वला दन्ती स्वर्णक्षीरी विषाणिका ॥ कोलप्रमाणां गुटिकां पिबेत्सौवीरका-
युताम् ॥ ४८ ॥ शोथावपाके त्रिवृता प्रवृद्धे चोदरादिके ॥ क्षीरं शोथहरं दारु वर्षाभूर्नागरैः शुभम् ॥ ४९ ॥ सेकस्तथार्कवर्षाभूनिम्ब-
क्वाथेन शोथजित् ॥ व्योषगर्भे पलाशस्य त्रिगुणे भस्मवारिणि ॥ ५० ॥ साधितं पिबतः सर्पिः पतत्यर्शो न संशयः ॥ विष्वक्सेनाब्ज- ॥१९५॥
निर्गुण्डीसाधितं चापि तावणम् ॥५१॥ विडंगानलसिन्धूत्थरास्नायक्षारदारुभिः ॥ तैलं चतुर्गुणं सिद्धं कटुद्रव्यं जलेऽथ वा ॥५२॥ गण्ड-

मालापहं तैलमभ्यंगाद्गलगण्डनुत् ॥ शटीकुनागवलयक्वाथः क्षीररस युतम् ॥५३॥ पयस्यापिप्पलीवासाकल्कं सिद्धं क्षये हितम् ॥ वचा-
विडभयाशुण्ठीहिङ्गुकुष्ठाग्निदीप्यकान् ॥ ५४ ॥ द्वित्रिषट्चतुरेकांशसप्तपञ्चाशिकाः क्रमात् ॥ चूर्णं पीतं हन्ति गुल्ममुदरं शूलकासनुत् ॥
॥ ५५ ॥ पाठानिकुम्भात्रिकटुत्रिफलाग्निषु साधितम् ॥ मूत्रेण चूर्णगुटिका गुल्मप्लीहादिमर्दनी ॥ ५६ ॥ वासानिम्बपटोलानि त्रिफला
वातपित्तनुत् ॥ लिह्यात्क्षौद्रेण विडङ्गचूर्णं कृमिविनाशनम् ॥ ५७ ॥ विडङ्गसैन्धवक्षारमूत्रेणापि हरीतकी ॥ वल्लकीबदरीजम्बूप्रियाला-
म्राजुनत्वचः ॥ ५८ ॥ पीताः क्षीरेण मध्वक्ताः पृथक्छोणितवारणाः ॥ बिल्वाम्रधातकी पाठाशुण्ठीमोचरसाः समाः ॥ ५९ ॥ पीता रुन्ध-
न्त्यतीसारं गुडतक्रेण दुर्जयम् ॥ चाङ्गेरीकोलदध्यम्बुनागरक्षारसंयुतम् ॥ ६० ॥ घृतयुक्क्वाथितं पेयं गुदभ्रंशरुजापहम् ॥ विडङ्गाति-
तिविषामुस्तदारुपाठाकलिङ्गकम् ॥ ६१ ॥ मरीचेन समायुक्तं शोथातीसारनाशनम् ॥ शर्करासिन्धुशुण्ठीभिः कृष्णामधुगुडेन वा ॥
॥ ६२ ॥ द्वे द्वे खादेद्धरीतक्यौ जीवेद्वर्षशतं सुखी ॥ त्रिफला पिप्पलीयुक्ता समध्वाज्या तथैव सा ॥ ६३ ॥ चूर्णमामलकं तेन सुरसेन तु
भावितम् ॥ मध्वाज्यशर्करायुक्तं लीढ्वा स्त्रीशः पयः पिबेत् ॥ ६४ ॥ माषपिप्पलिशालीनां यवगोधूमयोस्तथा ॥ चूर्णभागैः समांशैश्च
पचेत्पिप्पलिकां शुभाम् ॥ ६५ ॥ तां भक्षयित्वा च पिबेच्छर्करामधुरं पयः ॥ नवश्चटकवद्गच्छेद्दश वारान्स्त्रियं ध्रुवम् ॥ ६६ ॥ सम-
ङ्गाधातकीपुष्पलोध्रनीलोत्पलानि च ॥ एतत्क्षीरेण दातव्यं स्त्रीणां प्रदरनाशनम् ॥ ६७ ॥ बीजं कौरण्टकं चापि मधुकं श्वेतचन्दनम् ॥
पद्मोत्पलस्य मूलानि मधुकं शर्करं तिलान् ॥ ६८ ॥ द्रवमाणेषु गर्भेषु गर्भस्थापनमुत्तमम् ॥ देवदारु नभः कुष्ठं नलदं विश्वभेषजम् ॥
॥ ६९ ॥ लेपः काञ्जिकसम्पिष्टस्तैलयुक्तः शिरोर्त्तिनुत् ॥ ॥ वस्त्रपूतं क्षिपेत्कोष्णं सिन्धूत्थं कर्णशूलनुत् ॥ ७० ॥ लशुनार्द्रकशिग्रूणां
कदल्या वा रसः पृथक् ॥ बलाशतावरीरास्नामृताः सैरीयकैः पिबेत् ॥ ७१ ॥ त्रिफलासहितं सर्पिस्तिमिरघ्नमनुत्तमम् ॥ त्रिफलाव्यो-
षसिन्धूत्थैर्घृतं सिद्धं पिबेन्नरः ॥ ७२ ॥ चाक्षुष्यं भेदनं हृद्यं दीपनं कफरोगनुत् ॥ नीलोत्पलस्य किञ्जल्कं गोशकृद्रससंयुतम् ॥ ७३ ॥
गुटिकाञ्जनमेतत्स्याद्दिनरात्र्यन्धयोर्हितम् ॥ यष्टीमधुवचाकृष्णाबीजानि कुटजस्य च ॥ ७४ ॥ कल्केनालोड्य निम्बरस्य कषायो वम-
नाय सः ॥ स्निग्धस्विन्नयवं तोयं प्रदातव्यं विरेचनम् ॥ ७५ ॥ अन्यथा योजितं कुर्य्यान्मन्दाग्निं गौरवारुची ॥ पथ्यासैन्धवकृष्णानां

चूर्णमुष्णाम्बुना पिबेत् ॥ ७६ ॥ विरेकः सर्वरोगघ्नः श्रेष्ठो नाराचसंज्ञकः ॥ सिद्धयोगा मुनिभ्यो ये आत्रेयेण प्रदर्शिताः ॥ सर्वरोगहराः सर्वयोगाग्र्याः सुश्रुतेन हि ॥७७॥ इत्यादिमहापुराणे आग्नेये मृतसंजीवनकरसिद्धयोगा नाम पंचाशीत्यधिकद्विशततमोऽध्यायः ॥२८५॥

अथ मृत्युञ्जयकल्पाः ॥ धन्वन्तरिरुवाच ॥ कल्पान्मृत्युञ्जयान्वक्ष्ये ह्यायुर्दान्रोगमर्दनान् ॥ त्रिशती रोगहा सेव्या मध्वाज्यात्रिफलामृता ॥ १॥ पलं पलार्द्धं कर्षं वा त्रिफलां सकलीं (लां) तथा ॥ बिल्वतैलस्य नस्यं च मासं पञ्चशती कविः ॥ २ ॥ रोगापमृत्युबलिजित्तिलं भल्लातकं तथा ॥ पञ्चांगं वाकुचीचूर्णं षण्मासं खदिरोदकैः ॥३॥ क्वाथैः कुष्ठं जयंत्सेव्यं चूर्णं नीलकुरुण्टजम् ॥ क्षीरेण मधुना वापि शतायुः खण्डदुग्धभुक् ॥४॥ मध्वाज्यशुण्ठीं संसेव्य पलं प्रातः स मृत्युजित् ॥ वलीपलितजिज्जीवेन्माण्डकीचूर्णदुग्धपः ॥५॥ वचटा मधुना कर्षं पयःपा मृत्युजिन्नरः ॥ मध्वाज्यैः पयसा वापि निर्गुण्डी रोगमृत्युजित् ॥६॥ पलाशतैलं कर्षैकं षण्मासं मधुना पिबेत् ॥ दुग्धभोजी पञ्चशती सहस्रायुर्भवेन्नरः ॥ ७ ॥ ज्योतिष्मतीपत्ररसं पयसा त्रिफलां पिबेत् ॥ मधुनाज्यं ततस्तद्वच्छतावर्य्या रजः पलम् ॥ ८ ॥ क्षौद्राज्यैः पयसा वापि निर्गुण्डी रोगमृत्युजित् ॥ पञ्चाङ्गं निम्बचूर्णस्य खदिरक्वाथभावितम् ॥ ९ ॥ कर्षं भृङ्गरसेनापि रोगजिच्चामरो भवेत् ॥ रुदन्तिकाज्यमधुभुग्दुग्धभोजी च मृत्युजित् ॥ १० ॥ कर्षचूर्णं हरीतक्या भावितं भृङ्गराड्रसैः ॥ घृतेन मधुनाऽसेव्य त्रिशतायुश्च रोगजित् ॥ ११ ॥ वाराहिका भृङ्गरसं लोहचूर्णं शतावरी ॥ साज्यं कर्षं पञ्चशती कान्तचूर्णं शतावरी ॥ १२ ॥ भावितं भृङ्गराजेन मध्वाज्यं त्रिशती भवेत् ॥ आम्रामृता त्रिवृत्तुल्यं गन्धकं च कुमारिका ॥ १३ ॥ रसोन्निमृज्य द्वे गुञ्जे साज्यं पञ्चशताब्दवान् ॥ अश्वगन्धा पलं तैलं साज्यं खण्डं शताब्दवान् ॥ १४ ॥ पलं पुनर्नवाचूर्णं मध्वाज्यपयसा पिबन् ॥ अशोकचूर्णस्य पलं मध्वाज्यं पयसार्त्तिनुत् ॥ १५ ॥ तिलस्य तैलं समधु नस्यात्कृष्णकचः शती ॥ कर्षमक्षं समध्वाज्यं शतायुः पयसा पिबन् ॥ १६ ॥ अभयां सगुडां जग्ध्वा घृतेन मधुरादिभिः ॥ दुग्धान्नभुक्कृष्णकेशोऽरोगी पञ्चशताब्दवान् ॥ १७ ॥ पलं कूष्माण्डिकाचूर्णं मध्वाज्यपयसा पिबन् ॥ मासं दुग्धान्नभोजी च सहस्रायुर्विरोगवान् ॥ १८ ॥ शालूकचूर्णं भृङ्गाज्यं समध्वाज्यं शताब्दकृत् ॥ कटुतुम्बीतैलनस्यं कर्षं शतद्वयाब्दवान् ॥ १९ ॥ त्रिफला पिप्पली शुण्ठी सेविता त्रिशताब्दकृत् ॥ शतावर्य्याः पूर्वयोगः सहस्रायुर्वलाग्निकृत् ॥ २० ॥ चित्रकेण

तया पूर्वस्तया शुण्ठीसिद्धकृतः ॥ लोहेन भृंगराजेन वलयानिम्बपञ्चकैः ॥ २१ ॥ खदिरेण च निर्गुण्ड्या कण्टकार्य्याथ वासकात् ॥
वर्षाभुवा तद्रसैर्वा भावितो वटिकाकृतः ॥ २२ ॥ चूर्णं घृतैर्वा मधुना गुडाद्यैर्वारिणा तथा ॥ ओं हूं स इति मन्त्रेण मन्त्रितो योग-
राजकः ॥ २३ ॥ मृतसञ्जीवनीकल्पो रोगमृत्युञ्जयो भवेत् ॥ सुरासुरैश्च मुनिभिः सेविताः कल्पसागराः ॥ गजायुर्वेदं प्रोवाच पाल-
काप्योऽङ्गराजकम् ॥ २४ ॥ इत्यादिमहापुराणे आग्नेये मृत्युञ्जयकल्पो नाम षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥ अथ गज-
चिकित्सा ॥ पालकाप्य उवाच ॥ गजलक्ष्म चिकित्सां च लोमपाद वदामि ते ॥ दीर्घहस्ता महोच्छ्वासाः प्रशस्तास्ते सहिष्णवः ॥ १ ॥
विंशत्यष्टादश नखाः शीतकालमदाश्च ये ॥ दक्षिणश्चोन्नतो दन्तो बृंहितं जलदोपमम् ॥ २ ॥ कर्णौ च विपुलौ येषां सूक्ष्माबिन्द्वन्वि-
तास्त्वचि ॥ ते धार्य्या न तथा धार्या वामना ये त्वलक्षणाः ॥ ३ ॥ हस्तिन्यः पार्श्वगर्भिण्यो ये च मूढा मतङ्गजाः ॥ वर्णं सत्त्वं बलं
रूपं कान्तिः संहननं जवः ॥४॥ सतस्थितो गजश्चेह संग्रामेऽरीञ्जयेत्स च ॥ कुञ्जराः परमा शोभा शिबिरस्य बलस्य च ॥५॥ आहतः
कुञ्जरैश्चैव विजयः पृथिवीक्षिताम् ॥ पाकलेषु च सर्वेषु कर्त्तव्यमनुवासनम् ॥ ६ ॥ घृततैलाभ्यङ्गयुक्तस्नानं वातविवर्जितम् ॥ स्कन्धेषु च
क्रिया कार्य्या तथा पाककरार्पणैः ॥ ७ ॥ गोमूत्रं पाण्डुरोगेषु रजनीभ्यां घृतं द्विज ॥ आनाहे तैलसिक्तस्य निषेकस्तस्य शस्यते ॥
॥ ८ ॥ लवणैः पञ्चभिर्मिश्रा प्रतिपानाय वारुणी ॥ विडङ्गत्रिफलाव्योषसैन्धवैः कवलान्कृतान् ॥ ९ ॥ मूर्च्छासु भोजयेन्नागं क्षौद्रं तोयं
च पाययेत् ॥ अभ्यङ्गः शिरसः शूले नस्यं चैव प्रशस्यते ॥ १०॥ नागानां स्नेहपुटकैः पादरोगानुपक्रमेत् ॥ पश्चात्कल्ककषायेण शोधनं
च विधीयते ॥ ११ ॥ शिखितित्तिरिलावानां पिप्पलीमरिचान्वितैः ॥ रसैः सम्भोजयेन्नागं वेपथुर्यस्य जायते ॥ १२ ॥ वालबिल्वं
तथा लोध्रं धातकी सितया सह ॥ अतीसारविनाशाय पिण्डीं भुञ्जीत कुञ्जरः ॥ १३ ॥ नस्यं करग्रहे देयं घृतं लवणसंयुतम् ॥ मागधी-
नागराजाजीयवागूर्मुस्तसाधिता ॥ १४ ॥ उत्कर्णके तु दातव्या वाराहं च तथा रसम् ॥ दशमूलकुलत्थाम्लकाकमाचीविपाचितम् ॥
॥ १५ ॥ तैलं शृंखलसंयुक्तं गलग्रहगदापहम् ॥ अष्टभिर्लवणैः पिष्टैः प्रसन्नाः पाययेद् घृतम् ॥ १६ ॥ मूत्रभङ्गेऽथ वा बीजं काथितं
त्रापुषस्य च ॥ त्वग्दोषेषु पिबेन्निम्बं वृषं वा क्वथितं द्विपः ॥ १७ ॥ गवां मूत्रं विडंगानि कृमिकोष्ठेषु शस्यते ॥ शृंगवेरकणाद्राक्षाश-

करीराभिः शृतं पयः ॥ १८ ॥ क्षतक्षयकरं पानं तथा मांसरसः शुभः ॥ मुद्गोदनं व्योषयुतमरुचौ तु प्रशस्यते ॥ १९ ॥ त्रिवृद्व्योपाग्नि-
दन्त्यर्कश्यामाक्षीरेभपिप्पली ॥ एतैर्गुल्महरः स्नेहः कृतश्चैव तथापरः ॥ २० ॥ भेदनद्रावणाभ्यंगस्नेहपानानुवासनैः ॥ सर्वानेव समु-
त्पन्नान्विद्रधीन्समुपाहरेत् ॥ २१ ॥ यष्टिकं मुद्गयूषेण शारदेन तथा पिबेत् ॥ बालबिल्वैस्तथा लेपः कटरोगेषु शस्यते ॥ २२ ॥
विडंगेन्द्रयवौ हिङ्गु सरलं रजनीद्वयम् ॥ पूर्वाह्णे दापयेत्पिण्डान्सर्वशूलोपशान्तये ॥ २३ ॥ प्रधानभोजने तेषां षष्टिकव्रीहिशालयः ॥
मध्यमो यवगोधूमौ शेषा दन्तिनि चाधमाः ॥ २४ ॥ यवश्चैव तथैवेक्षुर्नागानां बलवर्धनः ॥ नागानां यवसं शुष्कं तथा धातुप्रकोपनम् ॥
॥ २५ ॥ मदक्षीणस्य नागस्य पयःपानं प्रशस्यते ॥ दीपनीयैस्तथा द्रव्यैः शृतो मांसरसः शुभः ॥ २६ ॥ वायसः कुक्कुटश्चोभौ काको-
लूककुलं हरिः ॥ भवेत्क्षौद्रेण संयुक्तः पिण्डो युद्धे महापदि ॥ २७ ॥ कटुमत्स्यविडंगानि क्षारः कोपातकीपयः ॥ हरिद्रा चेति धूपोऽयं
कुञ्जरस्य जयावहः ॥ २८ ॥ पिप्पलीतण्डुलास्तैलं माध्वीकं माक्षिकं तथा ॥ नेत्रयोः परिषेकोऽयं दीपनीयः प्रशस्यते ॥ २९ ॥
पुरीषं चटकायाश्च तथा पारावतस्य च ॥ क्षीरवृक्षकरीषाश्च प्रसन्नाचेष्टमञ्जनम् ॥ ३० ॥ अनेनाञ्जितनेत्रस्तु करोति कदनं रणे ॥
उत्पलानि च नीलानि मुस्तं तगरमेव च ॥ ३१ ॥ तण्डुलोदकपिष्टानि नेत्रनिर्वापणं परम् ॥ नखवृद्धौ नखच्छेदस्तैलसेकश्च मास्यपि
॥ ३२ ॥ शय्यास्थानं भवेच्चास्य करीषैः पांसुभिस्तथा ॥ शरन्निदाघयोः सेकः सर्पिषा च तथेष्यते ॥ ३३ ॥ इत्यादिमहापुराणे
आग्नेये गजचिकित्सा नाम सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥ अथाश्ववाहनसारः ॥ धन्वन्तरिरुवाच ॥
अश्ववाहनसारं च वक्ष्ये चाश्वचिकित्सनम् ॥ वाजिनां संग्रहः कार्यो धर्मकर्मार्थसिद्धये ॥ १ ॥ अश्विनी श्रवणं
हस्तमुत्तरात्रियं तथा ॥ नक्षत्राणि प्रशस्तानि हयानामादिवाहने ॥ २ ॥ हेमन्तः शिशिरश्चैव वसन्तश्चाश्ववाहने ॥ ग्रीष्मे ॥१९६॥
शरदि वर्षासु निषिद्धं वाहनं हये ॥ ३ ॥ तीव्रैर्न च परैर्दण्डैरदेशे न च ताडयेत् ॥ कीलास्थिसंकुले चैव विषमे कण्टकान्विते ॥ ४ ॥
वालुकापङ्कसंछन्ने गर्तागर्तप्रदूषिते ॥ अचित्तज्ञो विनोपायैर्वाहनं कुरुते तु यः ॥ ५ ॥ स वाह्यते हयेनैव पृष्ठस्थः कटिकां विना ॥ छन्दं
विज्ञापयेत्कोऽपि सुकृती धीमतां वरः ॥ ६ ॥ अभ्यासादभियोगाच्च विना शास्त्रं स्ववाहकः ॥ स्नातस्य प्राङ्मुखस्याथ देवान्वपुषि योज-

येत् ॥ ७ ॥ प्रणवादिनमोऽन्तेन स्वबीजेन यथाक्रमम् ॥ ब्रह्मा चित्ते बले विष्णुर्वैनतेयः पराक्रमे ॥८॥ पार्श्वे रुद्रा गुरुर्बुद्धो विश्वेदेवाश्च मर्मसु ॥ दृगावर्त्ते दृशीन्द्वर्कौ कर्णयोरश्विनौ तथा ॥९ ॥ जठरेऽग्निः स्वधा स्वेदे वाग्जिह्वाया जवेऽनिलः ॥ पृष्ठतो नाकपृष्ठस्तु खुराग्रे सर्वपर्वताः ॥१०॥ ताराश्च रोमकूपेषु हृदि चान्द्रमसी कला ॥ तेजस्यग्नी रतिः श्रोण्यां ललाटे च जगत्पतिः ॥ ११॥ ग्रहाश्च हेषिते चैव तथैवोरसि वासुकिः ॥ उपोषितोऽर्चयेत्सादी हयं दक्षश्रुतो जपेत् ॥१२॥ हय गन्धर्वराजस्त्वं शृणुष्व वचनं मम ॥ गन्धर्वकुलजातस्त्वं मा भूस्त्वं कुलदूषकः ॥१३॥ द्विजानां सत्यवाक्येन सोमस्य गरुडस्य च ॥ रुद्रस्य वरुणस्यैव पवनस्य बलेन च ॥१४॥ हुताशनस्य दीप्त्या च स्मर जातिं तुरङ्गम ॥ स्मर राजेन्द्रपुत्रस्त्वं सत्यवाक्यमनुस्मर ॥१५॥ स्मर त्वं वारुणीं कन्यां स्मरत्वं कौस्तुभं मणिम् ॥ क्षीरोदसागरे चैव मथ्यमाने सुरासुरैः ॥१६॥ तत्र देवकुले जातः स्ववाक्यं परिपालय ॥ कुले जातस्त्वमश्वानां मित्रं मे भव शाश्वतम्॥१७॥ शृणु मित्र त्वमेतच्च सिद्धो मे भव वाहन ॥ विजयं रक्ष मां चैव समरे सिद्धिमावह ॥ १८ ॥ तव पृष्ठं समारुह्य हता दैत्याः सुरैः पुरा ॥ अधुना त्वां समारुह्य जेष्यामि रिपुवाहिनीम् ॥ १९ ॥ कर्णजापं ततः कृत्वा विमुह्य च तथाप्यरान् ॥ पर्य्यानयेद्धयं सादी वाहयेद्युध्यतो जयः ॥ २० ॥ सञ्जाताः स्वशरीरेण दोषाः प्रायेण वाजिनाम् ॥ हन्यन्तेऽतिप्रयत्नेन गुणाः सादिवरैः पुनः ॥ २१ ॥ सहजा इव दृश्यन्ते गुणाः सादिवरोद्भवाः ॥ नाशयन्ति गुणानन्ये सादिनः सहजानपि ॥२२॥ गुणानेको विजानाति वेत्ति दोषांस्तथाऽपरः ॥ धन्यो धीमान्हयं वेत्ति नोभयं वेत्ति मन्दधीः ॥ २३ ॥ अकर्मज्ञोऽनुपायज्ञो वेगासक्तोऽतिकोपनः ॥ घनदण्डरतिच्छिद्रे य समोऽपि न शस्यते ॥ २४ ॥ उपायज्ञोऽथ चित्तज्ञो विशुद्धो दोषनाशनः ॥ गुणार्जनपरो नित्यं सर्वकर्मविशारद ॥ २५ ॥ प्रग्रहेण गृहीत्वाऽथ प्रविष्टो वाह भूतलम् ॥ सव्यापसव्यभेदेन वाहनीयः स्वसादिना ॥ २६ ॥ आरुह्य सहसा नैव ताडनीयो हयोत्तमः ॥ ताडनाद्भयमाप्नोति भयान्मोहश्च जायते ॥ २७ ॥ प्रातः सादी प्लुतेनैव वल्गामुद्धृत्य चालयेत् ॥ मन्दं मन्दं विना नालं धृतवल्गो दिनान्तरे ॥ २८ ॥ प्रोक्तमाश्वासनं सामभेदोऽश्वेन नियोज्यते ॥ कशादिताडनं दण्डो दानं कालसहिष्णुता ॥ २९ ॥ पूर्वपूर्वविशुद्धौ तु विदध्यादुत्तरोत्तरम् ॥ जिह्वातले विनायोगं विदध्याद्वाहने हये ॥ ३० ॥ गुणोत्तरशतां वल्गां सृक्कण्या सह गाहयेत् ॥ विस्माय्यं वाहनं कुर्य्याच्छिथिलानां शनैः शनैः ॥ ३१ ॥

आक्षेप-

१९७॥ हयजिह्वाङ्गमाहीने जिह्वाग्रन्थिं विमोचयेत् ॥ गाढतां मोचयेत्तावद्यावत्स्तोभं न मुञ्चति ॥ ३२ ॥ कुर्य्याच्छतमुरस्त्राणमाविलालं च

मुञ्चति ॥ ऊर्ध्वाननः स्वभावायत्तस्योरस्त्राणमश्लथम् ॥ ३३ ॥ विधाय वाहयेदृष्ट्या लीलया सादिसत्तमः ॥ तस्य सव्येन पूर्वेण

संयुक्तं सव्यवल्गया ॥ ३४ ॥ यः कुर्य्यात्पश्चिमं पादं गृहीतस्तेन दक्षिणः ॥ क्रमेणानेन यो सेवां कुरुते वामवल्गया ॥ ३५ ॥ पादो

तेनापि पादः स्याद्गृहीतो वाम एव हि ॥ अग्रे चेच्चरणे त्यक्ते जायते सहढासनम् ॥ ३६ ॥ यो हतो दुष्करे चैव मोटके नाटकायनम् ॥

सव्यहीनं खलीकारो हनने गुणने तथा ॥ ३७ ॥ स्वभावं हि तुरङ्गस्य मुखव्यावर्त्तनं पुनः ॥ न चैवेत्थं तुरङ्गाणां पादग्रहणहेतवः

॥ ३८ ॥ विश्वस्तं हयमालोक्य गाढमापीड्य चासनम् ॥ रोकयित्वा मुखे पादं ग्राह्यतो लोकनं हितम् ॥ ३९ ॥ गाढमापीड्य रागाभ्यां

वल्गामाकृष्य गृह्यते ॥ तद्बन्धनाद्युग्मपादं तद्वद्दल्गनमुच्यते ॥ ४० ॥ संयोज्य वल्गया पादान्वल्गामामोक्ष्य वाञ्छितम् ॥ वाह्यपा-

र्ष्णिप्रयोगात्तु यत्र तन्मोटनं मतम् ॥ ४१ ॥ प्रलयाविप्लुवे ज्ञात्वा क्रमेणानेन बुद्धिमान् ॥ मोटनेन चतुर्थेन विधिरेष विधीयते ॥ ४२ ॥

नाधतेऽपश्च यः पादं योऽश्वो लघुनि मण्डले ॥ मोटनोद्धकनाभ्यां तु ग्राहयेत्पादमीशितम् ॥ ४३ ॥ वंटयित्वासने गाढं मन्दमादाय यो

व्रजेत् ॥ ग्राह्यते संग्रहायत्र तत्संग्रहणमुच्यते ॥ ४४ ॥ हत्वा पार्श्वे प्रहारेण स्थानस्थो व्यग्रमानसम् ॥ वल्गामाकृष्य पादेन ग्राह्य कण्ट-

कपायनम् ॥ ४५ ॥ वलक्रेणा (ना) योऽग्रिणानेन पार्ष्णिपादांस्तुरङ्गमः ॥ गृह्यते यत्खलीकृत्य खलीकारः स चेष्यते ॥ ४६ ॥

गतित्रये त्रियः पादमादत्ते नैव वाञ्छितः ॥ हत्वा तु यत्र दण्डेन ग्राह्यते गहनं हि तत् ॥ ४७ ॥ खलीकृत्य चतुष्केण तुरंगो वल्गया-

न्यया ॥ उच्छास्य ग्राह्यतेऽन्यत्र तत्स्यादुच्छासनं पुनः ॥ ४८ ॥ स्वभावं बहिरस्यन्तं तस्यां दिशि पदायनम् ॥ नियोज्य ग्राह्ययेत्तत्तु

मुखव्यावर्त्तनं मतम् ॥ ४९ ॥ ग्राहयित्वा ततः पादं त्रिविधासु यथाक्रमम् ॥ साधयेत्पंचधारासु क्रमशो मण्डलादिषु ॥ ५० ॥ आजानू-

र्द्धानं वाहं शिथिलं वाहयेत्सुधीः ॥ अङ्गेषु लाघवं यावत्तावत्तं वाहयेद्धयम् ॥ ५१ ॥ मृदुः स्कन्धे लघुर्वक्रे शिथिलः सर्वसन्धिषु ॥ ॥११९७॥

यदा स सादिनो वश्यः संगृहीयात्तदा हयम् ॥ ५२ ॥ न त्यजेत्पश्चिमं पादं यदा साधुर्भवेत्तदा ॥ तदाकृष्टिर्विघातव्या पाणिभ्यामिह

वल्गया ॥ ५३ ॥ तत्र त्रिको यथा तिष्ठेदुद्ग्रीवोऽश्वः समाननः ॥ धरायां पश्चिमो पादावन्तारिक्षे यदाग्रवे ॥ ५४ ॥ तदा सञ्चारणं

प्रयग.

अ० १९८

कुर्य्याद्गाढवाहं च मुष्टिना ॥ सहसैवं समाकृष्टो यस्तुरङ्गो न तिष्ठति ॥ ५५ ॥ शरीरं विक्षिपन्तं च साधयेन्मण्डलभ्रमैः ॥ क्षिप्तेत्स्कन्धं च यो वाहः स च स्थाप्यो हि वल्गया ॥ ५६ ॥ गोमयं लवणं मूत्रं कथितं मृत्समन्वितम् ॥ अङ्गलेपो मक्षिकादिदंशश्रमाविनाशनः ॥ ५७ ॥ मध्ये भद्रादिजातीनां मण्डो देयो हि सादिना ॥ दंशनं सूक्ष्मकीटस्य निरुत्साहः क्षुधा हयः ॥ ५८ ॥ यथा वश्यस्तथा शिक्षा विनश्यन्त्यतिवाहिताः ॥ अवाहिता न सिध्यन्ति तुरङ्गचक्रांश्च वाहयेत् ॥ ५९ ॥ सम्पीडय जानुयुग्मेन स्थिरमुष्टिस्तुरङ्गमम् ॥ गोमूत्रा कुटिला वेणी पद्ममण्डलमालिका ॥ ६० ॥ पश्चोलूखलिकाः कार्य्या गर्जितास्ते हि कीर्तिताः ॥ संक्षितं चैव निक्षिप्तं कुञ्चितं च यथाचितम् ॥ ६१ ॥ वल्गितावल्गितौ चैव घोडा चेत्यनुशासनम् ॥ वीथीधनुःशतं यावदशीतिर्नवतिस्तथा ॥ ६२ ॥ भद्रः ससाध्यो वाजी स्यान्मन्दो दण्डैकमानतः ॥ मृगजङ्घो मृगो वाजी सङ्कीर्णस्तत्समन्वयात् ॥ ६३ ॥ शर्करामधुलाजादः सुगन्धोऽश्वः शुचिर्द्विजः ॥ तेजस्वी क्षत्रियश्चाश्वो विनीतो बुद्धिमांश्च यः ॥ ६४ ॥ शूद्रोऽशुचिश्चलो मन्दो विरूपो विमतिः खलः ॥ वल्गया धार्य्यमाणोऽश्वो लालकं यश्च दर्शयेत् ॥ ६५ ॥ धारासु योजनीयोऽसौ प्रग्रहमोक्षणैः ॥ अश्वादिलक्षणं वक्ष्ये शालिहोत्रो यथाऽवदत् ॥ ६६ ॥ इत्यादिमहापुराणे आग्नेये अश्ववाहनसारवर्णनं नामाऽष्टाशीत्यधिकद्विशततमोऽध्यायः ॥२८८॥ अथाश्वलक्षणाचिकित्सकम् ॥ शालिहोत्र उवाच ॥ अश्वानां लक्षणं वक्ष्ये चिकित्सां चैव सुश्रुत ॥ हीनदन्तो विदन्तश्च करालः कृष्णतालुकः ॥ १ ॥ कृष्णजिह्वश्च यमजोऽजातमुष्कश्च यस्तथा ॥ द्विशफश्च तथा शृङ्गी त्रिवर्णो व्याघ्रवर्णकः ॥ २ ॥ खरवर्णो भस्मवर्णो जातवर्णश्च काकुदी ॥ श्वित्री च काकसादी च खरसारस्तथैव च ॥ ३ ॥ वानराक्षः कृष्णसटः कृष्णगुह्यस्तथैव च ॥ कृष्णप्रोथश्च शूकश्च यश्च तित्तिरिसन्निभः ॥ ४ ॥ विषमः श्वेतपादश्च ध्रुवावर्तविवर्जितः ॥ अशुभावर्तसंयुक्तो वर्जनीयस्तुरङ्गमः ॥ ५ ॥ रन्ध्रोपरन्ध्रयोर्द्वौ द्वौ द्वौ मस्तकवक्षसोः ॥ प्रायेण च ललाटे च कण्ठावर्त्ताः शुभा दश ॥ ६ ॥ सृक्कण्यां च ललाटे च कर्णमूले निगालके ॥ बाहुमूले गले श्रेष्ठा आवर्त्तास्त्वशुभाः परे ॥ ७ ॥ शुकेन्द्रगोपचन्द्राभा ये च वायससन्निभाः ॥ सुवर्णवर्णाः स्निग्धाश्च प्रशस्तास्तु सदैव हि ॥ ८ ॥ दीर्घग्रीवाक्षिकूटाश्च ह्रस्वकर्णाश्च शोभनाः ॥ राज्ञां तुरङ्गमा यत्र विजयं वर्जयेत्ततः ॥ ९ ॥ पालितस्तु हयो दन्ती शुभदो दुःखदोऽन्यथा ॥

श्रियः पुत्रास्तु गन्धर्वा वाजिनो रत्नमुत्तमम् ॥ १० ॥ अश्वमेधे तु तुरगः पवित्रत्वात्तु हूयते ॥ वृषो निम्बबृहत्यौ च गुडूची च समाक्षिका ॥ ११ ॥ सिंहा गन्धकरी पिण्डी स्वेदश्च शिरसस्तथा ॥ हिङ्गुपुष्करमूलं च नागरं साम्लवेतसम् ॥ १२ ॥ पिप्पलीसैन्धवयुतं शूलघ्नं चोष्णवारिणा ॥ नागरातिविषा मुस्ता सानन्ता बिल्वमालिका ॥ १३ ॥ क्वाथमेषां पिबेद्वाजी सर्वातीसारनाशनम् ॥ प्रियङ्गुसारिवाभ्यां च युक्तमाजं शृतं पयः ॥ १४ ॥ पयःशीतशर्करं पीत्वा श्रमाद्वाजी विमुच्यते ॥ द्रोणिकायां तु दातव्या तैलबस्तिस्तुरङ्गमे ॥ १५ ॥ कोष्ठजा च शिरा वेध्या तेन तस्य सुखं भवेत् ॥ दाडिमं त्रिफला व्योषं गुडं च सम भाविकम् ॥ १६ ॥ पिण्डमेतत्प्रदातव्यमश्वानां कासनाशनम् ॥ प्रियङ्गुलोध्रमधुभिः पिबेद्वृषरसं हयः ॥ १७ ॥ क्षीरं वा पञ्चकोलाद्यं कासनाद्धि प्रमुच्यते ॥ प्रस्कन्धेषु च सर्वेषु श्रेय आदौ विशोधनम् ॥ १८ ॥ अभ्यङ्गोद्वर्त्तनस्नेहनस्यवर्तिक्रमः स्मृतः ॥ ज्वरितानां तुरङ्गाणां पयसैव क्रियाक्रमः ॥ १९ ॥ लोध्रकरंजयोर्मूलं मातुलुंगाग्निनागराः ॥ कुष्ठहिङ्गुवचाराह्वालेपोऽयं शोथनाशनः ॥२०॥ मञ्जिष्ठामधुकं द्राक्षाबृहत्यौ रक्तचन्दनम् ॥ त्रपुषीबीजमूलानि शृंगाटककशेरुकम् ॥२१॥ अजापयः शृतमिदं सुशीतं शर्करान्वितम् ॥ पीत्वा निरशनो वाजी रक्तमेहात्प्रमुच्यते ॥२२॥ मन्याहनुनिगालस्थाशिराशोथो गलग्रहः ॥ अभ्यङ्गः कटुतैलेन तत्र तेष्वेव शस्यते ॥ २३ ॥ गलग्रहगदी शोथः प्रायशो गलदेशके ॥ प्रत्यक्पुष्पी तथा वाह्लिः सैन्धवं सौरसो रसः ॥ २४ ॥ कृष्णाहिङ्गुयुतैरेभिः कृत्वा नस्यं न सीदति ॥ निशे ज्योतिष्मती पाठा कृष्णा कुष्ठं वचा मधु ॥२५॥ जिह्वास्तंभे च लेपोयं गुडमूत्रयुतो हितः ॥ तिलर्यष्ट्या रजन्या च निम्बपत्रैश्च योजिता ॥२६॥ क्षौद्रेण शोधनी पिण्डी सर्पिषा व्रणरोपिणी ॥ अभिघातेन खञ्जन्ति ये ह्यश्वास्तीव्रवेदनाः ॥२७॥ परिषेकक्रिया तेषां तैलेनाशु रुजापहा ॥ दोषकोपाभिघाताभ्यां पक्वभिन्ने व्रणे क्रमः ॥२८॥ शान्तिर्मत्स्यण्डिवृद्धाभ्यां पक्वभिन्नव्रणे क्रमः ॥ अश्वत्थोदुम्बरप्लक्षमधूकवटकल्कनैः ॥२९॥ प्रभूतसलिलः क्वाथः सुखोष्णो व्रणशोधनः ॥ शताह्वानागरं रास्ना मञ्जिष्ठाकुष्ठसैन्धवैः ॥ ३० ॥ देवदारुवचायुग्मरजनीरक्तचन्दनैः ॥ तैलं सिद्धं कषायेण गुडूच्याः पयसा सह ॥३१॥ प्रक्षणे बस्तिनस्ये च योज्यं सर्वत्र लिंगिते ॥ रक्तस्रावो जलौकाभिर्नेत्रान्ते नेत्ररोगिणः ॥३२॥ खदिरोदुम्बराश्वत्थकषायेण च साधनम् ॥ धात्रीदुरालभातिक्ताप्रियङ्गुकुङ्कुमैः समैः ॥ ३३ ॥ गुडूच्या च कृतः कल्को हितो युक्तावच्छिन्ने ॥ उत्पाते

च शिले श्राव्ये शुष्कशोफे तथैव च ॥ ३४ ॥ क्षिप्रकारिणि दोषे च सद्यो विदलमिष्यते ॥ गोशकृन्मञ्जिकाकुष्ठरजनीतिलसर्षपैः ॥ ३५॥ गवां मूत्रेण पिष्टैश्च मर्दनं कण्डुनाशनम् ॥ शीतो मधुयुतः क्वाथो नासिकायां सशर्करः ॥ ३६ ॥ रक्तपित्तहरः पानादश्वकर्णे तथैव च ॥ सप्तमे सप्तमे देयमश्वानां लवणं दिने ॥ ३७ ॥ तथा भुक्तवतां देया प्रतिपाने तु वारुणी ॥ जीवनीयैः समधुरैर्मृद्वीकाशर्करायुतैः ॥ ३८ ॥ सापिप्पलीकैः शरदि प्रतिपानं सपद्मकैः ॥ विडंगपिप्पलीधान्यशताह्वालोध्रसैन्धवैः ॥ ३९ ॥ सचित्रकैस्तुरंगाणां प्रतिपानं हिमागमे ॥ लोध्रं प्रियङ्गुका मुस्ता पिप्पलीविश्वभेषजैः ॥ ४० ॥ सक्षौद्रैः प्रतिपानं स्याद्वसन्ते कफनाशनम् ॥ प्रियङ्गुपिप्पलीलोध्रयष्ट्याह्वैः समहौषधैः ॥ ४१ ॥ निदाघे सगुडा देया मदिरा प्रतिपानके ॥ लोध्रकाष्ठं सलवणं पिप्पल्यो विश्वभेषजम् ॥ ४२ ॥ भवेत्तैलयुतैरेभिः प्रतिपानं घनागमे ॥ निदाघोद्धतपित्ता ये शरत्सु पुष्टशोणिताः ॥ ४३ ॥ प्रावृड्भिन्नपुरीषाश्च पिबेयुर्वाजिनो घृतम् ॥ पिबेयुर्वाजिनस्तैलं कफवाय्वधिकास्तु ये ॥ ४४ ॥ स्नेहव्यापद्भवो येषां कार्य्यं तेषां विरूक्षणम् ॥ त्र्यहं यवागूरूक्षा स्याद्भोजनं तक्रसंयुतम् ॥ ४५ ॥ शरन्निदाघयोः सर्पिस्तैलं शीतवसन्तयोः ॥ वर्षासु शिशिरे चैव बस्तौ यमकमिष्यते ॥ ४६ ॥ गुर्वभिष्यान्दिभक्तानि व्यायामः स्नानमातपम् ॥ वायुवर्जं च वाहस्य स्नेहपीतस्य वर्जितम् ॥ ४७ ॥ स्नानं पानं सकृत्कुर्यादश्वानां सलिलागमे ॥ अत्यर्थं दुर्दिने काले पानमेकं प्रशस्यते ॥ ४८ ॥ युक्तशीतातपे काले द्विःपानं स्नपनं सकृत् ॥ ग्रीष्मे त्रिःस्नानपानं स्याच्चिरं तस्यावगाहनम् ॥ ४९ ॥ निस्तुषाणां प्रदातव्या यवानां च तुराढकी ॥ चणकव्रीहिमौद्गानि कलायं वापि दापयेत् ॥ ५० ॥ अहोरात्रेण चार्द्धस्या यवसस्य तुला दश ॥ अष्टौ शुष्कस्य दातव्याश्चतस्रोऽथ बुसस्य वा ( वपुष्मतः ) ॥ ५१ ॥ दूर्वा पित्तं यवः कासं बुसश्च श्लेष्मसञ्चयम् ॥ नाशयत्यर्जुनः श्वासं तथा माषो बलाक्षयम् ॥ ५२ ॥ वातिकाः पैत्तिकाश्चैव श्लेष्मजाः सान्निपातिकाः ॥ न रोगाः पीडयिष्यन्ति दूर्वाहारं तुरङ्गमम् ॥ ५३ ॥ द्वौ रज्जुबन्धौ दुष्टानां पक्षयोरुभयोरपि ॥ पश्चाद्बन्धश्च कर्त्तव्यो दूरकीलव्यपाश्रयः ॥ ५४ ॥ वासयेयुस्त्वास्तृते स्थाने कृतधूपनभूमयः ॥ यत्रोपन्यस्तयवसाः सप्रदीपाः सुरक्षिताः ॥ कृकवाकजकपयो धार्य्यांश्चाश्वगृहे मृगाः ॥ ५५ ॥ इत्यादिमहापुराणे आग्नेयेऽश्वलक्षणचिकित्सनं नामैकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥ अथाश्वशान्तिः ॥ शालिहोत्र उवाच ॥ अश्वशान्तिं प्रवक्ष्यामि वाजि-

रोगविमर्दनीम् ॥ नित्यां नैमित्तिकीं काम्यां त्रिविधां शृणु सुश्रुत ॥ १ ॥ शुभे दिने श्रीधरं च श्रियमुच्चैःश्रवाश्च तम ॥ हयराजं सम-
भ्यर्च्य सावित्रैर्जुहुयाद् घृतम् ॥ २ ॥ द्विजेभ्यो दक्षिणां दद्यादश्ववृद्धिस्तथा भवेत् ॥ आश्वयुक्शुक्लपक्षस्य पञ्चदश्यां च शान्तिकम् ॥
॥ ३ ॥ बहिःकुर्य्याद्विशेषेण नासत्यौ वरुणं यजेत् ॥ समुल्लिख्य ततो देवीं शाखाभिः परिवारयेत् ॥ ४ ॥ घटान्सर्वरसैः पूर्णान्दिक्षु दद्या-
त्सवस्त्रकान् ॥ यवाज्यं जुहुयात्प्राच्य यजेदश्वांश्च साश्विनान् ॥ ५ ॥ विप्रेभ्यो दक्षिणां दद्यान्नैमित्तिकमतः शृणु ॥ मकरादौ हयानां च
पद्मेर्विष्णुं श्रियं यजेत ॥ ६ ॥ ब्रह्माणं शङ्करं सोममादित्यं च तथाश्विनौ ॥ रेवन्तमुच्चैःश्रवसं दिक्पालांश्च दलेष्वपि ॥ ७ ॥ प्रत्येकं पूर्ण-
कुम्भैश्च वेद्यां तत्सौम्यतः स्थले ॥ तिलाक्षताज्यसिद्धार्थान्देवतानां शतं शतम् ॥ उपोषितेन कर्त्तव्यं कर्म चाश्वरुजापहम् ॥ ८ ॥
इत्यादिमहापुराणे आग्नेयेऽश्वशांतिकथनं नाम नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥ अथ गजशान्तिः ॥ शालिहोत्र उवाच ॥ गज-
शान्तिं प्रवक्ष्यामि गजरोगविमर्दिनीम् ॥ विष्णुं श्रियं च पञ्चम्यां नागमैरावतं यजेत् ॥ १ ॥ ब्रह्माणं शङ्करं विष्णुं शक्रं वैश्रवणं यमम् ॥
चन्द्रार्कौ वरुणं वायुमग्निं पृथ्वीं तथा च खम् ॥ २ ॥ शेषं शैलान्कुञ्जरांश्च ये तेऽष्टौ देवयोनयः ॥ विरूपाक्षं महापद्मं भद्रं सुमनसं तथा
॥ ३ ॥ कुमुदैरावणः पद्मः पुष्पदन्तोऽथ वामनः ॥ सुप्रतीकोऽञ्जनो नागा अष्टौ होमोऽथ दक्षिणाम् ॥ ४ ॥ गजाः शान्त्युदकैः सिक्ता
वृद्धौ नैमित्तिकं शृणु ॥ गजानां मकरादौ च ऐशान्यां नगराद्बहिः ॥ ५ ॥ स्थण्डिले कमले मध्ये विष्णुं लक्ष्मीं च केसरे ॥ ब्रह्माणं
भास्करं पृथ्वीं यजेत्स्कन्दं ह्यनन्तकम् ॥ ६ ॥ खं शिवं सोममिन्द्रादींस्तदस्त्राणि दले क्रमात् ॥ वज्रं शक्तिं च दण्डं च तोमरं पाशकं गदाम्
॥ ७ ॥ शूलं पद्मं बहिर्वृत्ते चक्रे सूर्यं तथाश्विनौ ॥ वसूनष्टौ तथा साध्यान्याम्येऽथ नैर्ऋते दले ॥ ८ ॥ देवानाङ्गिरसश्चान्यान्भृगूंश्च
मरुतोऽनिले ॥ विश्वान्देवांस्तथा दक्षे रुद्रान्रौद्रेऽथ मण्डले ॥ ९ ॥ वृत्तया रेखया तत्र देवान्वै बाह्यतो यजेत् ॥ सूत्रकारान्नृषीन्वार्णी
पूर्वादौ सरितो गिरीन् ॥ १० ॥ महाभूतानि कोणेषु ऐशान्यादिषु संयजेत् ॥ पद्मं चक्रं गदां शंखं चतुरस्रं तु मण्डलम् ॥ ११ ॥ चतु-
र्द्वारं ततः कुम्भानग्न्यादौ च पताकिकाः ॥ चत्वा ( तु ) रस्तोरणान्द्वारि नागानैरावतादिकान् ॥ १२ ॥ पूर्वादौ चौषधीभिश्च देवानां
भाजनं पृथक् ॥ पृथक्छताहुतीश्चाज्यैर्गजानर्च्य प्रदक्षिणम् ॥ १३ ॥ नागं वह्निं देवतादीन्चाश्रयेर्गमुः स्वकं पदम् ॥ द्विजेभ्यो दक्षिणां

दद्याद्धस्तिवैद्यादिकांस्तथा ॥१४॥ करिणीं तु समारुह्य वदेत्कर्णे तु कालवित् ॥ नागराजेमृते शान्तिं कृत्वा ऽ ( न्यास्मि ) मुष्मिन्नपेन्म-
नुम् ॥ १५ ॥ श्रीगजस्त्वं कृतो राज्ञा भवानस्य गजाग्रणीः ॥ गन्धमाल्याग्रभक्तैस्त्वां पूजयिष्याति पार्थिवः ॥ १६ ॥ लोकस्तदाज्ञया
पूजां कारिष्याति तदा नव ॥ पालनीयस्त्वया राजा युद्धेऽध्वनि तथा गृहे ॥ १७ ॥ तिर्य्यग्भावं समुत्सृज्य दिव्यं भावमनुस्मर ॥
देवासुरे पुरा युद्धे श्रीगजस्त्रिदशैः कृतः ॥ १८ ॥ ऐरावतमुतः श्रीमानरिष्टो नाम वारणः ॥ श्रीगजानां तु तत्तेजः सर्वमेवोपतिष्ठते ॥
॥ १९ ॥ तत्तेजस्तव नागेद्र दिव्यभावसमन्वितम् ॥ उपतिष्ठतु भद्रं ते रक्ष राजानमाहवे ॥२०॥ इत्येवमभिषिक्तं तमारोहेत शुभे नृपः ॥
तस्यानुगमनं कुर्य्युः सशस्त्रा नरपुङ्गवाः ॥ २१॥ शालास्वसौ स्थण्डिलेऽब्जे दिक्पालादीन्यजेद्बहिः ॥ केसरेषु बलं नागं भुवं चैव सरस्व-
तीम् ॥ २२ ॥ मध्ये तु डिण्डिमं प्राच्यं गन्धमाल्यानुलेपनैः ॥ हुत्वा दद्यात्तु कलशो रसपूर्णौ द्विजाय च ॥ २३ ॥ गजाध्यक्षं हास्तिपं
च गणितज्ञं च पूजयेत् ॥ गजाध्यक्षाय तं दद्यात डिण्डिमं सोऽपि वादयेत् ॥ शुभगम्भीरशब्दैः स्याज्जघनस्थोऽभिवादयेत् ॥ २४ ॥
इत्यादिमहापुराणे आग्नेये गजशान्तिकथनं नामैकनवत्यधिकद्विशततमोऽध्यायः॥२९१॥ अथ गवायुर्वेदः ॥ धन्वन्तरिरुवाच ॥ गोविप्रपा-
लनं कार्य्यं राज्ञा गोशान्तिमावदे ॥ गावः पवित्रा माङ्गल्या गोषु लोकाः प्रतिष्ठिताः ॥ १ ॥ शकृन्मूत्रं परं तासामलक्ष्मीनाशनं परम् ॥
गवां कण्डूयनं वारिदानं शृङ्गस्य मर्दनम् ॥२ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च रोचना ॥ षडङ्गं परमं पाने दुःस्वप्नाद्यानिवारणम् ॥३॥
रोचनाविषरक्षोघ्नी ग्रासदः स्वर्गगो गवाम् ॥ यद्गृहे दुःखिता गावः स याति नरकं नरः ॥ ४॥ परगोग्रासदः स्वर्गी गोहितो ब्रह्मलोकभाक् ॥
गोदानात्कीर्त्तनाद्रक्षां कृत्वा चोद्धरते कुलम् ॥ ५ ॥ गवां श्वासात्पवित्रा भूः स्पर्शनात्किल्बिषक्षयः ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः
कुशोदकम् ॥ ६ ॥ एकरात्रोपवासश्च श्वपाकमपि शोधयेत् ॥ सर्वाशुभविनाशाय पुराचरितमीश्वरैः ॥ ७॥ प्रत्येकं च त्र्यहाभ्यस्तं
महासान्तपनं स्मृतम् ॥ सर्वकामप्रदं चैतत्सर्वाशुभविमर्दनम् ॥ ८ ॥ कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिम् ॥ निर्मलाः सर्वकामास्या
स्वगर्गाः स्युर्नरोत्तमाः ॥ ९ ॥ त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं घृतं पिबेत् ॥ त्र्यहमुष्णं पयः पीत्वा वायुभक्षः परं त्र्यहम् ॥ १० ॥ तप्तकृ-
च्छ्रव्रतं सर्वपापघ्नं ब्रह्मलोकदम् ॥ शीतैस्तु शीतकृच्छ्रं स्याद्ब्रह्मोक्तं ब्रह्मलोकदम् ॥ ११ ॥ गोमूत्रेणाचरेत्स्नानं वृत्तिं कुर्य्याच्च

गोरसैः ॥ गोभिर्व्रजेच्च भुक्तासु भुञ्जीताथ च गोव्रती ॥ १२ ॥ मासेनैकेन निष्पापो गोलोकी स्वर्गगो भवेत् ॥ विद्यां च गोमतीं
जप्त्वा गोलोकं परमं व्रजेत् ॥ १३ ॥ गीतैर्नृत्यैरप्सरोभिर्विमाने तत्र मोदते ॥ गावः सुरभयो नित्यं गावो गुग्गुलुगन्धिकाः
॥ १४ ॥ गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं परम् ॥ अन्नमेव परं गावो देवानां हविरुत्तमम् ॥ १५ ॥
पावनं सर्वभूतानां क्षरन्ति च वहन्ति च ॥ हविषा मन्त्रपूतेन तर्पयन्त्यमरान्दिवि ॥ १६ ॥ ऋषीणामग्निहोत्रेषु गावो
होमेषु योजिताः ॥ सर्वेषामेव भूतानां गावः शरणमुत्तमम् ॥ १७ ॥ गावः पवित्रं परमं गावो माङ्गल्यमुत्तमम् ॥ गावः स्वर्गस्य
सोपानं गावो धन्याः सनातनाः ॥ १८ ॥ नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ॥ नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥
॥ १९ ॥ ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् ॥ एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति ॥ २० ॥ देवब्राह्मणगोसाधुसाध्वीभिः
सकलं जगत् ॥ धार्य्यते वै सदा तस्मात्सर्वे पूज्यतमा मताः ॥२१॥ पिबन्ति यत्र तत्तीर्थं गङ्गाद्या गाव एव हि ॥ गवां माहात्म्यमुक्तं हि
चिकित्सां च तथा शृणु ॥ २२ ॥ शृङ्गामयेषु धेनूनां तैलं दद्यात्ससैन्धवम् ॥ शृङ्गवेरबलामांसीकल्कसिद्धं समाक्षिकम् ॥ २३ ॥
कर्णशूलेषु सर्वेषु माञ्जिष्ठाहिङ्गुसैन्धवैः ॥ सिद्धं तैलं प्रदातव्यं रसोनेनाथ वा पुनः ॥ २४ ॥ बिल्वमूलमपामार्गं धातकी च सपाटला ॥
कुटजं दन्तमूलेषु लेपात्तच्छूलनाशनम् ॥ २५ ॥ दन्तशूलहरैर्द्रव्यैर्घृतं राम विपाचितम् ॥ मुखरोगहरं ज्ञेयं जिह्वारोगेषु सैन्धवम् ॥२६॥
शृङ्गवेरं हरिद्रे द्वे त्रिफला च गलग्रहे ॥ हृच्छूले बस्तिशूले च वातरोगे क्षये तथा ॥ २७ ॥ त्रिफला घृतमिश्रा च गवां पाने प्रश-
स्यते ॥ अतीसारे हरिद्रे द्वे पाठां चैव प्रदापयेत् ॥ २८ ॥ सर्वेषु कोष्ठरोगेषु तथा शाखागदेषु च ॥ शृङ्गवेरं च भार्ङ्गीं च कासे श्वासे
प्रदापयेत् ॥ २९ ॥ दातव्या भग्नसन्धाने प्रियङ्गुर्लवणान्विता ॥ तैलं वातहरं पित्ते मधुयष्टीविपाचितम् ॥ ३० ॥ कफे व्योषं च
समधु सपुष्करजोऽस्रजे ॥ तैलाज्यं हरितालं च भग्नक्षते शृतं ददेत् ॥ ॥ ३१ ॥ माषास्तिलाः सगोधूमाः पशुक्षीरं घृतं तथा ॥
एषां पिण्डी सलवणा वत्सानां पुष्टिदा त्वियम् ॥ ३२ ॥ बलप्रदा विषाणां स्याद्ग्रहनाशाय धूपकः ॥ देवदारु वचा मांसी गुग्गुलुर्हिङ्गु- ॥२०७॥
सर्षपाः ॥ ३३ ॥ ग्रहादिगदनाशाय एष धूपो गवां हितः ॥ घण्टा चैव गवां कार्य्या धूपेनानेन धूपिताः ॥३४॥ अश्वगन्धा तिलैः शुक्रं तेन

गोः क्षीरिणी भवेत् ॥ रसायनं च पिण्याकं मत्तो यो धार्य्यते गृहे ॥ ३५ ॥ गवां पुरीषे पञ्चम्यां नित्यं शान्त्यै श्रियं यजेत् ॥ वासुदेवं च
गन्धाद्यैरपरा शान्तिरुच्यते ॥ ३६ ॥ अश्वयुक्शुक्लपक्षस्य पञ्चदश्यां यजेद्धरिम् ॥ हरिरुद्रमजं सूर्य्यं श्रियमग्निं घृतेन च ॥ ३७ ॥
दधि सम्प्राश्य गाः पूज्य कार्य्यं वह्निप्रदाक्षिणम् ॥ वृषाणां योजयेद्युद्धं गीतवाद्यरवैर्बहिः ॥ ३८ ॥ गवां तु लवणं देयं ब्राह्मणानां च
दक्षिणाः ॥ नैमित्तिके माकरादौ यजेद्विष्णुं सह श्रिया ॥ ३९ ॥ स्थण्डिलेऽब्जे मध्यगते दिक्षु केसरगान्सुरान् ॥ सुभद्राजो रविः पूज्यो
बहुरूपो बलिर्बहिः ॥ ४० ॥ खं विश्वरूपा सिद्धिश्च ऋद्धिः शान्तिश्च रोहिणी ॥ दिग्धेनवो हि पूर्वाद्याः कृसरैश्चन्द्र ईश्वरः ॥ ४१ ॥
दिक्पालाः पद्मपत्रेषु कुम्भेष्वग्नौ च होमयेत् ॥ क्षीरवृक्षस्य समिधः सर्षपाक्षततण्डुलान् ॥ ४२ ॥ शतं शतं सुवर्णं च कांस्यादिकं
द्विजे ददेत् ॥ गावः पूज्या विमोक्तव्याः शान्त्यै क्षीरादिसंयुताः ॥ ४३ ॥ अग्निरुवाच ॥ शालिहोत्रः सुश्रुताय हयायुर्वेदमुक्तवान् ॥
पालकाप्योऽङ्गराजाय गजायुर्वेदमब्रवीत् ॥ ४४ ॥ इत्यादिमहापुराणे आग्नेये गवाऽऽयुर्वेदकथनं नाम द्विनवत्यधिकद्विशततमोऽ-
ध्यायः ॥ २९२ ॥ अथ मन्त्रपरिभाषा ॥ अग्निरुवाच ॥ मन्त्रविद्यामहं वक्ष्ये भुक्तिमुक्तिप्रदं शृणु ॥ विंशत्यर्णाधिका मन्त्रा मालामन्त्राः
स्मृता द्विज ॥ १ ॥ दशाक्षराधिका मन्त्रास्तदर्वाग्बीजसंज्ञिताः ॥ वार्द्धक्ये सिद्धिदा ह्येते मालामन्त्रास्तु यौवने ॥ २ ॥ पञ्चाक्षराधिका
मन्त्रा सिद्धिदाः सर्वदा परे ॥ स्त्रीपुंनपुंसकत्वेन त्रिधा स्युर्मन्त्रजातयः ॥ ३ ॥ स्त्रीमन्त्रा वह्निजायान्ता नमोऽन्ताश्च नपुंसकाः ॥ शेषाः
पुमांसस्ते शस्ता वश्योच्चाटनकेषु च ॥ ४ ॥ क्षुद्रक्रियामयध्वंसे स्त्रियोऽन्यत्र नपुंसकाः ॥ मन्त्रावाग्नेयसौम्याख्यौ ताराद्यन्तार्द्धयोर्ज-
पेत् ॥ ५ ॥ तारान्त्याग्निवियत्प्रायो मन्त्र आग्नेय इष्यते ॥ शिष्टः सौम्यः प्रशस्तौ तौ कर्मणोः क्रूरसौम्ययोः ॥ ६ ॥ आग्नेयमन्त्रः
सौम्यः स्यात्प्रायशोऽन्ते नमोऽन्वितः ॥ सौम्यमन्त्रस्तथाग्नेयः फट्कारेणान्ततो युतः ॥ ७ ॥ सुप्तः प्रबुद्धमात्रो वा मन्त्रः सिद्धिं न
यच्छति ॥ स्वापकालो महाबाहो जागरो दक्षिणावहः ॥ ८ ॥ आग्नेयस्य मनोः सौम्यमन्त्रस्यैतद्विपर्य्ययात् ॥ प्रबोधकालं जानीया-
दुभयोरुभयोरहः ॥ ९ ॥ दुष्टर्क्षराशिविद्वेषिवर्णादीन्वर्जयेन्मनून् ॥ राज्यलाभोपकाराय प्रारभ्यारिः स्वरः कुरून् ॥ १० ॥ गोपाल-
ककुटी प्रायात्पूर्णामित्युदिता लिपिः ॥ नक्षत्रेषु क्रमाद्योज्यौ स्वरान्त्यौ रेवतीयुजौ ॥ ११ ॥ वेला गुरुः स्वराः शोणः कर्मणेवेति भेदिता ॥

लिप्यर्णा वशिषु ज्ञेया षष्ठेशादींश्च योजयेत् ॥ १२ ॥ लिपौ चतुष्पथस्थाशामाल्यावर्णपदान्तराः ॥ सिद्धः साध्या द्वितीयस्थाः
सुसिद्धा वैरिणः परे ॥ १३ ॥ सिद्धादीन्कल्पयेदेवं सिद्धोत्यन्तगुणैरपि ॥ सिद्धे सिद्धो जपात्साध्यो जपपूजाहुतादिना ॥ १४ ॥ सुसिद्धो
ध्यानमात्रेण साधकं नाशयेदरिः ॥ दुष्टार्णप्रचुरो यः स्यान्मन्त्रः सर्वविनिन्दितः ॥ १५ ॥ प्रविश्य विधिवद्दीक्षामभिषेकावसानिकाम् ॥
श्रुत्वा तन्त्रं गुरोर्लब्धं साधयेदीप्सितं मनुम् ॥ १६ ॥ धीरो दक्षः शुचिर्भक्तो जपध्यानादितत्परः ॥ सिद्धस्तपस्वी कुशलस्तन्त्रज्ञः
सत्यभाषणः ॥ १७ ॥ निग्रहानुग्रहे शक्तो गुरुरित्याभिधीयते ॥ शान्तो दान्तः पटुश्चीर्णब्रह्मचर्य्यो हविष्यभुक् ॥ १८ ॥ कुर्वन्नाचार्य्य-
शुश्रूषां सिद्धोत्साही सशिष्यकः ॥ स तूपदेश्यः पुत्रश्च विनयी वसुदस्तथा ॥ १९ ॥ मन्त्रं दद्यात्सुसिद्धो तु सहस्रं देशिकं जपेत् ॥
यदृच्छया श्रुतं मन्त्रं छलेनाथ बलेन वा ॥२०॥ पत्रे स्थितं च गाथां च जनयेद्यद्यनर्थकम् ॥ मन्त्रं यः साधयेदेकं जपहोमार्चनादिभिः ॥
॥ २१ ॥ क्रियाभिर्भूरिभिस्तस्य सिध्यन्ति स्वल्पसाधनात् ॥ सम्यक्सिद्धैकमन्त्रस्य नासाध्यमिह किञ्चन ॥ २२ ॥ बहुमन्त्रवतः पुंसः
का कथा शिव एव सः ॥ दशलक्षजपादेकवर्णो मन्त्रः प्रसिध्यति ॥ २३ ॥ वर्णवृद्ध्या जपह्रासस्तेनान्येषां समूहयेत् ॥ बीजाद्द्वित्रिगुणा-
न्मन्त्रान्मालामन्त्रे जपक्रिया ॥२४॥ संख्यानुक्तौ शतं साष्टसहस्रं वा जपादिषु ॥ जपाद्दशांशं सर्वत्र साभिषेकं हुतं विदुः ॥२५ ॥ द्रव्या-
नुक्तौ घृतं होमे जपोऽशक्तस्य सर्वतः ॥ मूलमन्त्राद्दशांशः स्यादंगादीनां जपादिकम् ॥ २६ ॥ जपात्सशक्तिमन्त्रस्य कामदा मन्त्रदे-
वताः ॥ साधकस्य भवेत्तृप्ता ध्यानहोमार्चनादिना ॥ २७ ॥ उच्चैर्जपाद्विशिष्टः स्यादुपांशुर्दशभिर्गुणैः ॥ जिह्वाजपे शतगुणः सहस्रो
मानसः स्मृतः ॥ २८ ॥ प्राङ्मुखोऽवाङ्मुखो वापि मन्त्रकर्म समारभेत् ॥ प्रणवाद्याः सर्वमन्त्रा वाग्यतो विहिताशनः ॥ २९ ॥ आसी-
नस्तु जपेन्मन्त्रान्देवताचार्य्यतुल्यदृक् ॥ कुटी विविक्ता देशाः स्युर्देवालयनदीह्रदाः ॥ ३० ॥ सिद्धो यवागूपूपैर्वा पयो भक्ष्यं हविष्यकम् ॥
मन्त्रस्य देवता तावत्तिथिवारेषु वै जपेत् ॥ ३१ ॥ कृष्णाष्टमी चतुर्दश्योर्ग्रहणादौ च साधकः ॥ दस्रो यमोऽनलो धाता शशी रुद्रो ॥२०१॥
गुरुर्दितिः ॥ ३२ ॥ सर्पाः पितरोऽथ भगोऽर्यमा शीतेतरद्युतिः ॥ त्वष्टा मरुत इन्द्राग्नी मित्रेन्द्रौ निर्ऋतिर्जलम् ॥ ३३ ॥ विश्वेदेवा
हृषीकेशो वायवः सलिलाधिपः ॥ अजैकपादहिर्बुध्न्यः पूषाश्विन्यादिदेवताः ॥ ३४ ॥ अग्निर्वेधाउमानिघ्नो नागश्चन्द्रो दिवाकरः ॥

मातृदुर्गो दिशामीशः कृष्णो वैवस्वतः शिवः ॥ ३५ ॥ पञ्चदश्याः शशाङ्कस्तु पितरस्तिथिदेवताः ॥ हरो दुर्गा गुरुर्विष्णुर्ब्रह्मा लक्ष्मी-
धनेश्वरः ॥ ३६ ॥ एते सूर्य्यादिवारेशा लिपिन्यासोऽथ कथ्यते ॥ केशान्तेषु च वृत्तेषु चक्षुषोः श्रवणद्वये ॥ ३७ ॥ नासागण्डौष्ठदन्तेषु
द्वे द्वे मूर्द्धास्ययोः क्रमात् ॥ वर्णान्पञ्चसु वर्गाणां बाहुचरणसन्धिषु ॥ ३८ ॥ पार्श्वयोः पृष्ठतो नाभौ हृदये च क्रमान्न्यसेत् ॥ यादींश्च
हृदये न्यस्येदेषां स्युः सप्त धातवः ॥ ३९ ॥ त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवः ॥ रसाद्येश्च पयोन्तेश्च लिख्यन्ते च लिपीश्वरैः
॥ ४० ॥ श्रीकण्ठोऽनन्तसूक्ष्मो च त्रिमूर्त्तिरमरेश्वरः ॥ अर्ग्रीशो भावभूतिश्च तिथीशः स्थाणुको हरः ॥ ४१ ॥ दण्डीशो भौतिकः
सद्योजातश्चानुग्रहेश्वरः ॥ अक्रूरश्च महासेनः शरण्या देवता अमूः ॥ ४२ ॥ ततः क्रोधीशचण्डौ च पञ्चान्तकशिवोत्तमौ ॥ तथैव
रुद्रकूर्मौ च त्रिणेत्रश्चतुराननः ॥ ४३ ॥ अजेशशर्मासोमेशौ तथा लाङ्गलिदारुकौ ॥ अर्द्धनारीश्वरश्चोमा कान्तश्चाषाढिदण्डिनौ ॥ ४४ ॥
अत्रिर्मीनश्च मेषश्च लोहितश्च शिखी तथा ॥ छगलण्डद्विरण्डौ द्वौ समहाकालवालिनौ ॥ ४५ ॥ भुजङ्गश्च पिनाकी च खङ्गीशश्च बकः
पुनः ॥ श्वेतो भृगुर्गुडीशाक्षाः क्षयः संवर्त्तकः स्मृतः ॥ ४६ ॥ रुद्रान्सशक्तांल्लिख्यादीन्नमोऽन्तान्विन्यसेत्क्रमात् ॥ अंगानि विन्यसेत्सर्वे
मन्त्राः सांगास्तु सिद्धिदाः ॥ ४७ ॥ हृल्लेखाव्योमसंपूर्वाण्येतान्यंगानि विन्यसेत् ॥ हृदादीन्यङ्गमन्त्रान्तैर्योजयेद्धृदयं नमः ॥ ४८ ॥
स्वाहा शिरस्यथ वषट् शिखायां कवचे च हूम् ॥ वौषण्नेत्रेऽस्त्राय फट् स्यात्पञ्चाङ्गं नेत्रवर्जितम् ॥ ४९ ॥ निरङ्गस्यात्मना चाङ्गं न्य-
स्येतं नियुतं जपेत् ॥ क्रमेण देवीं वागीशांश्चयोक्तांस्तु तिलान्हुनेत् ॥ ५० ॥ लिपिदेवी साक्षसूत्रकुम्भपुस्तकपद्मधृक् ॥ कवित्वादि
प्रयच्छेत कर्मादौ सिद्धये न्यसेत् ॥ निष्कविर्निर्मलः सर्वे मन्त्राः सिध्यन्ति मातृभिः ॥ ५१ ॥ इत्यादिमहापुराणे आग्नेये मन्त्रपरिभाषा
नाम त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥ अथ सर्पलक्षणानि ॥ अग्निरुवाच ॥ नागादयोऽथ भावादिदशस्थानानि कर्म च ॥
सूतकं दष्टचेष्टेति सप्तलक्षणमुच्यते ॥ १ ॥ शेषवासुकितक्षाख्याः कर्कटोऽब्जो महाम्बुजः ॥ शंखपालश्च कुलिक इत्यष्टौ नागवर्य्यकाः
॥ २ ॥ दशाष्टपञ्चत्रिगुणशतमूर्द्धान्वितौ क्रमात् ॥ विप्रौ नृपौ विशौ शूद्रौ द्वौ द्वौ नागेषु कीर्त्तितौ ॥ ३ ॥ तदन्वयाः पञ्चशतं तेभ्यो
जाता असंख्यकाः ॥ फणिमण्डलिराजीलवातपित्तकफात्मकाः ॥ ४ ॥ व्यन्तरा दोषमिश्रास्ते सर्पा दर्वीकराः स्मृताः ॥ रथाङ्गलांग-

लच्छत्रस्वस्तिकाङ्कुशधारिणः॥ ५ ॥ गोनसा मन्दगा दीर्घा मण्डलैर्विविधैश्चिताः ॥ राजिलाश्चित्रिताः स्निग्धास्तिर्य्यगूर्ध्वं च वाजिभिः ॥
॥ ६ ॥ व्यन्तरा मिश्रचिह्नाश्च भूवर्षाग्नेयवायवः ॥ चतुर्विधास्ते षड्विंशभेदा षोडशगोनसाः ॥ ७ ॥ त्रयोदश च राजीला व्यन्तरा एक-
विंशतिः ॥ येऽनुक्तकाले जायन्ते सर्पास्ते व्यन्तराः स्मृताः ॥ ८ ॥ आषाढादित्रिमासैः स्याद्गर्भो मासचतुष्टये ॥ अण्डकानां शते द्वे
च चत्वारिंशत्प्रसूयते ॥ ९ ॥ सर्पा ग्रसन्ति सूतौघान्विना स्त्रीपुन्नपुंसकान् ॥ उन्मीलिताक्षि सप्ताहात्कृष्णो मासाद्भवेद्बहिः ॥ १० ॥
द्वादशाहात्सुबोधः स्याद्दन्ताः स्युः सूर्य्यदर्शनात् ॥ द्वात्रिंशद्दिनविंशत्या चतस्रस्तेषु दंष्ट्रिकाः ॥ ११ ॥ कराली मकरी कालरात्री च
यमदूतिका ॥ एतास्ताः सविषा दंष्ट्रा वामदक्षिणपार्श्वगाः ॥ १२ ॥ षण्मासान्मुच्यते कृत्तिं जीवेत्षष्टिसमाद्वयम् ॥ नागाः सूर्य्यादिवा-
रेशाः सप्त उक्ता दिवा निशि ॥ १३ ॥ स्वेषां षट् प्रतिवारेषु कुलिकः सर्वसन्धिषु ॥ शङ्खेन वा महाब्जेन सह तस्योदयोऽथवा ॥ १४ ॥
द्वयोर्वा नाडिकामात्रमन्तरं कुलिकोदयः ॥ दुष्टः स कालः सर्वत्र सर्पदंशे विशेषतः ॥ १५ ॥ कृत्तिका भरणी स्वाती मूलं पूर्वत्रया-
श्विनी ॥ विशाखार्द्रा मघाश्लेषा चित्रा श्रवणरोहिणी ॥ १६ ॥ हस्तो मन्दकुजौ वारौ पञ्चमी चाष्टमी तिथिः ॥ षष्ठी रिक्ता शिवा निन्द्या
पञ्चमी च चतुर्दशी ॥ १७ ॥ सन्ध्याचतुष्टयं दुष्टं दग्धयोगाश्च राशयः ॥ एकद्विबहवो दंशा दष्टं विद्धं च खण्डितम् ॥ १८ ॥ अदंशम-
वगुप्तं स्याद्दंशमेव चतुर्विधम् ॥ त्रयो द्व्येकक्षता दंशा वेदना रुधिरोल्बणा ॥ १९ ॥ नक्तन्त्वेकाङ्घ्रिकूर्माभा दंशाश्च यमचोदिताः ॥
दाही पिपीलिकास्पर्शी कण्ठशोथरुजान्वितः ॥ २० ॥ सतोदो ग्रन्थितो दंशः सविषो न्यस्तनिर्विषः ॥ देवालये शून्यगृहे वल्मीको-
द्यानकोटरे ॥ २१ ॥ रथ्यासन्धौ श्मशाने च नद्यां च सिन्धुसंगमे ॥ द्वीपे चतुष्पथे सौधे गृहेऽब्जे पर्वताग्रतः ॥ २२ ॥ बिलद्वारे जीर्ण-
कूपे जीर्णवेश्मनि कुड्यके ॥ शिग्रुश्लेष्मातकाक्षेषु जम्बूदुम्बरवेणुषु ॥ २३ ॥ वटे च जीर्णप्राकारे खास्यहृत्कक्षजत्रुणि ॥ तालौ शंखे
गले मूर्ध्नि चिबुके नाभिपादयोः ॥ २४ ॥ दंशोऽशुभः शुभो दूतः पुष्पहस्तः सुवाक्सुधीः ॥ लिङ्गवर्णसमानश्च शुक्लवस्त्रोऽमलः शुचिः ॥२०२५॥
॥ २५ ॥ अपद्वारगतःशस्त्री प्रमादी भूगतेक्षणः ॥ विवर्णवासाः पाशादिहस्तो गद्गदवर्णभाक् ॥ २६ ॥ शुष्ककाष्ठाश्रितः खिन्नस्तिला-
क्तककरांशुकः ॥ आर्द्रवासाः कृष्णरक्तपुष्पयुक्ताशिरोरुहः ॥ २७ ॥ कुचमर्दी नखच्छेदी गुदस्पृक्पादलेखकः ॥ केशमुञ्ची तृणच्छेदी

दुष्टा दूतास्तथैकशः ॥ २८ ॥ इडान्या वा वहेद्वेधा यदि दूतस्य चात्मनः ॥ आभ्यां द्वाभ्यां पुष्ट्यास्मान्विद्यात्स्त्रीपुत्रपुंसकान् ॥ २९ ॥ दूतः स्पृशति यद्गात्रं तस्मिन्दंशमुदाहरेत् ॥ दूताङ्घ्रिचलनं दुष्टमुत्थितिर्निश्चला शुभा ॥ ३० ॥ जीवपार्श्वे शुभो दूतो दुष्टोऽन्यत्र समागतः ॥ जीवो गतागतैर्दुष्टः शुभो दूतनिवेदने ॥ ३१ ॥ दूतस्य वाक्प्रदुष्टा सा पूर्वामज्जार्द्धनिन्दिता ॥ विभक्तैस्तस्य वाक्यान्तैर्विषानिर्विषकालता ॥ ३२ ॥ आद्यैः स्वरैश्च काद्यैश्च वर्णैर्भिन्नलिपिर्द्विधा ॥ स्वरजो वसुमान्वर्गी इति ज्ञेया च मातृका ॥ ३३ ॥ वाताग्नीन्द्रजलात्मानो वर्गेषु च चतुष्टयम् ॥ नपुंसकाः पञ्चमाः स्युः स्वराः शक्राम्बुयोनयः ॥ ३४ ॥ दुष्टौ दूतस्य वाक्पादौ वाताग्नी मध्यमो हरिः ॥ प्रशस्ता वारुणा वर्णा अतिदुष्टा नपुंसकाः ॥ ३५ ॥ प्रस्ताने मङ्गलं वाक्यं गर्जितं मेघहस्तिनोः ॥ प्रदक्षिणं फले वृक्षे वामस्य च रुतं जितम् ॥ ३६ ॥ शुभा गीतादिशब्दाः स्युरीदृशं स्याद्धि सिद्धये ॥ अनर्थगीस्थाकन्दो दक्षिणे विरुतं क्षुतम् ॥ ३७ ॥ वेश्या क्षुतो नृपाः कन्या गौर्दन्ती मुरजध्वजौ ॥ क्षीराज्यदधिशङ्खाम्बु च्छत्रं भेरी फलं सुराः ॥ ॥ ३८ ॥ तण्डुला हेम रूप्यं च सिद्धयेऽभिमुखा अमी ॥ सकाष्ठः सानलः कारुर्मलिनाम्बरभारभृत् ॥ ३९ ॥ गलस्थटङ्को गोमायुगृध्रोलूककपर्दिकाः ॥ तैलं कपालकार्पासा निषेधे भस्म नष्टये ॥४०॥ विषरोगाश्च सप्त स्युर्धातोर्धात्वन्तरापितः ॥ विषदंशो ललाटं यात्यतो नेत्रं ततो मुखम् ॥ आस्याच्च वचनीनाड्यो धातून्प्राप्नोति हि क्रमात् ॥ ४१ ॥ इत्यादिमहापुराणे आग्नेये सर्पलक्षणं नाम चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥ अथ दष्टचिकित्सा ॥ अग्निरुवाच ॥ मन्त्रध्यानौषधैर्दष्टचिकित्सां प्रवदामि ते ॥ ओं नमो भगवते नीलकण्ठायेति ॥ जपनाद्विषहानिः स्यादौषधं जीवरक्षणम् ॥ १ ॥ साज्यं सकृद्रसं पेयं द्विविधं विषमुच्यते ॥ जङ्गमं सर्पमूषादि शृङ्गादि स्थावरं विषम् ॥ २ ॥ शान्तस्वरान्विता ब्रह्मा लोहितं तारकं शिवः ॥ वियतेर्नाममन्त्रोऽयं तार्क्ष्यः शब्दमयः स्मृतः ॥ ३ ॥ ओं ज्वल महामते हृदयाय गरुडविरालशिरसे गरुडशिखायै गरुड विषभञ्जन प्रभेदन प्रभेदन वित्रासय वित्रासय विमर्दय विमर्दय कवचाय अप्रतिहतशासनं वं हुं फट् अस्त्राय उग्ररूपधारक सर्वभयङ्कर भीषय सर्वं दह दह भस्मीं कुरु कुरु स्वाहा नेत्राय ॥ सप्तवर्गान्तयुग्माष्टदिग्दलस्वरकेसरादिवर्णरुद्धं वह्निराभूतकर्णिकं मातृकाम्बुजम् ॥ कृत्वा हृदिस्थं तन्मन्त्री वामहस्ततले स्मरेत् ॥ अङ्गुष्ठादीन्

न्यसेद्वर्णान्वियतेर्भेदिताः कलाः ॥ ४ ॥ पीतं वज्रचतुष्कोणं पार्थिवं शक्रदेवतम् ॥ वृत्तार्द्धमाप्य पद्मार्द्धं शुक्लं वरुणदेवतम् ॥ ५ ॥ त्र्यस्रं ( स्रं ) स्वस्तिकयुक्तं च तैजसं वह्निदेवतम् ॥ वृत्तं बिन्दुवृतं वायुदेवतं कृष्णमालिनम् ॥ ६ ॥ अङ्गुष्ठाद्यङ्गुलीमध्ये पर्य्यस्तेषु स्ववेश्मसु ॥ सुवर्णनागवाहेन वेष्टितेषु न्यसेत्क्रमात् ॥ ७ ॥ वियतेश्चतुरो वर्णान्सुमण्डलसमत्विषः ॥ अरूपे स्वतन्मात्रे चाकाशे शिवदैवते ॥ ८ ॥ कनिष्ठामध्यपर्वस्थे न्यसेत्तस्याद्यमक्षरम् ॥ नागानामादिवर्णांश्च स्वमण्डलगतान्न्यसेत् ॥ ९ ॥ भूतादिवर्णान्विन्यसेदङ्गुष्ठाद्यन्तपर्वसु ॥ तन्मात्रादिगुणाभ्यर्णानङ्गुलीषु न्यसेद्बुधः ॥ १० ॥ स्पर्शनादेव तार्क्ष्येण हस्ते हन्याद्विषद्वयम् ॥ मण्डलादिषु तान्वर्णान्वियतेः कवयो जितान् ॥ ११ ॥ श्रेष्ठं व्यङ्गुलिभिर्देहनाभिस्थानेषु पर्वसु ॥ आजानुतः सुवर्णाभमानाभेस्तुहिनप्रभम् ॥ १२ ॥ कुङ्कुमारुणमाकण्ठादाकेशान्तात्सितेतरम् ॥ ब्रह्माण्डव्यापिनं तार्क्ष्यं च न्द्राख्यं नागभूषणम् ॥ १३ ॥ नीलोग्रनासमात्मानं महापक्षं स्मरेद्बुधः ॥ एवं तार्क्ष्यात्मनो वाक्यान्मन्त्रः स्यान्मन्त्रिणो विषे ॥ १४ ॥ मुष्टिस्तार्क्ष्यकरस्यान्तःक्षिप्ताङ्गुष्ठविषापहा ॥ तार्क्ष्यं हस्तं समुद्यम्य तत्पञ्चाङ्गुलिचालनात् ॥ १५ ॥ कुर्य्याद्विषस्य स्तम्भादींस्तदुक्तमदवीक्षया ॥ आकाशादेषभूबीजः पञ्चार्णाधिपातिर्मनुः ॥ १६ ॥ संस्तम्भयेऽतिविषतो भाषया स्तम्भयेद्विषम् ॥ व्यत्यस्तभूषया बीजो मन्त्रोऽयं साधुसाधित : ॥ १७ ॥ संप्लवप्लावय यमः शब्दाद्यः संहरोद्विषम् ॥ दण्डमुत्थापयेदष भुजङ्गाम्भोऽभिषेकतः ॥ १८ ॥ भुजङ्गशंखभेर्य्यादिनिःस्वनश्रवणेन वा ॥ संदेहत्येव संयुक्तो भूतेजोव्यत्ययात्स्थितः ॥ १९ ॥ भूवायुव्यत्ययान्मन्त्रो विष संक्रामयत्यसौ ॥ अन्तःस्थो निजवेश्मस्थो त्रीजाग्नीन्दुजलात्मभिः ॥ २० ॥ एतत्क्रमं नयेन्मन्त्री गरुडाकृतिविग्रहः ॥ तार्क्ष्यवरुणगेहस्थस्तज्जपान्नाशयेद्विषम् ॥ २१ ॥ श्रीजानुदण्डीमुदितं स्वधाश्रीबीजलाञ्छितम् ॥ स्नानपानात्सर्वविषं ज्वररोगापमृत्युजित् ॥ २२ ॥ पक्षि पक्षि महापक्षि महापक्षि वि वि स्वाहा ॥ पक्षि पक्षि महापक्षि महापक्षि क्षि क्षि स्वाहा ॥ द्वावेतौ पक्षिराण्मन्त्रौ विषघ्नावभिमन्त्रणात् ॥ पक्षिराजाय विद्महे पक्षिदेवाय धीमहि तन्नो गरुडः प्रचोदयात् ॥ वह्निस्थौ पार्श्वतत्पूर्वौ दन्तश्रीकौ च दण्डिनौ ॥ २३ ॥ सकाली लाङ्गली चेति नीलकण्ठाद्यमीरितम् ॥ वक्षःकण्ठशिखास्वेतं न्यसेत्स्तम्भे सुसंस्कृतो ॥ २४ ॥
हर हर हृदयाय नमः कपर्दिने च शिरसि नीलकण्ठाय वै शिखां कालकूटविषभक्षणाय स्वाहा ॥ अथ वर्मे च कण्ठे नेत्रे [illegible]

